॥ ૐ ॥

નમઃ લબ્ધિનિધાનાય શ્રીગૌતમસ્વામિને

અમદાવાદ--ઝાંપડાની પોળ-નિવાસી

**શેઠ મોહનલાલ છોટાલાલ તરફથી**

તેમનાં ધર્મપત્ની

**માણેકબાઇએ**

નવપદજીની ઓળી

જ્ઞાન પંચમી, મૌન એકાદશી, વીશ-સ્થાનક અને રોહિણીના તપ કરેલા

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિનિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે. વિક્રમ સં. ૧૯૮૫

णमोऽणंतचउक्कसिद्धाणं ॥

श्रीमन्निर्ग्रन्थगच्छक्रमानुगतश्रीमत्तपागच्छकल्पद्रुमूलभूताचार्यश्रीमज्जगच्चंद्रसूरीन्द्राणामन्तेपित्कर्म्मग्रन्थनिर्मातृप्रसन्नरत्नौ
सौधस्तंभायमानश्रीमद्देवेन्द्रसूरिवरविरचितं स्वोपज्ञविवरणसमेतं—

# श्रीश्राद्धदिनकृत्यसूत्रम्

## (प्रथमो विभागः)


प्रकाशयित्री—मालवदेशान्तर्गतरत्नपुरीयश्रेष्ठि ऋषभदेवजी केशरीमलजी जैनश्वेताम्बरसंस्था ।

मुद्रकः—मुद्रितं चैतत् सूर्यपुरनिवासिश्रेष्ठिमग्नलालतनुजनुषा फकीरचन्द्रेण स्वकीये 'श्रीजैनविजयानंद' मुद्रणालये ।

प्रथमसंस्करणम्
प्रतयः ५००

पण्यम्
रु० ३-१२-०

वीरसंवत् २४६४
विक्रमसंवत् १९९४

## — श्रीश्राद्धदिनकृत्यवृत्तेरुपक्रमः —

यद्यपि श्रीआचारांगाद्यागमेषु धर्मं द्विधा विभज्य अनगारव्यतिरिक्तानां धर्मोऽगारिधर्मतया सम्यक्त्वमूलकद्वादशव्रतरूपः प्रतिपादितः परं तत्रानगाराणां महत्त्वदर्शनायागारिशब्दप्रयोगः स्यात् , किंच–सम्यक्त्वरहितानामपि दयादानादिधर्मस्य सत्त्वमभिप्रेत्यापि स्यात्तदुदितिः, तथा च मिथ्यादृशामप्यभिनवश्रेष्ठ्यादीनां दानप्रशंसासंगतिः, अभिगतजीवाजीवादीनामगारिणां तु वाचकतया रूढः श्रमणोपासकशब्दः, अत एव लेपाधिकारे जिनपर्षदधिकारे च तस्य बहुधा प्रयोगः, उभयसान्ध्यानुष्ठानप्रसंगे अभिनवधर्मिप्रसंगे दानरुचिप्रसंगे च 'समणेण सावएण ये'त्यादिवच्छ्रावकशब्दप्रयोगः, साध्वाचारनैपुण्ययुक्ततया विचक्षणे 'संतेगइया सड्ढा' इत्याचारांगाद्युक्तिष्विव श्राद्धशब्दप्रयोगः, एवं विविधार्थाभिप्रायेण विविधशब्दप्रयोगेऽपि रूढ्या श्रमणोपासकश्रावकश्राद्धादिशब्दा अविशेषेण परस्परं पर्यायतामादधते इति ग्रन्थोऽयं अगारिधर्मादिदेशकोऽपि श्राद्धदिनकृत्यनाम्ना विहितः सुविहितशिरोमणिभिः श्रीदेवेन्द्रसूरिभिः, दिनशब्दस्याहोरात्रवाचकत्वेनाहोरात्रचर्यायाः कथनेऽपि न क्षतिः, श्राद्धविध्यादिवत् पर्वादिकृत्यानामुक्तावपि न पार्थक्येनोक्तानीति न दिनकृत्यत्वक्षतिः, साधूनामाचारस्यापि प्रसंगत एवोक्तेः श्राद्धदिनकृत्यत्वमव्याहतं, चैत्यभक्तिजीर्णोद्धारशासनप्रभावनास्वाध्यायभाववात्सल्यकुटुम्बदेशनादीनि प्रकरणानि पूज्यपादैरनुपमतयाऽत्र प्रणीतानीति तु विचक्षणैर्वाचनयैवात्रास्वाद्यानि, ग्रन्थकाराश्चैते श्रीजैनशासनाविच्छिन्नपरम्पराशास्त्रोक्त्यानुकूल्यधारणप्रवणश्रीमत्तपोगच्छधुरन्धराः, विशेषस्त्वेषां श्रीसंघाचारभाष्योपक्रमाद् ज्ञेयः, याचित्वा क्षमायै विदुषः समाप्यते इदः श्रीश्रमणसंघसेवकेनानन्दसागरेण.

१४६४ आश्विनपूर्णिमायां श्रीसिद्धक्षेत्रे.

# श्रीश्राद्धदिनकृत्यस्य सटीकस्य प्रथमभागे विषयक्रमः

नमः सिद्धेभ्यः


| गाथाङ्कः | विषयः | पत्राङ्कः |
|---|---|---|
| | प्रथमः प्रस्तावः | |
| १ | वृत्तिकृत्कृतं मंगलं (श्रीवर्द्धमानप्रभोः सूर्योपमा) | १ |
| | ग्रन्थकारमंगलं (अभिधेयादि) | |
| | सुमहानिधाने चंडकौशिकदृष्टान्तः | २ |
| २–७ | श्रावकदिनकृत्ये अष्टाविंशतिर्द्वाराणि | ७ |
| | दिनकृत्यानां पिण्डार्थः | ८ |
| | प्रथमं द्वारं | ,, |
| | 'नमस्कारेण विबोधः' | १० |
| ८ | नमस्कारपठनसमयः, तद्योग्यजनलक्षणानि च | ,, |
| | धर्मरतयोग्यपुरुषलक्षणानि | ,, |
| ९ | नमस्कारपठनविधिः | ११ |
| १० | नमस्कारमाहात्म्यम् | १२ |
| ११ | भवसागरे तस्य पोतत्वं | १२ |
| १२ | महामंत्रता नमस्कारस्य | ,, |
| १३-१४ | नमस्कारादरख्यापनार्थमावश्यकादिसूत्रसाक्षी | ,, |
| १५ | नमस्कारहेतुः | १३ |
| १६ | नमस्कारं विना त्रिलोकेऽन्यो मंत्रः कोऽपि नास्ति | ,, |
| १७ | विधिना पठ्यमानोऽयं सुखदो भवति (तद्दृष्टान्तः) | ,, |
| | नमस्कारसूत्रं | १४ |
| | तद्व्याख्या ससाक्षिका | ,, |
| १८ | नमस्कारपठनफलानि | ,, |
| | ऐहिकामुष्मिकफलप्रदर्शने | ,, |
| | पुलिन्द्रमिथुनकदृष्टान्तः ऐहिकफले | ,, |
| | राजसिंहकथा | १५ |
| | त्रिदण्डिनः कथा | १९ |

सादिव्यं श्राद्धसुतायाः २१
मातुलिंगवनकथा २३
आमुष्मिकफले चंडपिंगलस्य कथा २५
हुण्डिकयक्षवर्णनं २६
द्वितीयं द्वारं
१९ श्रावकोऽहमित्यनुसरणम् ३३
श्राद्धेन द्रव्यादिस्मरणं (प्रबोधसमये) ३३
तृतीयं व्रतद्वारं
२० व्रतानि ३४
श्राद्धव्रतभंगाः ,,
२१ तुर्यं 'योग'द्वारं ३९
तपोमहिमा ,,
तिथितपः ,,
पाण्मासिकतपःकायोत्सर्गचिंता ३९
२२ विचिंत्यैवं प्रत्याख्यानक्रिया ,,
पंचमं द्वारं ३९
तत्र द्रव्यपूजाधिकारः(१) ,,
२३-२४ अंगप्रक्षालनादिविधिः ,,
अविराधनायां कूपदृष्टान्तः ४०
२५-२६ पूजनविधिः ,,
अष्टप्रकारा पूजा ,,
२७ पूजाफलम् ४१
२८ पूजायां दृष्टान्ताः
स्थविरायाः ,,
कुरुनृपस्य (अप्रतीता) ४६
सुव्रतस्य (अष्टप्रकारायां) ,,
जिनशेखरस्य (अप्रतीता) ४९
सत्यकेः (तीर्थंकरलाभः) ,,
वासुदेवस्य (अग्रे) ५०
नारदस्य ,,
महायशसः ,,
अथ भावपूजाधिकारः(२) ,,
२९ भावपूजाप्रस्तावना
मुद्रात्रिकम्
जिनवंदनप्रकाराः ५१
ईर्यापथिकीप्रतिक्रमणं
तत्सूत्रार्थौ
'मिच्छामि दुक्कडं' व्याख्या, ५२
तत्र मृगावतीदृष्टान्तः
'तस्सउत्तरी' पठनहेतुः ५३
तत्सूत्रार्थौ
'अन्नत्थ' पठनहेतुः सूत्रार्थौ च ,,
ईर्यापथिकीसंपदः ५४
३०,३१ प्रथमप्रणिपातदंडकपठन-विधिः (अधि० २) ५४

शक्रस्तवार्थः (तन्मुद्रा)
जिनानां धर्मसारथित्वे ५६
मेघकुमारवृत्तं
त्रिकालवर्तिद्रव्यार्हद्वंदना ५९
नरकादिगतद्रव्यार्हद्वंद्यतासिद्धिः
द्रव्यार्हद्वंदने भरतः
२३ द्वितीयचैत्यस्तवदंडकविधिः (अधि० ३) ६०
तन्मुद्रा
चैत्यस्तवव्याख्या
सत्कारे श्रीदशार्णभद्रः ६१
तद्दंडकसंपदः ६३
३३ कायोत्सर्गे दोषवर्जनोपदेशः ,,
३४,३५ कायोत्सर्गदोषाः ६४
तत्स्वरूपं (तृतीयदंडकः)
चतुर्विंशतिस्तवव्याख्या (अधि० ४)
ऋषभादिनामान्वर्थता
'समाधिवरं' भावसमाधिः
तत्र जिनदत्ताख्यानं ६७
९सर्वलोकस्थापनाऽर्हत्स्तवाधिकारः चतुर्थो दंडकः ६८
श्रुतस्तवव्याख्या (७ अधि०) ६८
प्रमादे अशकटाख्यानं पंचमदंडकः ६९
सिद्धस्तवव्याख्या (अधि० ८)
जो देवाणऽवि देवो(अधि० ९) ७२
'उज्जितसेल' (अधि० १०) ७३
तस्याः गाथाया उत्थानं ७३
'चत्तारि अठ्ठ'गाथा (अधि० ११)
अष्टापदे श्रीगौतमस्वामिनमनसंप्रदायकथा ७३
'वेयावच्चगराणं' व्याख्या(१२)७५
तत्पठनहेतुः
प्रणिधानसूत्रव्याख्यामुद्रादि ७५
लोकविरुद्धत्यागस्पष्टता
३६ चैत्यवंदनद्वारोपसंहारः ७६
षष्ठं द्वारं प्रत्याख्यानं ७६
गृहबिंबानि विधिना वंदित्वा श्रावको देवसाक्षिकं प्रत्याख्यानं गृह्णीयात्


इति द्वारषट्कवर्णनः प्रथमः प्रस्तावः समाप्तः

* द्वितीयः प्रस्तावः *

सप्तमं चैत्यगृहगमनद्वारं ७६
३७,३८ चैत्यगृहगमनविधिः ,,
३९—४४ शासनप्रभावना ७७
शासनप्रभावनाया हेतुः ,,
४५ प्रभावनाफलं ७८
बोधिप्राप्तौ स्तेनवृत्तान्तः ,,
४६ तीर्थप्रभावनायाः सर्वोत्तमं फलं ८०
विंशतिस्थानकनामानि ८०
प्रभावनायां कृष्णश्रेणिक-
ज्ञाते, तत्र—
श्रीकृष्णज्ञातं ८१-१४१
श्रीश्रेणिकज्ञातं १४२-१८८

श्रीकृष्णचरित्रे विषयक्रमः

वासुदेवपूर्वभवाः (नंदिषेणमुनिः) ८१
नंदिषेणाभिग्रहः ८२
कंसजन्मः ८२
जीवयशउद्वाहनं ८३
वसुदेवस्य परदेशगमनं ८३
वसुदेवहिण्डनं ८४
अनेकराजकन्योपादानं ८४
चारुदत्तवृत्तं ८४
रोहिणीपरिणनयनं ८८
युद्धं ८८
समुद्रविजयपादप्रणामः ८८
कृष्णबलदेवपूर्वभवाः
(ललितगंगदत्तौ) ८९
नारदवृत्तं ९०
देवक्युपादानं ९१
कंसस्य भावी वधकः ९१
सुलसाराधनं ९१
कृष्णजन्म ९१
गोपूजोत्थानं ९२
नेमिपूर्वभवाः ९१
धनधनवत्यौ १ ९२
चित्रगतिविचित्रवत्यौ ३ ९३
अपराजितप्रीतिमत्यौ५ ९६
शंखयशोमत्यौ ९८
नेमिप्रभोर्जन्म १००

जिनजन्ममहोत्सवः १०१
कंसवधः १०८
द्वारिकानिर्माणं १११
यादवनिवसनं १११
कृष्णाग्रमहिष्यः ११२
प्रद्युम्नहरणं ११२
पांडवपरंपरा ११३
द्रौपदीपूर्वभवाः ११८
प्रद्युम्नागमनं ११९
जरासंधयुद्धं १२०
कृष्णजयः १२०
राजिमत्या जन्म १२१
कमलामेला १२१
श्रीनेमेः शंखधमनं १२२
श्रीनेमेः विवाहः १२२
,, प्रत्यागमनं १२२
,, लोकान्तिकविज्ञप्तिः १२२
,, दीक्षामहोत्सवः १२३
,, केवलज्ञानं १२४
,, समवसरणं १२४
,, कृष्णस्तुतिः १२४
जिनदेशना १२५
द्रौपदीहरणं १२६
गजसुकुमालवृत्तं १२७
कृष्णस्य गुणग्राहता १२८
यादवदीक्षा १२८
कृष्णस्य चातुर्मासीबहिर्गमननिषेधः १२९
कन्याप्रव्राजनं १२९
वीरकवृत्तं १२९
कृष्णभाववंदनं १३०
ढंढणर्षिः १३०
रथनेमिराजिमतिसंवादः १३१
थावच्चापुत्रवृत्तं १३२
श्रीसिद्धशैलमहिमा १३२
दीक्षितानां कुटुम्बवृत्तिः १३३
कृष्णकृतदीक्षामहोत्सवः १३४
शैलकवृत्तं १३५
सुदर्शनवृत्तं १३५
शाम्बकुमारभाववंदनं १३६
द्वारिकाभाविकथनं १३७
द्वैपायननिदानं १३८
द्वारिकादाहः १३९

रामकृष्णनिर्गमनं १४०
कृष्णमृत्युनिमित्तं १४१
कृष्णाराधना १४२
बलविलापादि १४३
बलदेवदीक्षा १४४
हरिणस्य दानानुमोदनं १४५
विश्वमहिमदर्शनादि (बलदेवविजृम्भितं) १४५
पाण्डवदीक्षादि १४६
श्रीनेमिनिर्वाणं १४७
श्रीकृष्णस्य भावि तीर्थंकरत्वं १४८

समाप्तं श्रीकृष्णचरित्रं

## अथ श्रेणिकचरित्रे विषयक्रमः

श्रीश्रेणिकपूर्वभवाः १४९
श्रीश्रेणिकजन्म १५०
सुलसावृत्तं १५१
श्रेणिकपरीक्षा १५२
नन्दापरिणयनं १५४
राज्यप्राप्तिः १५४
अभयस्य राजगृहागमनं १५४
मुद्रिकाकर्षणं १५५
अभयसत्कारः १५८
सुज्येष्ठाचेल्लणावृत्तं १५६
कोणिकजन्म १६०
प्रसन्नचंद्रवृत्तं १६२
दर्दुरांकामरागमनं १६६
नरकायुस्त्रोटनोपायप्रश्नः १७०
देवविहिता श्रेणिकपरीक्षा १७०
कालशौकरिकवृत्तं १७०
सुलसश्राद्धः १७०
काष्ठहारकदीक्षा १७२
लोके उपहासः १७२
अभयकृतस्तत्समाधिः १७३
मन्त्र्याद्युक्तमांससमर्घतास्फोटः १७३
प्रव्रज्याप्राप्तिकथनं १७४
चेल्लणांतःपुरदाहवृत्तं १७५
अभयदीक्षा १७६
श्रेणिकमरणं १७७

कोणिकगतिः १७७
पुण्यपालनस्वप्नफलानि १७८
कुवृष्टिन्यायः १७९
भाविकालस्वरूपं १८०
कल्किवृत्तं १८१
षष्ठारकस्वरूपं १८५
पद्मनाभतीर्थपतिजन्मादि १८७
भाविशलाकापुरुषाः १८८

समाप्तं श्रीश्रेणिकचरित्रं

४७ चैत्यगमनद्वारोपसंहारः १८८

अष्टमं सत्कारद्वारं

४८,४९ पंचाभिगमाः १८८
५०,५६ चैत्यगृहप्रवेशविधिः १८९
दशत्रिकस्वरूपं
५७,६९ पूजाविधिः (स्नात्रादि) १९०
आरात्रिकविधिः १९३
आरात्रिकसमये नृत्यं १९४
७० तत्र-दृष्टान्तः देवेन्द्रस्य ,,
चमरेन्द्रस्य २०१
प्रभावत्याः २०६
(देवेन्द्रज्ञाते अश्वावबोधतीर्थस्य कार्तिकश्रेष्ठिनः सुदर्शन-श्रेष्ठिनश्च ज्ञातानि)

नवमं वंदनद्वारं २१४

७१,८६ भावपूजारूपचैत्यवंदना, ततः द्रव्यपूजाशेषः
७७,७८ निर्धनगृहिणां चैत्यगमनादिविधिः २१६
७९ द्रव्यपूजायां पुष्पादिसामग्र्यभावे कर्त्तव्यं ? २१७

दशमं द्वारं

गुरुसकाशे प्रत्याख्यानं
गुरुवंदनं २१७
वंदनकविवरणं (वंदनकाधिकारः)
वंदनकस्थानानि सार्थानि २१९
अभिधानेषु वंदने गुणस्तुतौ शीतलसूरेः २१९
आवर्त्तादिकृतिकर्मणि कृष्णस्य २२०
शिरोनमनपूजायां सेवकस्य २२०
विनयकर्मणि शांबपालकयोः २२१

वंदनकसूत्रव्याख्या २२३
३३ आशातनाः २२४
'इच्छाकारेण संदिसह देवसियं
आलोउं' तद्व्याख्या २२५
पिण्डैषणास्वरूपं, तन्नामानि २२६
क्षामणकसूत्रव्याख्या २२७
प्रत्याख्यानाधिकारः
प्रत्याख्यानस्वरूपं (भेदाः) २२८
प्रत्याख्यानभंगाः ,,
प्रत्याख्यानाकाराः २२९
प्रत्याख्यानसूत्राणि ,,
प्रत्याख्यानार्थाः ,,
प्रत्याख्यानशुद्धयः २३४
प्रत्याख्यानफलं २३५

तत्फले धम्मिलज्ञातनिर्देशः
दामन्नकस्य ज्ञातं २३९
प्रत्याख्यानविशेषफलं २४०
८०,८१,८२,८३ वंदनफलानि २४१
८४ द्वादशं द्वारं (१२) ,,
यतिपृच्छा
८५ त्रयोदशं द्वारं (१३)
ग्लानादेः यथोचितकर्म २४१
८६ श्रवणद्वारं एकादशं(११) २४२
८८,८९ श्रवणविधिः २४३
९० जिनागमस्तुतिः ,,
तद्विषये शय्यंभवसूरिः ,,
चिलातिपुत्रस्य ज्ञातं २४४
गोविंदवाचकानां ,, ,,

रोहिणेयचौरस्य ,, ,,
९१,९२ श्रोतव्यानि वस्तुनि २४५
धर्माधर्मस्वरूपं ,,
कृत्याकृत्यस्वरूपं २४६
देवस्वरूपं ,,
देवलोकस्वरूपं ,,
सिद्धस्वरूपादि २४७
नारकस्वरूपादि २४९
तिर्यक्स्वरूपं २५०
मनुष्यस्वरूपं २५१
९३ सम्यक्त्वमूलं २५२
नवतत्त्वस्वरूपं सविस्तृतं २५२
९४ धर्मदातृस्वरूपं २५९
विषयविचारणा

९५ संशये सति दूषणं २६०
९६ श्रवणद्वारोपसंहारः ,,
निःशंकत्वे अंबडकथा ,,
अभयकुमारवृत्तनिर्देशः २६३
९७,९८ श्रवणद्वारं जीर्णोद्धार-चिंतादिकृत्यं ,,
९९ देवकार्योपयोगिनां सुंदरत्वं २६४
१००,१०१ जीर्णचैत्योद्धारफलं २६४
कलाकलापादिसाफल्यम् २६५
११० जीर्णोद्धारस्य मोक्षावन्ध्यहेतुता २६६
१११ देवगृहभांडागारचिंता २६७
११२,१२५ चैत्यद्रव्याचिंताकरणे तद्द्रव्यविप्रणाशे चानिष्टता २६७
भक्षणोपेक्षणयोर्भेदः
संकाशकथानकम् २६८
चैत्ये आशातनापरिहारः २७०
आशातनावर्णनम्
१२६ चैत्यद्रव्यविनाशफलम् २७१
साधारणद्रव्यस्वरूपं २७१
तद्विनाशफलं च
१२७ चैत्यद्रव्यविनाशे उपेक्षमाणस्य साधोरनंतसंसारित्वं २७२
१२८ चैत्यद्रव्यं तद्भेदौ च ७२
१२९,१३१ गुरुद्रव्यविनाशदोषः २७२
तत्सम्बन्धिव्यवहारसूत्रप्रमाणं
१३२ चैत्यगुरुद्रव्यभोगे दोषाः २७३
१३३,३४,३५ देवगुरुद्रव्यविनाशेऽन्यमतेन पापोक्तिः २७३
१३६,१३९ देवद्रव्यविनाशाविनाशयोर्दोषगुणदर्शनम् २७४
१४०,१४१ महासत्त्वता २७५
१४२,१४३ देवद्रव्यभक्षणरक्षणफलानि २७५
१४५ उपसंहृतिः २७६
१४६ श्रवणद्वारे शेषविधेः कृत्यं २७६
१४७,१५० चैत्य एव साधवः किं न तिष्ठन्ति? २७६
१५१,१५४ चैत्यावस्थायित्वं व्युदस्य व्याख्यानविधिः २७७
चैत्यप्रकाराः २७७
१५४ मंदश्रद्धा साधूनां वसतिप्रेषणे हेतुः २७८
१५५ वंदनश्रवणकार्यानंतरा क्रिया २७८

इति द्वितीयः प्रस्तावः समाप्तः

* तृतीयः प्रस्तावः *

चतुर्दशं व्यवहारशुद्धिद्वारं २७९
१५६,१५७ पंचदशकर्मादानवर्जनं २७९
कर्मादानस्वरूपं २७९
१५८ कूटवाणिज्यनिषेधः २७९
१५९,१६१ व्यवहारशुद्धिलाभः २८०
१६२ व्यवहाराशुद्धावनर्थः २८१
१६३ धर्मखिंसाकृतां जन्तूनां बोधिदुर्लभता २८२
१६४,१६८ नीचसंसर्गफलं दृष्टान्तश्च
१६९ कुमित्रसुमित्रसंसर्गे दोषगुणस्वरूपं २८३
तत्र दिवाकरज्ञातं
१७० सत्संगफलं २९१
पंचदशं भोजनद्वारं २९२
१७१ भोजनपूर्वविधिः ,,
१७२ साधुनिमन्त्रणं ,,
तत्सामाचारी
१७३,१७८ साधुप्रतिलाभनविधिः २९३
द्विचत्वारिंशदाहारदोषस्वरूपं २९४
आपवादिकदानं २९९
संयमोपकारहेतुदानस्वरूपं २९९
वस्त्रादिप्रमाणादि ३००
१७९ सुपात्रदाने यत्नवत्त्वे हेतुः ३०१
१८० सुपात्रदाने विपाकसूत्रगतदशाध्ययनाख्यातानि तत्र— ३०९
सुबाहुचरितं
भद्रनन्देर्ज्ञातं ,,
सुजातस्य ,,
वासवस्य ३१०
जिनदासस्य
धनपतेः
महाबलस्य
अर्जुनभद्रनन्देः ३११
महाचंद्रस्य ,,
वरदत्तस्य ,,
१८१ सुपात्रदानस्यैहिकं फलं ३११
श्रेयांसकुमारस्य ज्ञातं ,,
मूलदेवस्य ज्ञातं ३१४
१८२,१८३ सुपात्रदानस्योभयलोकफलप्रदर्शनं तत्र— ३२२
धन्यशालिभद्रयोर्वृत्तं ,,
कृतपुण्यस्य वृत्तं ३३४
१८४,१८५ दाने भक्तिभावे हेतुः ३४१
१८७ तत्सम्बन्धी दृष्टान्तः ३४२

१८८ दात्रा किं२ भाव्यं ? ३४२
१८९ सर्वोत्तमदानं (साधुदानं) ,,
वसतिस्वरूपं ३४३
वसतिगुणाः ,,
१९० वसतिदानप्रधानत्त्वं ,,
१९१ शय्यादानस्यैहिकं फलं ३४४
१९२ तस्य पारत्रिकं फलं ,,
१९३ तस्य ऐहिकामुष्मिकफले दृष्टान्तानि ३४५
अवंतिसुकुमारस्य कथा ,,
वंकचूलिकथा ३४८
१९४ शय्यादातॄणां भाविसुखं ३६६
१९५ शय्यादाने लाभः ,,
१९६ शय्यादाता जैनशासनेऽनुमोदना-हेतुः ३६७
१९७ शय्यादानमाहात्म्यं ,,
१९८ दानविधौ कृत्यशेषं ,,
१९९ शासनप्रभावनाफलं ,,
२०० शासनप्रभावको वज्रर्षिः तद्वृत्तं च ,,
२०१ साधर्मिकवात्सल्यम् ३८३
२०६ तत्स्वरूपं भरतचक्रिणः साधर्मिक-वात्सल्यता ३८४
२०७ राजग्रहाद्यापदुद्धाररूपं साधर्मिकवात्सल्यं ३९८
तत्सम्बन्धिरामचंद्रोद्धरणं (पद्मचरित्रं) ३९८
२०८ भाववात्सल्यस्वरूपं ४१४
२०९ भाववात्सल्यकरणप्रकाराः सारणादीनां स्वरूपं
२१० साधर्मिकवात्सल्योपेक्षणे दोषः ४१५
२११ प्रमादफलम् ,,
२१२,२१३ श्रावकेण करणीया चिन्ता (प्रमादभावे) ,,
२१४,२१९ श्रावकाणां प्रतिनोदना ४१६
२२०,२२१ अनुकम्पास्वरूपं ४१९
२२२,२२३ भोजनप्रकारः भोजने परिहरणीयानि अनंतकायादिवस्तूनि ४२०

इति तृतीयः प्रस्तावः समाप्तः

## – उपयुक्त अपूर्व ग्रन्थरत्नो –

| | ग्रन्थ | मूल्य |
|---|---|---|
| १ | श्रीआचारांग सटीक | ६–८–० |
| २ | श्रीदशपयन्ना (सच्छाया) | २–०–० |
| ३ | श्रीविशेषावश्यकभाष्य (कोट्याचार्यकृतटीकायुक्त) | ११–०–० |
| ४ | विशेषावश्यकगाथानुक्रम | ०–५–० |
| ५ | श्रीअंगाकारादि विषयक्रम | ४–०–० |
| ६ | श्रीभगवतीसूत्रसटीक भा. १, (भाग २–३ मुद्रणालय) | ५–०–० |
| ७ | अनुयोगद्वारचूर्णि, हि०वृत्तिश्च | १-१२-० |
| ८ | उत्तराध्ययनचूर्णि | ३–८–० |
| ९ | दशवैकालिकचूर्णि | ४–०–० |
| १० | नंदिचूर्णि, हरि०वृत्तिश्च | १-१२-० |
| ११ | ऋषिभाषितसूत्राणि | ०–२–० |
| १२ | श्रीसंघाचारभाष्यटीका | ५–०–० |
| १३ | श्रीश्राद्धदिनकृत्य टीका १लो (टीका २ मुद्रणालय) | ३-१२-० |
| १४ | प्रव्रज्याविधानकुलक सटीक | २–८–० |
| १५ | भवभावना सटीक | ७–२–० |
| १६ | प्रवचनपरीक्षा सटीक | १०–०–० |
| १७ | प्रकरणसमुच्चय | १–०–० |
| १८ | पयरणसंदोह | १–०–० |
| १९ | उपदेशमाला (पुष्प०–स०) | ६–०–० |
| २० | उपदेशमाला मूल | ०–८–० |
| २१ | उत्पादादिसिद्धिः | २–८–० |
| २२ | कल्पकौमुदी | २–०–० |
| २३ | ज्योतिपकरंडक सटीक | ३–०–० |
| २४ | तत्त्वतरंगिणी ,, | ०–८–० |
| २५ | तत्त्वार्थसूत्र सभाष्य | १–०–० |
| २६ | ,, हारि० वृत्ति | ६–०–० |
| २७ | ,, कर्तृ निर्णय | ०-१०-० |
| २८ | द्रव्यक्षेत्रलोकप्रकाश | ४–८–० |
| २९ | नवपदबृहद्वृत्ति | ४–०–० |
| ३० | परिणाममाला | ०-१०-० |
| ३१ | पर्युषणादशशतक | ०-१०-० |
| ३२ | प्रवचनसारोद्धार (उ.) | ४–०–० |

अर्हम् ।

श्रीतपागच्छनायकभगवज्जगच्चंदसूरीन्द्रपट्टप्रभाकृदनेकभव्योपकारिग्रन्थनिर्मातृश्री-
देवेन्द्रसूरीश्वरसंदृब्धं स्वोपज्ञवृत्तियुक्तं—

# श्राद्धदिनकृत्यसूत्रं ।

गोभिर्येन जगत्त्रयेऽपि निखिलद्रव्यप्रकाशः सदा, चक्रे जाड्यतमोभिदा भवभृतां दोषापहारस्तथा ।
तं नत्वा जिनवीरमर्कमतुलं सूत्रात्तथाऽऽम्नायतः, श्राद्धानां दिनकृत्यसूत्रविवृतिं वक्ष्ये सुबोधामहम् ॥१॥

तत्र चादौ शिष्टसमयपरिपालनार्थं मंगलादिचतुष्टयाभिधायकं सूत्रकृदेव प्रस्तावनासूत्रमाह—

वीरं नमेऊण तिलोयभाणुं, विसुद्धनाणं सुमहंनिहाणं ।
वोच्छामि सड्ढाण दिणस्स किच्चं, जिणिंदचंदाण य आगमाओ ॥१॥

वीरं नत्वा श्राद्धानां दिनकृत्यं वक्ष्ये इति समुदायार्थः, अवयवार्थस्त्वयं—विशेषेण—अपुनर्भावरूपेण 'ईरयति' प्रेरयत्यष्टप्रकारं कर्मेति वीरः "विदारयति यत्कर्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, तस्मात् वीर इति स्मृतः ॥१॥" इति निरुक्ताद्वा वीर इति, तं 'नत्वा' नमस्कृत्य, नमस्कारस्तु चतुर्द्धा, तथाहि—द्रव्यतो न भावतः पालकादीनां १, भावतो न द्रव्यतोऽनुत्तरसुराणां २, न द्रव्यतो न भावतः कपिलादीनां ३, द्रव्यतो भावतश्च सम्यग्दृष्टेरुपयुक्तस्य सुसंवृतवचनस्य सुप्रणिहितगात्रस्य जिनादीन् नमस्कुर्वतः ४, तत्र विघ्नव्रातोपशान्तये ऐकांतिकाव्यभिचारिभावमंगलरूपेण तुर्यनमस्कारेण प्रणम्येतिभावः, किंविशिष्टं वीरं?—'त्रैलोक्यभानुं' त्रैलोक्यस्य—ऊर्द्ध्वाधस्तिर्यग्लोकरूपस्य 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायात्तत्संस्थितधर्मास्तिकायादिद्रव्यसमूहस्य वा संख्यातीतानामपि जिज्ञासूनां युगपत्संशयोच्छेदकत्वेनोद्योतकत्वात् भानुरिव त्रैलोक्यभानुः—त्रिभुवनभास्करस्तं, यदागमः—"सव्वत्थ अविसमत्तं रिद्धिविसेसो अकालहरणं च। सव्वन्नुपच्चओऽविय अचिंतगुणभूइओ जुगव"॥१॥मिति, एतदेव भावयति—'विशुद्धज्ञानं' विशुद्धं—सकलज्ञानावरणक्षयोत्पन्नत्वाद्वितिमिरं ज्ञानं केवलाख्यं यस्य स तथा तं, पुनः किंविशिष्टं?—'सुमहानिधानं' तत्रेतरनिधानापेक्षयाऽक्षयत्वेन महच्च तत् निधानं च महानिधानं—नैसर्प्पादिरूपं तस्मादपि भव्यसत्त्वानां दुर्गदौर्गत्यदुःखदारिद्र्योच्छेदकत्वेन सुगतिसुखसंपत्संपादकत्वेन च सुष्ठु—सर्वातिशायि महानिधानं, एवं च श्रीमन्महावीरस्य सुमहानिधानत्वेऽयं संप्रदायः—भरतेऽत्र सुपर्वाढ्यं, प्रभूतहरिचंदनम्। पुरं क्षत्रियकुंडाख्यमस्ति स्वःखंडसन्निभम् ॥१॥ तत्र सिद्धार्थराट्सूनुः, सिंहांकस्त्रिशलांगजः। स्वर्णाभः सप्तहस्तोच्चः, श्रीवीरश्चरमो जिनः ॥२॥ ज्ञानत्रयपवित्रात्मा, पित्रोर्गतवतोर्दिवम्। वितीर्य वार्षिकं दानं, जन्मतस्त्रिंशदब्दकः ॥३॥ लौकांतिकामरैर्भक्त्या, स्वयंबुद्धोऽपि बोधितः। प्रवव्राज समुद्धर्तुमिव विश्वं

भवावटात् ॥४॥ त्रिभिर्विशेषकं ॥ कृतागस्स्वपि लोकेषु, लोकद्वयविरोधिषु । निष्कारणैककारुण्यनीरनीरधिसन्निभः ॥५॥ ग्रामाकरपुराकीर्णां, विहरन्नन्यदाऽवनीम् । देशं दक्षिणवाचालं,संप्राप त्रिजगद्गुरुः॥६॥ तत्र विश्वत्रयत्राता, श्वेताम्बीं नगरीं व्रजन् । संभूय स्वपुरोभूय, गोपालैर्जगदे यथा ॥७॥ नन्वयं सरलः पंथाः, शरवत्सरलाशय ! देवार्य ! । जगतीवर्य !, श्वेताम्बीमुपतिष्ठते ॥८॥ किं त्वंतराऽस्य कनकखलाख्ये तापसाश्रमे । विषभृद् दृग्विषः क्षुद्रो, वर्त्तते तेन सांप्रतम् ॥९॥ समीरणैकसंसर्गो मार्गोऽभूदखिलः खिलः । अस्योपर्यपि संचारो, न प्रायः पक्षिणामपि ॥१०॥ त्यक्त्वा तदेनमध्वानं, वक्रेणाप्यमुना व्रज । सुवर्णेनापि किं तेन, कर्णच्छेदो भवेद् यतः ! ॥११॥ अवधिज्ञानतोऽज्ञासीत्, स्वाम्यप्येनं महोरगम् । प्राग्जन्मनि यथैषोऽभूद्, विकृष्टक्षपको मुनिः ॥१२॥ अन्येद्युर्नगरे कस्मिन्, मासक्षपणपारणे । क्षुल्लकेन युतो भिक्षाचर्यायां प्रविवेश सः ॥१३॥ कथंचित् पादपातेन, तेन भेकी विराधिता । क्षुल्लस्तां दर्शयामास, तस्यालोचनहेतवे ॥१४॥ प्रत्यूचे सोऽपि तं लोकहता भेकीः प्रदर्शयन् । किमेता अपि वाचाट !, मंडूक्यो मारिता मया ॥१५॥ जोषित्वा जोषमेषोऽथ, दध्यौ धीमानिदं हृदि । सुस्थो भूत्वा महात्माऽयं, सायमालोचयिष्यति ॥१६॥ तत्रानालोचिते सोऽस्यासारयत्तां ततः क्रुधा । तं निहंतुं दधावे द्राक्, स्तंभे चास्फाल्य सोऽमृत ॥१७॥ विराधितव्रतश्चासौ, ज्योतिष्केषु सुरोऽभवत् । हा ! हारितं तपः क्रोधात्, फूत्कृत्वा ध्मातहेमवत् ॥१८॥ च्युत्वा सोऽत्राश्रमे जज्ञे, पंचशत्यास्तपस्विनाम् । पत्युः कुलपतेः पत्न्याः, पुत्रः कौशिकनामकः ॥१९॥ ते च कौशिकगोत्रत्वादुच्यंतेऽन्येऽपि कौशिकाः । स पुनश्चंडकोपित्वात्, चंडकौशिक उच्यते ॥२०॥ श्राद्धदेवातिथीभूते, तस्मिन् कुलपतौ पतिः । स चंडकौशिकस्तेषां, तापसानां सुतोऽप्यभूत् ॥२१॥ वनस्य मूर्च्छया श्वेव, भक्ष्यस्यैषां तपस्विनाम् । फलं मूलं दलं पुष्पं, ददौ नादातुमेषकः ॥२२॥ तापसास्तेऽथ सीदंतोऽयानन्याँस्ता-

पसाश्रमान्। विलांतराणि सूच्यास्या, इवांभः द्राविते विले ॥२३॥ वहिर्गतेऽन्यदा चंडकौशिके कंटिकाकृते। श्वेतव्या एत्य राजन्या, अभांक्षुर्मंक्षु तद् वनम् ॥२४॥ तस्य व्यावर्त्तमानस्य, शशंसुर्गोपदारकाः। भज्यते ते वनं कैश्चित्, पश्यास्वामिकवत् कथम्? ॥२५॥ उत्पाट्य निशितं पर्शुं, दधावे तानभि द्रुतम्। क्रोधादेधीयमानोऽसौ, सुभूमं पर्शुरामवत् ॥२६॥ अनेशन्नाशु राजन्यास्तेऽस्माद्व्याघ्रादिवैणकाः। स्खलित्वा चैष दुर्गर्त्ते, मृत्योर्मुख इवापतत् ॥२७॥ पश्वधो निशितस्तस्य, संमुखः पततोऽपतत्। मूर्द्धा व्यर्द्धीकृतस्तेन, तस्य कोपस्य ही गतिः ॥२८॥ स मृत्वाऽस्मिन् वने क्रोधात्, क्रूरोऽहिर्दृग्विषोऽभवत्। वैरवत् स्वानुयायी हि,क्रोधस्तीव्रो भवे भवे॥२९॥ स चाशीदृग्विषावेशाज्जीवव्यूहं विनाशयन्। गाढमार्जितदुष्कर्म्मा, वर्त्तते नरकातिथिः ॥३०॥ प्रबोधयितुमेनं तत्, सांप्रतं मम सांप्रतम्। अमंस्तेति विभुः स्वस्याबाधामगणयंस्ततः ॥३१॥ ऋजुनैव पथा गत्वा, वनान्तर्देवतागृहे। तस्थौ प्रतिमया स्वामी, सुमेरुरिव सुस्थिरः ॥३२॥ विलान्निर्गत्य सर्प्पोऽथ, प्रभुं प्रेक्ष्य व्यचिंतयत्। मामवज्ञाय कोऽप्यागादाः! कथं कियतीं भुवम्? ॥३३॥ करोमि भस्मसादद्य, तदेनं द्युम्नदर्पितम्। कोपाटोपादिति ध्यात्वा, स स्फटामंडपं व्यधात् ॥३४॥ बालार्कसदृशा दृष्ट्या, ज्वालामालाकरालया। प्लोषंत्या क्लिष्टया यावत्, प्रभुं प्रैक्षिष्ट दुष्टधीः ॥३५॥ ज्वलंत्यस्तस्य दृग्ज्वाला, निपेतुः स्वामिनस्तनौ। तेजःपुंजैर्दुरालोका, उल्कावत् कांचनाचले ॥३६॥ प्रौढप्रभावपूर्णस्य, प्रभोर्न प्राभवंस्तकाः। महत्योऽपि हि किं वात्याः, कंपयंति कुलाचलान् ॥३७॥ पलालप्लोषमेषोऽथ, नाप्लुष्ट इति दुर्म्मतिः। दृष्ट्वा दृष्ट्वा स मार्त्तंडं, दृग्ज्वाला मुमुचे मुहुः ॥३८॥ स्वामिनः शीतलेश्यस्य, शरीरे शंखसंनिभे। शंपासंपातवत् सिंधौ, वंध्याभूतासु तास्वपि ॥३९॥ स्फारस्फूत्काररौद्रात्मा, दंदशूकः क्रुधा ज्वलन्। ददंश प्रभुपादारविंदं निःशंकशेखरः॥४०॥ स्वविषोद्रेकदुर्मत्तो, दंशंदंशमपासरत्। मृदूनीयान् मद्विषाक्रांतो,

मा पतन्नेष मामिति ॥४१॥ तस्य दंदश्यमानस्य, प्रभौ न प्राभवद्विषम्। किंतु गोक्षीरधारावद्, धवलं रक्तमक्षरत् ॥४२॥ स्वामिनः पुरतो भूत्वा, वीक्षापन्नः स पन्नगः। वीक्षांचक्रे महावीरं, किमेतदिति विस्मितः ॥४३॥ तन्निरूपयतो रूपस्वरूपं परमेशितुः। कांतिसौम्यतया तस्य, विध्याते ईक्षणे क्षणात् ॥४४॥ शांतिभूतो बभाषे तं, विभुर्विश्वैकवत्सलः। हंहो! बुध्यस्व बुध्यस्व, चंडकौशिक! मा मुहः ॥४५॥ इत्याकर्ण्य विभोर्वाक्यमूहापोहं वितन्वतः। तस्य जातिस्मृतिर्जज्ञे, विवेकवनसारणिः ॥४६॥ स त्रिः प्रदक्षिणीकृत्य, भगवंतं प्रणम्य च। भवभ्रमणतो भीतो, बभाषे निजभाषया ॥४७॥ स्वामिन्! विश्वत्रयत्रातर्निस्त्रिंशं त्राणवर्जितम्। पतंतं दुर्गतौ दीनं, दुःखितं रक्ष रक्ष माम् ॥४८॥ प्रभोरनुज्ञया देशविरतिं स सरीसृपः। सम्यक् सम्यक्त्वसंयुक्तां, प्रपेदेऽनशनं तथा ॥४९॥ स्वामी निष्कर्म्मणस्तस्य, कृतानशनकर्म्मणः। अनुशास्तिमदात् सोऽपि, संवेगादित्यचिंतयत् ॥५०॥ माऽन्यः कोऽपि विपद्येत, मच्चक्षुर्विषदूषितः। इति तुण्डं बिले क्षिप्त्वा, पपौ स प्रशमामृतम् ॥५१॥ कायोत्सर्गेण तत्रैव, तस्थौ तत्कृपया प्रभुः। महान्तो हि स्वभावेन, परोपकृतितत्पराः ॥५२॥ तथास्थितं प्रभुं प्रेक्ष्य, गोपास्त्वेत्य पिपेषिरे। सर्पं वृक्षांतरस्थास्तं, यष्टिलोष्टादिभिर्भृशम् ॥५३॥ निश्चलं तं ततो वीक्ष्य, ते लोकानामचीकथन्। महोरगः शमं नीतो, देवार्येण महात्मना ॥५४॥ ततस्तत्रागमन् लोका, विस्मयस्मेरलोचनाः। महावीरमवंदंत, तमानर्चुश्च पन्नगम् ॥५५॥ विक्रायिका घृतादीनां, व्रजंत्यस्तेन वर्त्मना। घृतादिच्छटयाऽऽच्छोट्य, पस्पृशुस्तं महोरगम् ॥५६॥ आगच्छन् कोटिशस्तत्र, कीटिकास्तीक्ष्णतुण्डिकाः। चक्रिरे चालनीकल्पं, वपुस्तास्तस्य भोगिनः ॥५७॥ धिग्! मां भवे भवे तीव्रक्रोधयोधविबाधितम्। तत्फलं कियदेतच्च, ममेति स्वं विबोधयन् ॥५८॥ भववैराग्यभृत् तीव्रसंवेगामृतपूरितः। दुःसहां सोऽधिसेहे तां, वेदनां पन्नगाग्रणीः ॥५९॥ युग्मम् ॥ मत्कायेन वराक्योऽमूर्मा स पीड्यंत कीटिकाः। इति

स्वांगं महानागो, न मनागप्यचीचलत् ॥६०॥ प्रभोर्दृष्ट्याऽनुशिष्ट्या च, सुधावृष्ट्या भयोज्झितः। पक्षान्ते पन्नगो मृत्वा, सहस्रारे सुरोऽभवत् ॥६१॥ इतीमं श्रीवीरः कुगतिगतदौर्गत्यगिलितं, भुजंगं निस्तार्य त्रिदिवसुखसंपत्तिकलितम्। विधायोच्चैश्चैवं निधिरिव महान् सुष्ठु सततं, विजह्रेऽन्यत्रासौ जगति शिवतातिश्चिरतरम् ॥६२॥

अत्र च वीरपदेनैवापायापगमातिशयः प्रतिपादितः, सर्वापायमूलभूताष्टप्रकारकर्म्मविदारकत्वात् १, त्रैलोक्यभानुमित्यनेन वचनातिशयोऽभिहितः, तथाभूतेनैव वचनेन त्रिभुवनांतर्वर्त्तिपदार्थसार्थस्य युगपत्प्रकाशकत्वोपपत्तेः २, विशुद्धज्ञानमित्यनेन ज्ञानातिशयः सुज्ञान एव ३, सुमहानिधानमित्यनेन तु परार्थसंपादकत्वेत देवेंद्रादिभिरप्यस्य पूज्यत्वात् पूजातिशयः सुप्रतीतः ४, तमेवंगुणविशिष्टं वीरं नत्वेत्यनेनात्यंतिकाव्यभिचारिभावमंगलमुक्तं, क्त्वाप्रत्ययस्य क्रियान्तरापेक्षत्वादुत्तरक्रियामाह— 'वक्ष्ये' अभिधास्ये, 'श्राद्धाः' श्रावकाः, तत्स्वरूपं त्विदं "श्रद्धालुतां श्राति जिनेंद्रशासने, धनानि पात्रेषु वपत्यनारतम्। करोति पुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥१॥" एतच्च ऋद्धिमाप्तमाश्रित्योक्तं,इदं तु सर्वसाधारणं—"संपत्तदंसणाई पइदियहं जइजणा सुणेई य। सामायारिं परमं जो खलु तं सावगं बिंति ॥१॥" अत्र च द्विविधेनाप्यधिकारः, तेषां श्राद्धानां, बहुवचनं चात्र साभिग्रहाद्यनेकधा श्राद्धप्रदर्शनार्थम् "साभिग्गहा य निरभिग्गहा य ओहेण सावगा दुविहे"(आ०नि०)त्यादि,तेषां किमित्याह-दिनस्य-अहोरात्रस्य मध्ये इति शेषः'कृत्यं' करणीयं'नमस्कारेण विबोध' इत्यादिकं 'वक्ष्ये' कर्त्तव्यतया अभिधास्ये, अनेन चाभिधेयमावेदितं, तच्च कुत इत्यत आह—'जिनेंद्रचन्द्राणां चागमात्' जिनाः—श्रुतावधिमनःपर्यायज्ञानिनस्तेषां विमलकेवलज्ञानपरमैश्वर्यसमन्वितत्वेन प्रधानत्वाद् इंद्राः—सामान्यकेवलिनस्तेष्वपि सर्वा-

तिशयसंपत्त्या चंद्रवदाल्हादकत्वात् चंद्रा जिनेंद्रचंद्राः-तीर्थकृतः तेषामागमात्-तत्प्रणीतावश्यकोपासकदशादिसिद्धांतात्, समुद्धृत्येति गम्यते, चशब्दात् बहुश्रुताशठसमाचीर्णसंप्रदायाच्च, अनेन चागमानुसारिणः प्रति गुरुपर्वक्रमलक्षणः संबंधो दर्शितः, तर्कानुसारिणस्तु प्रत्युपायोपेयलक्षणः स्वयमभ्यूह्यः, तत्रोपायः प्रस्तुतमेवेदं शास्त्रं, उपेयं तदर्थपरिज्ञानं, प्रयोजनं तु प्रेक्षावत्प्रवृत्तिसामर्थ्यगम्यं कर्तृश्रोतृगतानंतरपरंपरभेदभिन्नं चतुर्विधमपि वाच्यं, तत्र कर्तुरनंतरं सत्त्वानुग्रहः परंपरं त्वपवर्गप्राप्तिः, यदुक्तं-"सर्वज्ञोक्तोपदेशेन,यः सत्त्वानामनुग्रहम्। करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥१॥" श्रोतॄणां त्वनंतरं स्वकृत्याधिगमः, परंपरं तु तेषामपवर्गप्राप्तिः, यदुक्तं वाचकमुख्येन-"प्राप्तः स कल्पेष्विंद्रत्वं वा सामानिकत्वमन्यद्वा। स्थानमुदारं तत्रानुभूय सौख्यं तदनुरूपम् ॥१॥ नरलोकमेत्य सर्वगुणसंपदं दुर्लभां पुनर्लब्ध्वा। शुद्धः स सिद्धिमेष्यति भवाष्टकाभ्यंतरे नियमात् ॥२॥" (प्रशम०) इति शास्त्रप्रस्तावनावृत्तार्थः ॥१॥ यदुक्तं 'श्राद्धानां दिनकृत्यं वक्ष्ये' अतः तदभिधित्सुर्द्वारगाथाषट्कमाह—

नवकारेण विबोहो १ अणुसरणं सावओ २ वयाइं मे ३। जोगो ४ चिइवंदणमो ५ पच्चक्खाणं च विहिपुव्वं ६ ॥२॥
तह चेइयहरगमणं७ सक्कारो८ वंदणं९ गुरुसगासे। पच्चक्खाणं१० सवणं११ जइपुच्छा१२ उचियकरणिज्जं१३॥३॥
अविरुद्धो ववहारो१४ काले तह भोयणं१५ सुसंवरणं १६। चेइहरागमसवणं १७ सक्कारो १८ वंदणाइं च १९॥४॥
जइविस्सामण२० सुचिओ जोगो नवकारचिंतणाईओ२१। गिहगमणं२२ विहिसयणं सरणं गुरुदेवयाईणं२३॥५॥
अब्बंभे पुण विरई मोहदुगुंछा २४ सतत्तचिंता य। इत्थीकडेवराणं २५ तव्विरएसुं च बहुमाणो २६ ॥६॥
बाहगदोसविवक्खे २७ धम्मायरिए य उज्जुयविहारे २८। एसो दिणकिच्चस्स उ पिंडत्थो से समासेणं ॥७॥

'नमस्कारेण' पंचपरमेष्ठिमंत्रस्मरणलक्षणेन 'विबोधः' निद्रापगमः, श्रावकेण कार्य इत्यनुरूपं क्रियापदं सर्वत्र गम्यं, जागर्यासमकालमेव नमस्कारः स्मरणीय इत्यर्थः, 'अणुसरणं सावउ'त्ति नमस्कारपरावर्त्तनाद् अनु-पश्चात् स्मरणं-चिंतनं, किं तत्?-श्रावकोऽहमस्मीत्यादि २, 'वयाइं मे'त्ति व्रतानि-अणुव्रतादीनि 'मे' मम कति संतीत्यादि ३, 'जोगो'त्ति अत्र तावच्चतुर्वर्गाग्रणीर्मोक्षः, तस्यावंध्यकारणं सम्यग्दर्शनज्ञानचारित्ररूपं रत्नत्रयं योगः, तस्य च सर्वातिचारविशोधकत्वेन षड्विधावश्यकं कारणमित्युपचारात्तदपि योगः, इहैवाग्रे एतद्द्वारं विवृण्वता सूत्रकृताऽस्यैव सूचयिष्यमाणत्वात् ४, 'चिइवंदणमो'त्ति चैत्यवंदनं, द्रव्यभावपूजारूपं ५, ओ इति निपातः पूरणार्थः, 'पच्चक्खाणं च विहिपुव्वं'ति प्रत्याख्यानं नमस्कारसहितादि 'विधिपूर्वं' सूत्रोक्तविधिना नमस्कारपठनादिकं सर्वमेतत्कर्त्तव्यं, यतः-"धर्मानुष्ठानवैगुण्यात्, प्रत्यपायो महान् भवेत्। रौद्रदुःखौघजनको, दुष्प्रयुक्तादिवौषधात् ॥१॥" इति ६ तथाशब्दो विधिपूर्वकमित्यस्यानुकर्षणार्थः, 'चेइयहरगमणं'ति जिनभवनव्रजनविधिः ७, 'सक्कारो'त्ति सत्कारो माल्यादिभिरभ्यर्चनमर्हद्बिम्बानामिति गम्यते ८, 'वंदणं'ति तेषामेवार्हद्बिम्बानां प्रसिद्धचैत्यवंदनविधिना नमस्करणं ९, 'गुरुसगासे पच्चक्खाणं'ति ततो गुरुसमीपे प्रत्याख्यानं, स्वयं गृहादिगृहीतप्रत्याख्यानस्य गुरुसाक्षिकं विधानमित्यर्थः १०, 'सवणं'ति श्रवणं-आकर्णनमागमस्येति गम्यते ११, 'जइपुच्छ'त्ति यतिपृच्छा-साधुसंयमशरीरसुखवार्त्ताप्रच्छनं, एवं हि विनयः प्रयुक्तो भवति १२, 'उचियकरणिज्जं'ति उचितकरणीयं, उचितं यतेर्ग्लानाद्यवस्थासु योग्यमौषधदानोपदेशादि करणीयं-विधेयं, अन्यथा प्राक्पृच्छाया नातिसार्थकता स्यादिति १३॥३॥ 'अविरुद्धो ववहारो'त्ति अविरुद्धो-लोकलोकोत्तरानिंदितो व्यवहारो-व्यवसायः १४, 'काले तह भोयणं च'त्ति काले-मध्याह्नादिलक्षणे तथा-तेन वक्ष्यमाणप्रकारेण "जिणपूया मुणिदाणं साहंमियपूयणा

पिंडार्थः ॥८॥

उचियदाणं। परियणसंभालणयं संवरणं पच्चक्खाणस्स ॥१॥ 'संभरण'मित्यादिना भोजनं–अभ्यन्व्यवहारः १५, 'संवरणं'ति भोजनानन्तरं संभवद्ग्रंथिसहितदिवसचरिमादिप्रत्याख्यानस्य ग्रहणं १६, 'चेइहरागमसवणं'ति चैत्यगृहे आगमस्य श्रवणमिति ग्रहः, चैत्यगृहे हि प्राय आगमव्याख्यानं भवतीति, आगमव्याख्यास्थानान्तरोपलक्षणार्थं वा चैत्यग्रहणं, न तु तत्रैव प्रत्यवस्थान-सूचकं, महाशातनाहेतुत्वात् तत्रावस्थानस्य, एतच्चाग्रे सूत्रकृदेव प्रकटयिष्यति १७,'सक्कारो'त्ति विकालवेलायां जिनबिंबार्चनं १८, 'वंदणाइं च'त्ति गुरूणां वन्दनं–नमस्करणं आदिशब्दात् सामायिकादिषड्विधावश्यककरणम् ,अनुस्वारोऽलाक्षणिक इति १९॥४॥ 'जइविस्सामणं'ति यतीनां–साधूनां स्वाध्यायसंयमवैयावृत्त्यादिभिः श्रान्तानां पुष्टालंबने तथाविधश्रावकादेरपि देहखेदापनोद-मिच्छतां विश्रामणं–अंगमर्द्दनं २०, 'उचिओ जोगो नवकारचिंतणाईउ'त्ति उचितः–स्वभूमिकायोग्यो योगो–व्यापारः, तमेवाह–नमस्कारचिंतनादिकः, आदिशब्दाच्छेषपठितस्वाध्यायगुणनादिपरिग्रहः २१, 'गिहगमणं'ति स्वगृहगमनं, एतच्च स्वयोगसिद्धत्वेनापार्थकत्वान् निजपरिवारस्य धर्म्मदेशनाकरणमिति ज्ञापयति २२, 'विहिसयणं'ति विधिना शयनं–स्वापः, तमेव विधिमाह–'सरणं गुरुदेवयाईणं'ति स्मरणं धर्म्माचार्यजिनादीनां आदिशब्दाच्चतुःशरणादिपरिग्रहः२३ ॥५॥ 'अब्बंभे पुण विरई मोहदुगुंछ'त्ति अब्रह्मविषये पुनः प्रायेणेत्यर्थः विरतिः–निवृत्तिः, सा च मोहजुगुप्सातः स्यात् , मोहस्य–मोहनीयकर्मणो जुगुप्सा–सद्भूतदोषोद्भावनं मोहजुगुप्सा अतः सैव कार्येति २४, 'सतत्तचिंता य इत्थीकडेवराणं'ति सतत्त्वचिंता–स्वरूप-चिंतनं,केषां ?–'स्त्रीकडेवराणां' योषिदंगानां, चशब्दात्तदासक्तचित्तानामिह परत्र चापायचिंतनं २५,'तव्विरएसुं च बहुमाणो'त्ति तस्मात्–स्त्रीसंगाद् ये विरता–निवृत्तास्तेषु बहुमानो–भक्तिनिर्भरा प्रीतिरिति॥७॥'बाहगदोसविवक्खि'त्ति बाधकाः-पीडाकारिणो

धर्म्मकार्यस्येति शेषः दोषा–विषयाभिलाषादयः तेषां विपक्षा–भववैराग्यादयः तान् शुभभावान् ,चिंतयेत् पश्चिमरात्रौ जाग्रदवस्थायामितिगम्यं २७, 'धम्मायरिए य उज्जयविहारि'त्ति तस्यामेव जाग्रदवस्थायां धर्म्माचार्या–निजगुरवः उद्यतविहारिणः–शुद्धचारित्रिणः, तत्पार्श्वे एव दीक्षाग्रहणाद्यधिकारः, यदुक्तं–"अक्खंडियचारित्तो वयगहणाओ य जो य गीयत्थो। तस्स सगासे दंसणवयगहणं सोहिगहणं वा ॥१॥" अतस्तान् सदा कदा सेविष्येऽहमिति च चिंतयेत्, चशब्दाः समुच्चये, उपसंजिहीर्षुराह–'एसो' इत्यादि, एष पूर्वोक्तो दिनकृत्यस्य तु पिण्डार्थः–समुदायार्थः 'से' तस्य श्रावकस्य ऋद्धिमदनृद्धिमद्भेदभिन्नस्य 'समासेन' संक्षेपेण ज्ञातव्य इति शेषः, तुशब्दो यतीनां दशविधचक्रवालसामाचारीवत् श्रावकस्यैतत् प्रतिदिनं कर्तव्यमिति द्योतयतीति द्वारगाथाषट्कस्य समुदायार्थः। अवयवार्थं तु प्रतिद्वारं स्वयमेव सूत्रकृद् वक्ष्यतीति, तत्र 'यथादेशं निर्देश' इतिकृत्वा 'नवकारेण विबोहो'त्ति व्याचिख्यासयाऽऽह—

निसाविरामंमि विबुद्धएणं, सुसावएणं गुणसायरेणं। देवाहिदेवाण जिणुत्तमाणं, किच्चो पणामो विहिणाऽऽयरेणं॥

'निशायाः' रात्रेर्विरामे–अंत्यमुहूर्तद्वयलक्षणे 'विबुद्धकेन' विनिद्रेण 'सुश्रावकेण', हेतुत्वेन विशेषणमाह–'गुणसायरेणं'ति गुणा–अक्षुद्रत्वादयः, ते चामी–'धम्मरयणस्स जुग्गो अक्खुद्दो १ रूववं २ पगइसोमो ३। लोगप्पिओ ४ अकूरो ५ भीरू ६ असढो ७ सुदक्खिन्नो ॥१॥ लज्जालुओ ९ दयालू १० मज्झत्थो सोमदिट्ठि ११ गुणरागी १२। सकह १३ सुपक्खजुत्तो १४ सुदीहंदसी १५ विसेसन्नू १६ ॥२॥ वुड्ढाणुगो १७ विणीओ १८ कयण्णुओ १९ परहियत्थकारी य २०। तह चेव लद्धलक्खो २१ इगवीसगुणेहिं संजुत्तो ॥३॥' एते च किञ्चिद्व्याख्यायंते–तत्र 'अक्षुद्रः' 'अतुच्छहृदयः १, 'रूपवान्' स्पष्टपञ्चेन्द्रियः २, 'प्रकृति-

सौम्यः' स्वभावतोऽपापकर्म्मा सुखसेव्यश्च ३, लोकप्रियो दानविनयशीलवत्तया ४, 'अक्रूरः' अक्लिष्टचित्तः ५, 'भीरुः' पापायशोभ्यां बिभेति ६, 'अशठः' परावंचकः ७, 'सुदाक्षिण्यः' प्रार्थनाभङ्गभीरुः ८, 'लज्जालुः' अकार्यकार्यवर्जकः ९, 'दयालुः' सत्त्वानुकम्पकः १०, 'मध्यस्थो' रागद्वेषरहितः, अत एवासौ सौम्यदृष्टिः, स च यथावस्थितधर्मविचारवित्त्वाद् दूरं दोषत्यागी ११, 'गुणरागी' गुणपक्षपाती निर्गुणोपेक्षकश्च, १२, 'सत्कथः' सती धर्म्या कथा अभीष्टा यस्य स तथा, १३, 'सुपक्षयुक्तः' सुपक्षेण सुशीलानुकूलेन परिवारेण युक्तः १४, 'सुदीर्घदर्शी' सर्वत्रायतिदर्शित्वात् बहुलाभाल्पक्लेशकार्यकर्त्ता १५, 'विशेषज्ञः' अपक्षपातित्वेन गुणदोषविशेषाभिज्ञः १६, 'वृद्धानुगः' ज्ञानवयोवृद्धसेवकः १७, 'विनीतः' गुणाधिकेषूचितप्रतिपत्तिमान् १८, 'कृतज्ञः' परोपकाराविस्मारकः १९, 'परहितार्थकारी' निरीहः सन् परार्थकृत् २०, 'लब्धलक्षः' धर्म्मकृत्येषु सुशिक्षितः २१, अन्ये च भाषाकुशलत्वादयो बहवो गुणास्तेषां प्राचुर्यात् सागर इव गुणसागरः तेन 'देवाधिदेवाणं'ति देवा–भवनपत्यादयः तेषामैश्वर्यादिभिरधिका इन्द्राः तेषामपि पूज्यत्वात् देवा देवाधिदेवास्तेषां, विशेष्यमाह–'जिणुत्तमाणं'ति जिनाः–सामान्यकेवलिनस्तेषु चतुस्त्रिंशदतिशयादिभिरुत्तमाः–प्रधाना जिनोत्तमाः–तीर्थकृतः तेषां 'कृत्यो' विधेयः प्रणामो 'विधिना' वक्ष्यमाणलक्षणेन 'आदरेण' बहुमानेनेति ॥८॥ तमेव विधिमाह—

सिज्जाठाणं पमोत्तूणं, चिट्ठिज्जा धरणीयले। भाववंधुं जगन्नाहं, नमोक्कारं तओ पढे ॥ ९ ॥

'शय्यास्थानं' पल्यंकादि प्रमुच्य तिष्ठेद् ऊर्ध्वं आसीनो वा 'धरणीतले' 'भाववंधुं' सर्वत्र सहायकारित्वात् परमार्थबंधुं 'जगन्नाथं' अप्राप्तमहाव्रतादिगुणप्रापकत्वेन प्राप्ताणुव्रतादिगुणकलापपरिपालकत्वेन च योगक्षेमकारित्वाद् विश्वस्वामिनं 'नम-

स्कारं' ततः 'पठेत्' परावर्तयेदिति ॥९॥ यतः—

मंताण मंतो परमो इमोत्ति,धेयाण धेयं परमं इमंति। तत्ताण तत्तं परमं पवित्तं,संसारसत्ताण दुहाहयाणं॥१०॥

'मंत्रादीनां' गरुडमंत्रादीनां मध्ये इति शेषः 'परमः' प्रधानः 'अय'मित्ययमेव द्रव्यभावविषापहारित्वात्,तथा 'ध्येयानां' सकलनिष्कलादीनां 'ध्येयं' परममयमिति सर्वार्थसाधकत्वात्, 'तत्त्वानां' परमार्थानां 'परमं' अतिशयेन 'पवित्रं' पावनं तत्त्वमयमेव, कर्ममलकलंकापनयनकारित्वात्, केषामित्याह—'संसारसत्त्वानां' चातुर्गतिकभव्यजंतूनां 'दुःखाहतानां' असाततप्तानां, द्विधाहतानां वा रागद्वेषाक्रान्तानामिति ॥१०॥ कुतः?—

ताणं अन्नं तु नो अत्थि, जीवाणं भवसायरे। बुड्डंताणं इमं मोत्तुं, नमोक्कारं सुपोययं ॥११॥

'त्राणमन्यन्नास्त्येव' जीवानां भवसागरे। ब्रुडतामिमं मुक्त्वा नमस्कारं सुपोतकम्—सुबोहित्थमिति॥११॥ अमुमेवार्थं सविशेषमाह—

अणेगजंमंतरसंचियाणं,दुहाण सारीरियमाणसाणं। कत्तो य भव्वाण भविज्ज नासो,न जाव पत्तो नवकारमंतो॥

'अनेकजन्मांतरसंचितानां' दुःखानां शारीरिकमानसानां रोगशोकादीनां कारणे कार्योपचारात् तद्धेतुकर्मणामित्यर्थः, कुतश्च भवेन्नाशो? न यावत्प्राप्तो नमस्कारमंत्र इति ॥१२॥ अस्यादरख्यापनमावश्यकभाष्येण दर्शयति—

जलणाइभए सव्वं मुत्तुं एगंपि जह महारयणं। अहवाऽरिभए गिण्हइ अमोहसत्थं जह तहेह ॥१३॥

मुत्तुंपि वारसंगं स एव मरणंमि कीरए जम्हा। अरहंतनमोक्कारो तम्हा सो वारसंगत्थो ॥१४॥

ज्वलनादिभये सर्व्वं कणकर्पासादिकं मुक्त्वा एकमपि यथा महारत्नं वैडूर्यादि अथवा अरिभये गृह्णात्यमोघ-

शास्त्रं, शस्त्रं-शक्त्यादि, यथा कश्चित् सकर्णविज्ञानस्तथेह मुक्त्वा द्वादशांगं श्रुतकेवलिनाऽपि स एव मरणे क्रियते-स्मर्यते यस्माद-र्हन्नमस्कारः, उपलक्षणत्वात् सिद्धादिपरिग्रहः, तस्मात् स द्वादशांगार्थो-द्वादशांगरहस्यमिति ॥ १३-१४ ॥ यैरस्य प्रणयनमकारि तेषां नमस्कारार्थमाह—

तप्पणईणं तम्हा अणुसरियव्वो सुहेण चित्तेणं। एसेव नमुक्कारो कयन्नुयं मण्णमाणेणं ॥१५॥

१ नमस्कार-चिंतनं

तं नमस्कारं सूत्रादिरूपतया प्रणयंति-प्रकाशयन्तीत्येवंशीलास्तत्प्रणायिनः, यद्वा प्रणयनं प्रणयः-प्रकाशनं तस्य प्रण-यस्तत्प्रणयः स विद्यते येषां ते तत्प्रणयिनः-अर्हद्गणभृदादयः तेषां तस्माद्धेतोरनुसर्त्तव्यो-ध्यातव्यः शुभेन चित्तेनैष एव नम-स्कारः कृतज्ञतां-कृतार्थतां चात्मनो मन्यमानेनेति ॥१५॥ उक्तार्थमुपसंहरन्नुपदेशमाह—

नवकाराओ अन्नो सारो मंतो न अत्थि तियलोए। तम्हा हु अणुदिणं चिय पढियव्वो परमभत्तीए ॥१६॥

नमस्कारादन्यः सारो मन्त्रो नास्ति त्रैलोक्ये तस्माद्धेतोः हुः पूरणे अनुदिनमेवायं पठितव्यः परमभक्त्येति ॥१६॥ दृष्टान्त-पुरस्सरं विधिनाऽस्य पठनोपदेशमाह—

उरगाईणवि मंता, अविहीए उ अहिज्जिया। विसं जओ न नासंति, तम्हा उ विहिणा पढे ॥ १७ ॥

उरगादीनामपि मंत्रा अविधिना त्वधीता विषं यतो न नाशयंति तस्मात्तु विधिना-विनयबहुमानादिरूपेण पठेत्। पठनं चात्राध्ययनं परावर्त्तनं स्मरणं च ज्ञातव्यमिति। तत्सूत्रं चेदं-"नमो अरिहंताणं १ नमो सिद्धाणं २ नमो आयरिआणं ३ नमो उव-ज्झायाणं ४ नमो लोए सव्वसाहूणं ५ एसो पंचनमुक्कारो, सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं, पढमं

हवइ मंगलं ॥१॥" नमो-नमस्कारोऽर्हद्भ्यः-शक्रादिकृतां पूजां सिद्धिगतिं वाऽर्हंति इति अर्हंतस्तेभ्यः, यथा 'अरिहंति वंदणनमंसणाणि अरिहंति पूयसक्कारं। सिद्धिगमणं च अरिहा अरिहंता तेण वुच्चंति॥१॥' तथा 'नमः सिद्धेभ्यः' सितं-प्रभूतकालेन बद्धमष्टप्रकारं कर्म्म शुक्लध्यानाग्निना ध्मातं-भसीकृतं यैस्ते निरुक्तिवशात् सिद्धास्तेभ्यः यथा-'दीहकालरयं जंतुकम्मं से सियमट्ठहा। सियं धंतंति सिद्धस्स, सिद्धत्तमुवजायइ ॥१॥' 'नमः आचार्येभ्यः' स्वयं पंचविधाविचार-वंतोऽन्येषां तत्प्रकाशकत्वात् आचारे साधव आचार्यास्तेभ्यः, यथा-'पंचविहं आयारं आयरमाणा तहा पयासंता। आयारं दंसंता आयरिया तेण वुच्चंति ॥१॥' 'नमः उपाध्यायेभ्यः' उपेत्य-समीपमागत्य येभ्यः सकाशादधीयत इत्युपाध्या-यास्तेभ्यः,यथा-'बारसंगो जिणक्खाओ, सज्झाओ कहिओ बुहेहिं। तं उवइसंति जम्हा,उज्झाया तेण वुच्चंति ॥१॥' 'नमो लोके सर्वसाधुभ्यः' लोके-मनुष्यलोके सम्यग्ज्ञानादिभिर्मोक्षसाधकाः सर्वसत्त्वेषु समाश्चेति साधवः सर्व्वे च ते स्थविरकल्पि-कादिभेदभिन्नाः साधवश्चेति सर्व्वसाधवस्तेभ्यः, यथा-"निव्वाणसाहए जोए, जम्हा साहंति साहुणो। समा य सव्व-भूएसु, तम्हा ते भावसाहुणो ॥१॥" एष पंचनमस्कारः, सर्वपापप्रणाशनः। मंगलानां च सर्व्वेषां, प्रथमं भवति मंगलं ॥१॥ अत्र चाष्टषष्टिरक्षराणि नव पदानि अष्टौ च संपदो-विश्रामस्थानानि, तत्र सप्त एकैकपदा अंत्या तु द्विपदा, अधिकारिणस्तु पंचार्ह-दादयो मार्ग्गाविप्रणाशादिभिः कारणैर्नमस्कारार्हाः, यथा-"मग्गे १ अविप्पणासो २ आयारे ३ विणयया ४ सहायत्तं ५। पंचविहनमोक्कारं करेमि एएहिं हेऊहिं ॥१॥"ति, अस्य पाठे ऐहिकामुष्मिकफलप्रदर्शनायाह—

इहलोगंमि तिदंडी सादिव्वं माउलिंगवणमेव। परलोय चंडपिंगल हुंडियजक्खो य दिट्ठंता ॥१८॥ दारं ॥

इहलोके पाठकजनापेक्षया अत्रैव जन्मनि त्रिदंडीति त्रिदंड्युपलक्षितः श्रावकसुतो दृष्टान्तः १ 'सादिव्वं'ति श्रावकसुताया देवतासान्निध्यं २ 'माउलिंगवणमेव'त्ति मातुलिंगवनं-बीजपूरारामं तेन सूचितः श्रावकश्चेति ३ एवमेते 'इहलोग'त्ति इहलोकफलप्रतिपादका दृष्टान्ताः, तथा परलोके-अन्यभवे चंडपिंगलः हुंडिकयक्षश्च दृष्टान्ताविति गाथासमुदायार्थः। भावार्थस्तु सर्व्वोदाहरणानां पुलिंद्रमिथुनकथानकादवसेयः, तथाहि—

वसुंधरावधूक्रीडापुष्करे पुष्करार्द्धके। समृद्धो भरते ग्रामः, सिद्धावट इति स्मृतः ॥१॥ विश्वारामं कषायाग्निसंतप्तं देशनाजलैः। तत्रायात् सुव्रताचार्यः, सिंचन्नब्द इवान्यदा ॥२॥ वर्षारात्रस्तदा प्राप्तो, वियुक्तजनदुर्जनः। केटकीकुतजोल्लुम्बिरोलंबनिकुरुंबकः ॥३॥ यत्र धाराधरोऽजस्रं,धाराभिर्नीपपद्धतिम्। स्पृशन् कंटकितां चक्रुः,कराग्रैर्धववत् प्रियाम् ॥४॥ ततः पृथ्वीं पयःपूर्णां, नवांकुरां त्रसाकुलाम्। दृष्ट्वा सूरिवरः साधूनूचेऽनूचानपुंगव ॥५॥ विहर्त्तुं मुनिसिंहानां, सांप्रतं नहि सांप्रतम्। इत्युक्त्वा सपरीवारस्तं ग्रामं प्राविशद् गुरुः ॥६॥ ग्रामणीरागमज्ञानां, गुरुर्ग्रामाग्रणीपुरः। उक्त्वा शय्याफलं शय्यां, याचित्वा तत्र तस्थिवान् ॥७॥ तस्थुर्महर्षयस्तत्र, केचिन्मासमुपोषिताः। द्विमासीं च त्रिमासीं च, चतुर्मासीं च केचन ॥८॥ दुर्दमानंगदमनो, दमसारो महामुनिः। तत्रैको गुरुमापृच्छय, समीपस्थं गिरिं ययौ ॥९॥ तद्गुहायामनाहारः, स्वाध्यायध्यानतत्परः। स समग्रां चतुर्मासीं, तस्थौ सुस्थिरमानसः ॥१०॥ पुलिंद्रमिथुनं तत्राजगामेतस्ततो भ्रमन्। तस्यर्षेर्दर्शनेनाशु, नाशमाप क्षणादघम् ॥११॥ दमसारोऽपि तज् ज्ञात्वा, योग्यं योग्योपदेशवित्। दिदेश पठनं तस्य, परमेष्ठिनमस्कृतेः ॥१२॥ पुलिंद्रमिथुनं तां च, पपाठाशठमानसम्। परोपकारप्रचिकीः, पुनः साधुस्तदादिशत् ॥१३॥ असौ पंचनमस्कारमंत्रः परममंगलम्। युवाभ्यामनिशं ध्येयस्त्रिकालं सर्वपापहृत् ॥१४॥ चक्राते तत्-

१ नमस्कारफले राजसिंहः

थैवैतौ, वर्षारात्रात्यये मुनिः। विहर्तुमन्यतोऽगच्छत्, स्वस्थात्मा गच्छसंयुतः ॥१५॥ तथाविधमकृत्वाऽघं, मिथुनं तत्प्रभृत्यपि। आससाद क्रमान्मृत्युमुपकारं मुनेः स्मरन् ॥१६॥ अस्त्यत्र भरते क्षेत्रे, नगरं मणिमंदिरम्। अदभ्रैः शरदभ्राभैर्देवागारैर्मनोहरम् ॥१७॥ यत्रास्ति व्यसनी लोको, दाने लुब्धो यशोऽर्जने। अकृत्यकरणे भीरुरतृप्तश्च गुणग्रहे ॥१८॥ परस्वहरणे पंगुः, परस्त्रीदर्शनेऽन्धकः। मूकश्च परदोषोक्तावज्ञश्च परयाचने ॥१९॥ राजा राजमृगांकोऽत्र, राजेवास्ति जनप्रियः। परमेष परेषूच्चैः, कल्पांततपनोपमः ॥२०॥ विजयेति प्रिया तस्य, यां पश्यन्नतिसुंदराम्। मन्येऽनिमेषदृग् भेजेऽनिमिषौकोऽनिमेषताम् ॥२१॥ गर्भेऽमुष्याः पुलिंद्रोऽसौ, गुहायामिव केसरी। सिंहस्वप्नेन विख्यातगुणव्यूहोऽवतीर्णवान् ॥२२॥ जातस्य तस्य पुत्रस्य, पिता जन्मोत्सवं मुदा। स्वप्नतुल्यं तथा नाम, राजसिंह इति व्यधात् ॥२३॥ अक्लेशेन कलास्तेन, गृहीता गुरुसंनिधौ। द्वासप्ततिरपि प्रौढप्रज्ञाप्रागल्भ्यशालिना ॥२४॥ मतिमान् सुमतिर्नाम, मतिसारस्य मंत्रिणः। सुतस्तस्य सुहृद् जज्ञे, कलाकौशलपेशलः ॥२५॥ कुमारः प्राप तारुण्यं, लावण्यकमलालयम्। ललनालोचनालीनां, यत् सदाऽम्भोजखंडवत् ॥२६॥ प्रेक्षमाणाः स्त्रियो मार्गं, तद्दर्शनसमुत्सुकाः। नेत्रैः कुर्व्वन्ति नीलाब्जकल्पैर्दत्तोपहारकम् ॥२७॥ तद्दर्शनसतृष्णानां, तरुणीनां विनिर्गतैः। गवाक्षेषु मुखैर्व्योम, लक्ष्यते शशिलक्षयुक् ॥२८॥ नार्यः स्तुवन्ति गायंति, तं पश्यंति तथाऽप्यसौ। मनागपि मनस्तासु, मुनींद्र इव न व्यधात् ॥२९॥ कदाचिद् राजसिंहोऽथ, समित्रो निर्गतो बहिः। वाहयित्वा बहून् वाहान्, विशश्राम तरोस्तले ॥३०॥ दृष्ट्वाऽथ पथिकं कंचित्, कुमारस्तमभाषत। कुतस्त्वमागाः? गंताऽसि क्वापश्यः किंचिदद्भुतम्? ॥३१॥ पथिकोऽपि तमानम्योपविश्य पुरतोऽवदत्। विकिरन्निव हारौघं, प्रसरद्दशनांशुभिः ॥३२॥ शृणु कुमार! सुकोविदराजितं, जितहृषीकमुनिव्रजपावितम्। वितरदद्भुतदानसुमानवं, नववयस्तरुणीगणसुंदरं ॥३३॥ दरभरापगमश्रितसंमदं,

मदजलक्षरदुत्तमवारणम्। रणशताजितसद्भटरक्षितं, क्षितरुजादिविवर्जितपूर्जनम् ॥३४॥ जनकृतार्हतसद्मबहामहं, महदिहास्ति हि पद्मपुरं पुरम्। पुरवराच्च ततोऽहमिहागमं,गमनमिच्छुरथो शृणु यत्र तत् ॥३५॥(द्रुतवि०) त्रिभिर्विशेषकम्॥ युगादौ पुंडरीकस्य,कषायकरिखंडने। गणभृत्पुंडरीकस्य,निर्वृत्त्या यत् पवित्रितम् ॥३६॥ यच्चानेकजिनैः स्पृष्टं,यत्रासंख्यमहर्षयः। सिद्धिमीयुस्ततश्चैतत्सिद्धिक्षेत्रमिति स्मृतम् ॥३७॥ यदाद्यं सर्वतीर्थानां, तीर्थं शत्रुंजयाभिधम्। तन्नंतुं चलितोऽस्मीति, सांप्रतं त्वदुभुतं शृणु ॥ ३८ ॥ तत्र च पद्मपुरे बहुविबुधनिषेवितपदारविंदोऽस्ति। पद्म इति परमहिमा भूशक्रः शक्रसंकाशः ॥३९॥ यस्य प्रतापतपनस्तथा कथंचिद् विजृंभितो लोके। रिपुनारीमुखकमलश्रियमपि सेहे यथा नैव ॥४०॥(आर्ये)तस्यास्ति राजहंसीव,हृत्कुशेशयशायिनी। देवी हंसीति या शुद्धोभयपक्षविराजिनी ॥४१॥ तत्कुक्षौ रत्नवत्याख्या, स्त्रीरत्नं पुत्रिकाऽजनि। याऽत्रासा गुणयुक् मंजु,मुक्तामालेव निर्मला ॥४२॥ अपि विश्वेऽभिरामाभी, रामाभिः पूरिते पुरम्। वामार्धं दक्षिणार्धस्य, तस्याः स्यादनुरूपभाक् ॥४३॥ प्रज्ञाप्रकर्षतोऽधीत्य, सा सुखं सकलाः कलाः। कामक्रीडावनं प्राप, पावनं यौवनं क्रमात् ॥४४॥ विवाहार्हेति सा मात्रा, प्रैषि राज्ञः सदस्यथ। पितुः पादौ प्रणम्यैषा, निषसाद तदंतिके ॥४५॥ दृष्ट्वाऽतिरतिरूपां तां, राजाऽमात्यमवोचत। रूपेणास्या वरो योग्यः, किं स्यान्नो वेति संशये ? ॥४६॥ मंत्र्यूचे सुकृतैरस्या, वरोऽप्यस्त्युचितो ननु। योजयिष्यन्ति तान्येव, कुतोऽप्यानीय तं स्वयम्। ॥ ४७ ॥ इतश्च नृपतेरग्रे, चक्रे संगीतकं नटः। सा तं पुलिंद्रवेषेण, नृत्यंतं क्षणमैक्षत ॥४८॥ ततो मूर्च्छामगादेषा, पित्रा स्वस्थीकृताऽवदत्। जातिस्मृतिरभूद् मेऽद्य, पुलिन्द्री प्राग्भवेऽभवम् ॥४९॥ प्रियश्च मे पुलिन्द्रोऽभूत्, प्राणेभ्योऽपि प्रियः पतिः। संप्रत्यपि लभे तं चेत्, परिणेष्यामि नान्यथा ॥५०॥ एवं पान्थवचः शृण्वन्, राजसिंहः शनैः शनैः। मूर्च्छन् जातिस्मृतिं प्राप, स्वस्थोऽभूच्चीतवा-

ततः ॥५१॥ ततोऽसौ परमां प्रीतिं, प्रपन्नः प्राक्प्रियां प्रति। पथिकं स्माह किं तत्राग्रतोऽभूत् ? सोऽप्यदोऽवदत् ॥५२॥ श्रुत्वा गाढप्रतिज्ञां तां, स्वपुत्र्याः पद्मपार्थिवः। अस्याः पूर्वपतिर्ज्ञेयः, कथमित्यधृतिं दधौ ॥५३॥ एनं वृत्तांतमाकर्ण्य, तद्रागाद्राजसूनवः। दूरादेत्यात्मनः पूर्वभवे प्रोचुः पुलिन्द्रताम् ॥५४॥ सोचेऽभूवन् भवंतश्चेत्, पुलिन्द्राः पूर्वजन्मनि। किं कृतं सुकृतं ? तत्र, यत्प्रापुः श्रियमीदृशम् ॥५५॥ तदज्ञानवतां तेषां, मृषाभाषावतां व्यधात्। विनिश्चित्य पुलिन्द्रत्वमेषोपेक्षां पुलिन्द्रवत् ॥५६॥ ततोऽसत्यगिरो मर्त्या, विचिंत्येति नृपात्मजा। पुरुषद्वेषिणी जज्ञे, स्त्रीभिरेव वृता च सा ॥५७॥ नृरत्नमत्र धात्रा त्वं, स्त्रीरत्नं तत्र सा कृता। यदि स्याद् युवयोर्योगस्ततोऽस्य स्यात् कृतार्थता ॥५८॥ अत्यद्भुतं पांथमुखान्निशम्य, विद्वत्तयाऽभीष्टजनाख्यया च। तुष्टो ददौ पार्थिवसूनुरुच्चैरलङ्कृतिं स्वांगगतां ततोऽस्मै ॥५९॥(उपजातिः)पथिकं तं विसृज्यागाद्,राजसिंहो गृहं निजम्। उपायान् विविधान् ध्यायन्, द्रष्टुं रत्नवतीं सतीम् ॥६०॥ पौरैरितश्च राज्ञोऽग्रे, रहस्येवं निवेदितम्। यत्र यत्र व्रजत्येष, कुमारः क्रीडया पुरे ॥६१॥ मुक्त्वा महान्ति कार्याणि, त्यक्त्वा च क्रंदतः शिशून्। तत्र तत्रान्वधावंत,तत्सौभाग्यात् पुरस्त्रियः ॥६२॥ युग्मम् ॥ ततोऽसौ वार्यतां नाथ!,कथंचिद् बंभ्रमन् पुरे। वेत्रिणाऽज्ञापयद् राजा, कृतलोककृपोऽथ तम् ॥६३॥ कला अभ्यसता स्थेयमावासान्तः सदा त्वया। स्युर्बहिश्चारिणः पुंसो, विफलाः सकलाः कलाः ॥६४॥ श्रुत्वेत्यचिन्तयत् सोऽपि, तातः किमिदमादिशत् ?। ज्ञातपूर्वां प्रवृत्तिं तां, ततोऽस्य सुमतिर्जगौ ॥६५॥ कुमारस्तमथोऽवादीत्, भूपाज्ञा मेऽतिदुष्करा। तां पद्मनृपतेः पुत्रीं, वीक्षितुं चातिकौतुकम् ॥६६॥ पुण्यवत्त्वं गुणस्फूर्तिर्न भाषादौ च कौशलम्। देशान्तरं विना मित्र!, यियासुस्तदहं ततः ॥६७॥ मतिसारसुतः प्रोचे, सुमतिः सुमतिस्ततः। स्वामिन्नसि सहायोऽस्मिन्नर्थे कुर्यास्त्व ६८॥ मंत्रयित्वा षडक्षीणमिति मंत्रिसुतान्वितः। निर्ययौ नगरा-

देष, निशितासिकरो निशि ॥६९॥ महीं क्रामन्नरण्येऽसौ, प्रसुप्तो देवतागृहे। शुश्रावार्त्तस्वरं रात्रौ, पुरुषस्याथ कस्यचित् ॥७०॥ कृपाणपाणिरेषोऽथ, कृपालुस्तं प्रति व्रजन्। साक्षाद् राक्षसमैक्षिष्ट, कक्षाप्रक्षिप्तपूरुषम् ॥७१॥ तमभाषिष्ट शिष्टात्मंस्तिष्ठामुं मुंच साधकम्। अनेनापकृतं किं ते ?, कथय श्लथय क्रुधम् ॥७२॥ बभाषे राक्षसोऽप्येष, मामद्य स्ववशे चिकीः। सप्तरात्रक्षुधार्त्तेन, महामांसं मयाऽर्थितः ॥७३॥ दातुमेषोऽक्षमोऽहं तु, क्षामकुक्षिर्बुभुक्षया। नीतिमुख्य ! समाख्याहि, भक्ष्यं मुंचे कथं स्वकम् ॥७४॥ जगाद राजसिंहोऽपि, नृरक्षस्त्वं नृभक्षकम्। मुंचामुं ते प्रयच्छामि, महामांसं यदृच्छया ॥७५॥ राक्षसस्तं ततस्त्यक्त्वा, प्रोचे देहि त्वमेव तत्। सोऽप्यर्जुनोऽर्जनीयों हि, लोके किल निवर्त्तयेत् ॥७६॥ कुमारः करवालेन, करालेन निजांगतः। छित्त्वा सत्त्वांबुधिर्यावज्जांगलं दातुमुद्यतः ॥७७॥ पलादस्तावदानंदाद्, जगाद नृपनंदनम्। त्वत्सत्त्वेनाभितुष्टोऽसि, परप्राणपदेन ते ॥७८॥ वृणु वर्यं वरं वीर !, सोऽप्यूचेऽथ निशाचरम्। तुष्टस्त्वं मे स्फुटं चेत्, तत् साधकस्येप्सितं कुरु ॥७९॥ करिष्ये त्वद्गिरा किंतु, न मोघं देवदर्शनम्। इति चिंतामणिं दत्त्वा, रक्षोऽमुष्मै तिरोदधे ॥८०॥ निवृत्य नृपपुत्रोऽपि, गत्वा मित्रांतिकेऽब्रवीत्। तद्वृत्तांतं निशाशेषमतीत्य चलितोऽग्रतः ॥८१॥ चिंतारत्नानुभावेन, मुखान्यनुभवन्नमौ। सवयस्योऽवनीं क्रामन्, प्राप रत्नपुरं पुरम् ॥८२॥ तत्र रत्नोच्चयाकीर्णं, रत्नप्रासादसुंदरम्। यस्याग्रे रोहणः शैलो, मन्येऽवकरकूटवत् ॥८३॥ सोऽपश्यत् सर्वसौवर्णं, तत्रार्हच्चैत्यमुच्चकैः। मेरोः शृंगमिवोत्तुंगमागतं तद्दिदृक्षया ॥८४॥ तत्रार्हत्प्रतिमां रत्नमयीं नत्वा ततोऽस्तवीत्। प्रभूतभक्तिसंभूतरोमांचप्रचयो यथा ॥८५॥ "नेत्रे साम्यसुधारसैकसुभगे आस्यं प्रसन्नं सदा, यत्ते चाहितहेतिसंहतिलसत्संसर्गशून्यौ करौ। अंकश्च प्रतिबंधबंधुरवधूसंबंधवंध्योऽधिकं, तद्देवो भुवने त्वमेव भवसि श्रीवीतरागो ध्रुवम् ॥८६॥" (शार्दूल०)तदेष सर्वतो वीक्ष्य, चैत्यं चित्ते चमत्कृतः। चैत्यार्चकमथापृच्छत्,

को नामेदमचीकरत् ?॥८७॥ स प्राह श्रूयतामस्मिन्निपद्य मणिपीठके। यशोभद्राभिधोऽत्राभूच्छ्रेष्ठीभ्यः श्रावकोत्तमः॥८८॥ शिवो नाम सुतस्तस्य, द्यूतादिव्यसनार्दितः। पित्राद्यैः शिक्षितोऽप्येष, धर्म्ममीपन्न च व्यधात् ॥८९॥ सोऽनुशिष्टोऽन्यदा पित्रा, यदा तेऽभ्येति दुस्तरा। विपत्तदा तदुच्छित्त्यै, स्मरेः पंचनमस्क्रियाम् ॥ ९० ॥ सोऽथ तस्योपरोधात्तत्तथेति प्रत्यपद्यत। सदाराधनया मृत्वा, पिताऽस्य स्वर्गमासदत् ॥९१॥ शिवोऽथ संयुतः पुंभिर्विटाद्यैर्मधुपैरिव। वनं मत्त इव व्यालो, निनाय निधनं धनम् ॥९२॥ तद् विना नाप कुत्रापि, स्थानमानासनानि सः। तुषाणामकणानां हि, किं कस्याप्यादरो भवेत् ?॥९३॥ अथान्यदा तदासन्ने, त्रिदंड्येको निषेदिवान्। शिवं निरीक्ष्य निःश्रीकं, कृपालुरिव सोऽब्रवीत् ॥९४॥ विषण्ण इव वत्स! त्वं, वीक्ष्यसे हेतुतः कुतः ?। शिवोऽथाख्यन्न संतोषपोषकोऽर्थोऽस्ति नाथ! मे ॥९५॥ परिव्राड् तं प्रति प्रोचे, वचश्चेन्मे करिष्यसि। गृहदासीव ते वश्या, श्रीरवश्यं भविष्यति ॥९६॥ शिवोऽवोचद् वचस्विस्ते,करिष्ये निश्चितं वचः। त्वत्प्रसत्त्या प्रयात्वेषा, सापत्न्यादिव निःस्वता ॥९७॥ सोऽप्यूचे वत्स! यद्येवं, कुतोऽप्यानय तच्छवम्। अक्षतं सोऽपि तं प्राप, तदोद्बद्धं नरं द्रुमे ॥९८॥ रात्रौ कृष्णचतुर्दश्यां, शिवेनानाय्य तं शवम्। त्रिदंडी कुसुमादींश्च, श्मशाने स्वयमप्यगात् ॥९९॥ कुत्रापि यत्र शारदमेघशुभ्राद‌भ्रास्थिभिर्जातमिवोग्रदंतम्। कुत्रापि चित्याज्वलितानलोद्यज्ज्वालाचयैः पल्लवितांतरिक्षम् ॥१००॥ कुत्रापि निःशंकविकीर्णकेशदुःशाकिनीक्रीडनदुर्निरीक्षम्। कुत्रापि कंकालकरालकालवेतालमालाकलिताट्टहासम् ॥१०१॥ कुत्रापि रक्षोभिरतीव भीष्मं, कुत्रापि भूतैरतिभीतिहेतुः। कुत्रापि घूघूकृतिघोरघूकं, कुत्रापि रौद्रं च शिवारवेण ॥१०२॥ (इन्द्र०) त्रिभिर्विशेषकम्॥ त्रिदंडी मंडलं तत्र, दीप्रदीपकमंडलम्। चक्रे तत्र न्यधात्तीक्ष्णखड्गव्यग्रकरं शवम् ॥१०३॥ मृतकांह्रितलाभ्यंगविधावादिश्य तं शिवम्। स्वयं तु निश्चलस्वांतो, मंत्रं सस्मार

दुष्टधीः ॥१०४॥ स्वांते स्वस्मिन् शिवोऽप्यासीत्, दैवादापद्गतोऽथ सः। प्रचुरोपद्रवं तावच्छ्मशानं भीषणा क्षपा ॥ १०५ ॥ कपाली क्रूरकर्म्माऽयमकोशासिकरः शवः। निहंतुं मेऽस्य तन्नूनं, सर्वोऽप्ययमुपक्रमः ॥१०६॥ नेशे संप्रति नंष्टुं तत्, किं कुर्वे ? कस्य वा ब्रवे ?। एवं जातभयोऽस्मार्षीत्, पित्रादेशं शिवस्तदा ॥१०७॥ ततः सस्मार सर्वापद्भेत्रीं कर्त्रीं च संपदाम्। तदेकाग्रमनाः पंचपरमेष्ठिनमस्क्रियाम् ॥१०८॥ क्षणात्रिदंडिनस्तस्य, तीव्रमन्त्रवशाच्छवः। अचालीत् किंचिदुत्तस्थौ, पपाताथ तथैव सः ॥१०९॥ त्रिदंडी पतनात्तस्य, लक्षयन् क्षुण्णमात्मनः। स्थिरचित्तो विशेषेण, मंत्रं भूयोऽपि सोऽस्मरत् ॥११०॥ तथैवोत्थाय होमांते, तथैव पतितः शवः। अपृच्छच्छिवमेषोऽथ, मंत्रं कमपि वेत्सि किम् ? ॥१११॥ न वेद्मीत्यवदत् सोऽपि, फलं जानन्नमस्कृतेः। ततो भूयोऽपि तौ यत्नान्, मंत्रं सस्मरतुः स्वकम् ॥११२॥ नमस्कारवशात्कर्त्तुं, शिवस्याशिवमीश्वरः। न किंचित् क्रुद्धवैतालविवशोऽपि शवस्ततः॥११३॥ क्षणात्रिदंडिनो मुंडं, खड्गदंडेन तेन सः। फलं तालद्रुमस्येव, च्छित्त्वा भूम्यामपातयत् ॥११४॥ मंत्राधिष्ठितनिस्त्रिंशच्छिन्नो देहोऽथ तस्य सः। सुवर्णपुरुषो जज्ञे, मंत्रो हि महिमाद्भुतः ॥११५॥ शिवोऽथ शिवसंयुक्तो, वसुधाऽन्तर्निधाय तम्। दिनोदये गृहं प्राप, स्फुरत्पुण्योदयः सुधीः ॥११६॥ एतस्य प्रत्यहं कृत्तैरंगोपांगैः प्रसूनवत्। प्रातः प्रातः पुनर्भूतैर्महेभ्यः सोऽचिरादभूत् ॥११७॥ ज्ञात्वा धर्म्मफलं चित्ते,'शिवो वित्तं च गत्वरम्। दानं भोगांश्च तन्वानश्चारु चैत्यमिदं व्यधात् ॥११८॥ इति निशम्य शिवाहृत-मेतकं, नृपसुतो निजगाद वयस्यकम्। इह भवेऽपि नमस्कृतिवैभवं, स्फुरति पश्य विपादितविप्लवम् ॥११९॥ 'इहलोगंमि तिदंडी'-त्येतद् व्याख्यातं, सांप्रतमैहिकफल एव सादिव्यमित्येतद् भाव्यते- ततो नृपसुतः प्राप, पुरं पोतननामकम्। तत्राभ्रमोऽपि बभ्राम, तदालोकनकौतुकी ॥१२०॥ इतश्चैकत्र विन्यस्तमौक्तिकस्वस्तिकांकितम्। सुगंधिकुंकुमांभोभिः, सर्वतः सिक्तभूतलम् ॥१२१॥ अखंडैः

शंखवत् शुभ्रैरक्षतैः परिपूरितैः। प्रविशद्भिः सुसंकीर्णं, स्वर्णस्थालैः सहस्रशः ॥१२२॥ विहितस्फारशृंगारसारैरविधवाजनैः। गीयमानमहाध्वानस्फुरद्धवलमंगलम् ॥१२३॥ अनेकमार्गणादीनां, दीयमानमहाधनम्। सुधार्म्मिकजनानां च, क्रियमणोरुभक्तिकम् ॥१२४॥ अलक्षितविवाहादिलक्षणं तत्र पत्तने। कुमारोऽपश्यदेकस्मिन्, श्रीमद्गेहे महोत्सवम् ॥१२५॥ पंचभिः कुलकम् । अपृच्छच्च नरं कंचित्, किमत्रोत्सवकारणम् ?। सोऽवोचत् श्रूयतामेष, वृत्तांतश्चित्रकृत्तमः ॥१२६॥ गुप्तेन्द्रियः पुरेऽत्रास्ति, महेभ्यः सुगताभिधः। श्रावकः श्रावकाचारविचारचतुराशयः ॥१२७॥ रूपांतरधरीव श्रीस्तत्पुत्री श्रीमतीत्यभूत्। सदा सदाऽऽगमाभ्यासविशुद्धा शुद्धधर्मभृत् ॥१२८॥ मिथ्यादृक् कश्चिदत्रत्यः, सुरूपः सुभगाग्रणीः । श्रेष्ठिसूनुरनूनश्रीरन्यदा तामुदैक्षत ॥१२९॥ तद्रूपमोहितोऽत्यर्थं, सोऽथ प्रार्थ्य कथंचन। परिणिन्ये महर्द्ध्या तामानिन्ये च निजौकसि ॥१३०॥ वसंती तत्र तत्रत्यं, कृत्यं सर्वमसौ व्यधात्। न स्तोकमपि मिथ्यात्वं, किं त्वेकं परमार्हती ॥१३१॥ शनैः शनैस्ततस्तस्या, ननंद्राद्यखिलो जनः। जैनं धर्म्मं दधानायाः, प्रचुकोप पदे पदे ॥१३२॥ तथाऽप्यचिलचित्ता सा, कर्म्मवैचित्र्यचिंतिका। न चैनं श्लथयामास, स्वार्थभ्रंशो हि मूर्खता ॥१३३॥ शीलादिगुणयुक्ताया, अपि तस्याः प्रियोऽपि हि। व्यरांक्षीत् क्षुद्रदृष्टित्वात्, दृष्टिरागो हि दुस्त्यजः ॥१३४॥ उद्विवक्षुर्वधूमन्यां, जिघांसुस्तां च सोऽक्षिपत्। घटे सर्प्पं गृहस्यांतः, प्रच्छन्नं छादितोंऽहसा ॥१३५॥ निषद्य चित्रशालायां, श्रीमतीमादिदेश सः। गृहांतः पिहितात् कुंभात्, पुष्पाण्यानीय मेऽर्पय ॥१३६॥ पत्यादेशं समादाय, धीमती श्रीमती भृशम्। गुणयंती नमस्कारानावासांतः प्रविश्य सा ॥१३७॥ सुभैरवेऽपि निर्भीका, ज्ञानोद्योता तमस्यपि। पिधानं पाणिनोत्सार्य, घटे स्वं पाणिमक्षिपत् ॥१३८॥ नमस्कारप्रभावेन, तुष्टा शासनदेवता। हृत्वा सर्प्पं सुगंधीनि, व्यधात् पुष्पाणि तत्क्षणात् ॥१३९॥ गृहीत्वा श्रीमती तानि,

पत्युः पाणौ समार्पयत् । स ततश्चकितस्तत्र, गत्वा सर्वं न्यलोकयत् ॥१४०॥ तमसर्पं घटं दृष्ट्वा, दिव्यगंधान्वितं च सः । मेलयित्वा ततो लोकं, तं वृत्तान्तं न्यवेदयत् ॥१४१॥ लगित्वा पादयोस्तस्याः, श्रीमत्याः शुद्धमानसः । स्वागः स क्षमयामास, वर्णयामास तां मुहुः ॥१४२॥ तन्वंगी तमथोचे मे, तनुरप्यस्ति न क्रुधा । जानात्वात्महितं किंतु, भवानद्यापि मद्गिरा ॥१४३॥ उपशान्तस्य तस्याथ, सार्हद्धर्म्ममचीकथत् । स्वकर्मविवरं प्राप्य, तदाऽसौ बोधमासदत् ॥१४४॥ तुष्टः सद्धर्मसंप्राप्त्या, स कुटुम्बोऽपि संप्रति । इति प्रवर्त्तयामास, राजपुत्र! महोत्सवम् ॥१४५॥ महाद्भुतनिबंधनं समधिगम्य सुश्राविकाचरित्रमिति विश्रुतं नृपसुतः प्रहृष्टोऽधिकम् । उवाच सुमतिं सखे! फलमिहैव संप्रेक्ष्यते, नमस्कृतिमहातरोर्धनयशःसुखाद्यं महत् ॥१४६॥ अधुनेहलोकफल एव 'मातुलिंगवणमेवे'त्येतद् ज्ञातं विव्रियते-राजसिंहः समित्रोऽपि, ततः पोतनपत्तनात् । गच्छन्नग्रे क्रमात्प्राप, पुरं क्षितिप्रतिष्ठितम् ॥१४७॥ तदानंदमयं वीक्ष्य, स बाह्याभ्यंतरं तदा । विस्मितः स्माह तत्रत्यं, मर्त्यं कंचिन्नृपात्मजः ॥१४८॥ किं निमित्तमिदं वल्गद्विलासोल्लाससुंदरम् । ऊर्ध्वीकृतपताकौघं, प्रत्यट्टं प्रतिमन्दिरम् ॥१४९॥ स्वर्णस्तंभोपरिन्यस्तप्रशस्तमणितोरणम् । विधीयमानमंगल्यं, दधिदूर्वाक्षतादिभिः ॥१५०॥ दृश्यते नगरं सर्वं, प्रमोदभरनिर्भरम् । इत्युक्तः स पुमानूचे, कुमार! श्रूयतामिदम् ॥१५१॥ ॥ त्रिभिर्विशेषकम् ॥ पुरेऽत्राऽस्ति महीपालो, बलो नाम महाबलः । बलानुज इवारातेर्बलिनो बलसूदनः ॥१५२॥ वृष्टेऽन्यदाऽम्बुदेऽत्यर्थं, पृथुपूरप्रवाहिनीम् । वाहिनीं नगरासन्नां, जनो द्रष्टुमगाद् द्रुतम् ॥१५३॥ दक्षमुख्यः पुरारक्षस्तत्रैकं बीजपूरकम् । प्लाव्यमानं पयःपूरैर्महामानमुदैक्षत ॥१५४॥ प्रविश्य तरसा तत्र, तदाऽऽदाय च तत् स्वयम् । गत्वा समर्पयामास, बलराजस्य सोऽञ्जसा ॥१५५॥ वर्णतो गंधतश्चापि, दृष्ट्वोत्कृष्टं स पुष्टिकृत् । सुस्वादु च तदास्वाद्य, मुमुदे मेदिनीपतिः ॥१५६॥ राजा सत्कृत्य

तं प्रोचे, कुत्र प्राप्तमिदं त्वया?। सोऽप्युवाच नदीपूरे, ततो राजा तमभ्यधात् ॥१५७॥ अमुष्य मातुलिंगस्य, मूलोत्थानं गवेषय। नद्यास्तीरे व्रजन्नूर्ध्वमेष प्रैक्षिष्ट तद्वनम् ॥१५८॥ तदंतः प्रविशन्नूचे, स गोपैस्तत्समीपगैः। भो अत्र यः फलं लाति, मृत्युमेति स निश्चितम् ॥१५९॥ व्यावृत्त्य तमसौ राज्ञे, वृत्तान्त प्रत्यपीपदत्। राजाऽथ त्यक्तमर्यादस्तं प्रतीदमभापत ॥१६०॥ प्रवेश्य तत्र वारेण, पुरादेकैकमानुषम्। आनेतव्यं त्वयाऽवश्यं, बीजपूरं ततोऽन्वहम् ॥१६१॥ आरक्षः पुरलोकानां, लिखित्वा नामपत्रिकाम्। घटे क्षिप्त्वाऽन्वहं चैकां, कुमार्याऽऽकर्षयत्ततः ॥१६२॥ निर्ययौ पत्रिका यस्य, कृतांतस्येव दूतिका। आरक्षोऽग्राहयत् तेन, मातुलिंगं ततो वनात् ॥१६३॥ तदर्पयति राज्ञेऽसौ, मर्त्यस्तु म्रियतेऽथ सः। जनेष्वेवं विनश्य सु, विषसादाखिलं पुरम् ॥१६४॥ श्राद्धस्य जिनदासस्य, निर्ययौ पत्रिकाऽन्यदा। गृहे चैत्यानि सोऽर्चित्वा, क्षमयित्वा खमानुपान् ॥१६५॥ प्रत्याख्याय स साकारं, निर्विकारमनास्ततः। तद्वनं मातुलिंगाय, लीलावनमिवागमत् ॥१६६॥ सुधीरुच्चैःस्वरं धीरो, नमस्कारं समुद्‌गृणन्। जिनदासो वनस्यांतः, प्रविवेश समाहितः ॥१६७॥ वनाधिष्ठायकः क्षुद्रव्यंतरोऽथ निशम्य तम्। विराधितव्रतः स्मृत्वा, प्राग्जन्म प्रत्यबुध्यत ॥१६८॥ कृतांजलिपुटः सोऽथ, प्रत्यक्षीभूय तत्क्षणात्। श्रावकं तं नमस्कृत्य, गुरुभक्त्याऽब्रवीदिदम् ॥१६९॥ त्वं मे गुरुः सदाऽऽराध्यो, धर्मबोधविधानतः। वितरिष्यामि ते नित्यं, स्थानस्थस्यैव तत्फलम् ॥१७०॥ व्यावृत्य कृतकृत्यस्तं, वृत्तान्तं नृपतेर्जगौ। अश्नते च फलं शश्वदेकैकं व्यंतरादसौ ॥१७१॥ विश्राणयति राज्ञे तत्, तुष्टोऽत्यर्थं ततो नृपः। जिनधर्म्मं स्तुवन्नुच्चैर्जिनदासमपूजयत् ॥१७२॥ सकलेऽपि पुरे हर्षात्, पुनर्जात इवाधुना। राजपुत्र! धराधीश, इत्युत्सवमकारयत् ॥१७३॥ इति विबुध्य तदुत्सवकारणं, सुमतिमित्रमुवाच नृपात्मजः। फलमिदं परमेष्ठिनमस्कृतेरिह भवेऽपि सुखावहमीक्ष्यते ॥१७४॥ इदानीं नमस्कारस्य

परलोकफले चंडपिंगलदृष्टान्तो व्याख्यायते—राजपुत्रः समित्रोऽपि, नानाद्भुतयुतां ततः। वीक्षमाणः क्रमेणोर्व्वीं, वसंतपुरमासदत् ॥ १७५ ॥ तत्राशेषजनं वीक्ष्य, स नमस्कारतत्परम्। सुमतिं प्रत्युवाचैवं, विस्मयस्मेरमानसः ॥ १७६ ॥ मित्रात्रत्यः समस्तोऽपि, लोकः पंचनमस्कृतिम्। पापठ्यते विना शाठ्यं, तदत्रावेहि कारणम् ॥ १७७ ॥ कुतश्चित्पुरुषादेष, तदवेत्य समेत्य च। कुमारस्य पुरोऽवादीत्, जितमारस्य रूपतः ॥ १७८ ॥ परंतपः पुरेऽत्रासीज्जितशत्रुर्महीपतिः। भद्राभिधाना तस्याभूद्देवी भद्रगुणान्विता ॥ ७९॥ चौरः कदाचिदत्रैत्य, कुतश्चिचंडपिंगलः। प्रचंडश्चौरिकां कुर्व्वन्, पुरमेतदपीडयत् ॥१८०॥ भूमिभुजोऽन्यदा भित्त्वा, भांडागारमसौ ततः। जह्रे मनोहरं हारं, नक्षत्रश्रेणिसुन्दरम् ॥१८१॥ गुणतोऽपि कलावत्याः, कलावत्याः स तस्करः। गणिकाया गृहे गत्वा, हारं तस्यै ददौ मुदा ॥१८२॥ सा किंचिच्छ्राविका सोऽपि, भेजे भोगांस्तया समम्। आगादथ कृतानंगरंगाऽनंगत्रयोदशी ॥१८३॥ वेश्यास्तस्यामियुः सर्वाः, सर्वर्द्ध्या क्रीडितुं वने। दिक्चक्र शक्रचापश्रीस्तन्वाना रत्नभूषणैः ॥१८४॥ कलावत्यपि तं हारं, बिभ्रती हृदि ताः समाः। जेतुकामाऽऽत्मरूपेण, कामपत्नीव निर्ययौ ॥१८५॥ महादेव्यास्तदा दास्यस्तत्राजग्मुर्निरीक्षितुम्। वीक्ष्योपलक्षयामासुस्तं हारमतिहारिणम् ॥१८६॥ भद्रान्तिके द्रुतं गत्वा, दास्यस्तास्तं न्यवीविदन्। एषाऽप्याख्यत् क्षितीशाय, सोऽप्युवाचेति मन्त्रिणम् ॥१८७॥ अद्य कल्ये वसत्येषा, केन सार्द्धं कलावती?। तां ज्ञात्वा दस्युना चंडपिंगलेनेति सोऽवदत् ॥१८८॥ कलावत्या गृहं राजा, वेष्टयित्वा समंततः। ग्राहयित्वा च तं चौरं, शूलिकायामचिक्षिपत् ॥१८९॥ ज्ञात्वा तं शूलिकाविद्धं, दध्याविति कलावती। मत्प्रमादादयं प्रापदवस्थामीदृशीं हहा ॥१९०॥ कृतमेतो विमुच्यैनमपरैः पुरुषैः खलु। संमत्येतस्य दास्यामि, परमेष्ठिनमस्क्रियाम् ॥१९१॥ ध्यात्वेति धीमती तत्र, गत्वा पंचनमस्कृतिम्। श्रेयस्करीमदा-

तस्मै, तस्कराय यशस्करीम् ॥१९२॥ नमस्कारवशादस्मात्, सुतः स्यामस्य भूपतेः। निदानमिति तेनैषा, कारयामास सादरा ॥१९३॥ मृत्वाऽमुष्य महीशस्य, दुष्कर्म्माऽपि स तस्करः। महादेव्याः सुतो जज्ञे, नमस्कारो हि कामधुक् ॥१९४॥ ततोऽस्यातिप्रबंधेन, कृत्वा जन्मोत्सवं पिता। पुरंदर इति ख्यातं, नामधेयं मुदा व्यधात् ॥१९५॥ तन्मृत्योरस्य गर्भस्य, कालं ज्ञात्वा कलावती। समानं मनसाऽध्यासीन्नन्वेष स मम प्रियः ॥१९६॥ रमयंती ततो भूपनंदनं सा मुहुर्मुहुः। कुर्वाणं रोदनं प्राह, मा रुदश्चंडपिंगल! ॥१९७॥ नाम स्वं प्राच्यमुत्कर्णो, नित्यमाकर्णयन्नसौ। पश्यन्नास्यं तथैतस्याः, ससार प्राग्भवं निजम् ॥१९८॥ गतेऽथ जितशत्रौ द्यां, नृपोऽत्राभूत्पुरंदरः। त्यक्तान्यसंगमां मत्वा, भेजे चासौ कलावतीम् ॥१९९॥ परमेष्ठिनमस्कारफलमेतदवेत्य सः। जिनधर्म्मरतोऽधीते, सदा पंचनमस्कृतिम् ॥२००॥ ततोऽसौ सर्वलोकोऽपि, तामधीते कृतादरः। न खल्वेश मृषा भाषा, यथा राजा तथा प्रजा ॥२०१॥ अथ सुमतिमुखेनाख्यातमेतन्निशम्य, क्षितिपतिसुत एषोऽत्यंततुष्टान्तरात्मा। सुहृदमिदमवोचत् पश्य मंत्रेश्वरस्य, स्फुरितमिति परत्रामुष्य चौरस्य कीदृग्? ॥२०२॥ संप्रति प्रेत्यफल एव हुंडिकयक्षदृष्टान्तो वितन्यते–राजसिंहस्ततोऽप्यग्रे, गच्छन् सुमतिसंयुतः। मथुरायां दिशि प्राच्यां, यक्षाऽऽयतनमैक्षत ॥२०३॥ निर्म्मापितं च तस्याग्रे, शूलिकाभिन्नतस्करम्। दीयमाननमस्कारमिव श्राद्धार्चयाऽन्वितम् ॥२०४॥ अपूर्वमिदमाश्चर्यं, दृष्ट्वा राजमृगांकभूः। ऊचे तत्पूजकं भद्र!, वृत्तान्तोऽयं निवेद्यताम् ॥२०५॥ सोऽब्रवीदिह राजाऽस्ति, यथार्थः शत्रुमर्दनः। हितः पितेव शिष्टानामशिष्टानां कृतांतवत् ॥२०६॥ तथाऽत्र जिनदत्ताऽऽख्यः, श्रेष्ठी श्रावककुंजरः। करुणारसपाथोधिः, सत्त्वरत्नमहानिधिः ॥२०७॥ अत्रैकदा कुतोऽप्येत्य, हुंडिको नाम तस्करः। अलक्ष्यश्चौरिकां चक्रे, सततं विश्वविश्रुतः ॥२०८॥ सोऽन्यदा श्रीमतो गेहात्, खात्रेण स्वर्णमग्रहीत्। प्रबुद्धेनाथ पूत्चक्रे,

गृहलोकेन तत्क्षणात् ॥२०९॥ ततश्चारक्षपुरुषैर्वेष्टयित्वा समंततः। सलोप्त्रः स गृहीतस्तैर्नहि गोधा बिले बिले ॥२१०॥ निवेदितोऽथ राज्ञस्तस्करो भास्करोदये। विश्ववैरी विडम्ब्यासौ, हन्यतामित्युवाच सः ॥२११॥ निंबपत्रस्रजा रक्तकणवीरस्रजा च तैः। सरावमालिकाद्यैश्च, मंडितो वध्यमंडनैः। ॥२१२॥ जीर्णशीर्णकलिंजेन, ध्रियमाणेन मूर्द्धनि । कंठक्षिप्तेन लोप्त्रेण, दूरादपि स लक्षितः ॥२१३॥ समारोप्य खरेऽक्रर्ण, डिंडिमास्फालपूर्वकम्। उच्चैरुद्घोषयांचक्रे, तदागश्चत्वरादिषु ॥२१४॥ भो भोः शृणुत पूर्लोकाश्चौरिकामीदृशीमसौ। यच्चक्रे हुंडिकस्तेन, नीयते वध्यधामनि ॥२१५॥ आत्मनीना जनास्तद् भो, मा कार्षीत् कोऽपि चौरिकाम्। न्यायचंचुर्नृपः स्वस्याप्यन्यायं न सहिष्यते ॥२१६॥ ततस्तैस्ताड्यमानोऽसौ, यष्टिलोष्टादिभिर्भृशम् । निष्कृपैः शप्यमानश्च, स्वपापफलमाप्नुहि ॥२१७॥ सज्जनैर्वीक्ष्यमाणश्च, कृपामंथरलोचनैः। सदा प्रमत्तैः षिड्गाद्यैर्हस्यमानः पदे पदे ॥२१८॥ विपाकः कर्म्मणां हीति, चिंत्यमानः स योगिभिः। इ ईदृशानि पापानि, न कार्याणीतिवादिभिः ॥२१९॥ दुर्दमैर्डिम्भसंघातैः, समंतात्परिवेष्टितः। कांदिशीकः समग्रासु, चक्षुषी दिक्षु विक्षिपन् ॥२२०॥ एवं विडंबनापूर्वं, भ्रमयित्वाऽखिले पुरे। आघातभूमिकां निन्ये, नगरारक्षकैस्ततः ॥२२१॥ क्षिप्त्वा तं शूलिकायां ते, मुमुचुश्चरपुरुषान्। कस्कोऽस्य कुरुते किं किं ?, येन सोऽपि निगृह्यते ॥२२२॥ ततश्चातपतप्तस्य, तस्यासृग्विनिसर्गतः। तृडत्यर्थं समुत्पेदे, धिगिमा या तदाऽप्यभूत् ॥२२३॥ यः प्रयाति तदासन्नं, सलिलं तमयाचत। न कोऽपि पाययामास, भीमभूपतिभीलुकः॥२२४॥ श्रेष्ठ्यगात् जिनदत्तोऽथ, पथा तेन तमप्यसौ। ययाचे तदथोपेत्य, सदयोऽसौ तमब्रवीत् ॥२२५॥ पानीयं पाययिष्यामि, किंतु पंचनमस्कृतिम्। तत्परः स्मर येन त्वं, लभेथाः सुगतिं यतः ॥२२६॥ हिंसावाननृतप्रियः परधनाहर्त्ता परस्त्रीरतः,किंचान्येष्वपि लोकगर्हितमहापापेषु गाढोद्यतः।

मंत्रेशं स यदि स्मरेदविरतं प्राणात्यये सर्वथा, दुष्कर्मार्जितदुर्गदुर्गतिरपि स्वर्गी भवेत् मानवः ॥२२७॥ततस्तं श्रावकेणोक्तं,नमस्कारं मुहुर्मुहुः। सर्वापसारविसारं,संसस्मार स तस्करः॥२२८॥ श्रावकोऽथ गृहं गत्वा,गृहीत्वा करकं करे। यावदायाद् द्रुतं-तावत् ,पंचत्वं प्राप तस्करः॥२२९॥ महर्द्धिकेषु यक्षेषु,देवत्वेनोदपद्यत। यादृशी मतिरंते हि, गतिः स्यात् खलु तादृशी ॥२३०॥ इतश्च तैर्नरैर्गुप्तैर्गत्वा राज्ञे निवेदितः। जिनदत्तस्य वृत्तान्तः, सोऽथ तं वध्यमादिशत् ॥२३१॥ ततश्चारक्षकैर्मंक्षु, स समारोप्य रासभे। विडंबयितुमारेभे, यावत्तावत् स यक्षराट् ॥२३२॥ अवधिज्ञानतो ज्ञात्वा, स्वगुरोरीदृशीं दशाम्। निर्माय पर्वतं चैकं, निर्मायः सोऽब्रवीदिदम् ॥२३३॥ आकर्णयत राजाद्या, अरे रे पुरुषब्रुवाः। चूरयिष्यामि वः सर्वान्, भूधरेणामुना ध्रुवम् ॥२३४॥ यदमुष्य कृपांभोधेर्जगतोऽपि हितैषिणः। एवं विडंबनाऽऽरब्धा, जिनदत्तस्य मत्प्रभोः ॥२३५॥ ततः सरभसं राजा, सपौरः सपरिच्छदः। पुष्पादिभिस्तमानर्च्च, मृत्युभीर्महती हि भीः ॥२३६॥ व्यजिज्ञपच्च नत्वैवं, स्वामिन्नः क्षम्यतामिदम्। अज्ञानादपराद्धं यत्, संतो हि नतवत्सलाः ॥२३७॥ यक्षोऽवोचदमुं श्राद्धं, श्रयध्वं शरणं जनाः। कारयध्वं च पूर्वस्यां, मदायतनमुच्चकैः ॥२३८॥ ततो राजा समारोप्य, श्रेष्ठिनं गंधसिंधुरे। पुरे प्रवेशयामास, क्षमयामास चासकृत् ॥२३९॥ तथा हुंडिकयक्षस्य, चैत्यमेतदकारयत्। शूलाभिन्नां च तन्मूर्त्तिं, श्रावकप्रतिमायुताम् ॥२४०॥ इत्याकर्ण्य नृपात्मजः प्रमुदितो मित्रं प्रतीदं जगौ, चौरोऽप्येष नमस्कृतिस्मृतिवशाद् जज्ञे यथा यक्षराट्। तद्वत् राजकुलेऽधुना समभवं पूर्वं पुलिंद्रोऽप्यहं, कीदृग् भोः परमेष्ठिमंत्रललितं प्रेत्यात्र संप्रेक्ष्यते ?॥२४१॥ श्रुत्वेति सुमतिः प्रोचे, राजपुत्रं कृतादरः। पुलिंद्रता कथं तेऽभूत् ?, ब्रूहि सौहार्दसुंदर ! ॥२४२॥ कुमारोऽपि नमस्कारसारं पूर्वं भवं निजम्। हर्षप्रकर्षादाचख्यौ, सख्युरग्रे यथास्थितम् ॥२४३॥ स्मित्वाऽथ सुमतिः प्रोचे, मन्ये रत्नवतीं भवान्।

परिणेतुं पुराजन्मपत्नीं प्रचलितो ननु ॥२४४॥ वेषेण पुरुषस्यैषा, पुरुषद्वेषिणी भृशम् । कथं द्रष्टुमपि प्राप्या ?, दूरे संभाषणादिकम् ॥२४५॥ सोऽवोचत् सर्वकार्येषु, सावधानो विधिः सखे ! । तत्कथं क्रियते चिंता, चित्तसंतापिका यतः ॥२४६॥ अघटितघटितानि घटयति, सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति, यानि पुमान्नैव चिंतयति ॥२४७॥ राजसिंहो नमस्कारज्ञातान्येतान्यथ स्मरन् । प्रचचाल पुरो गंतुं, समित्रोऽपि ततः पुरात् ॥२४८॥ क्रमेण पृथ्वीं क्रामन्नरण्यानीं गतोऽन्यदा । तत्र तृष्णातपश्रांतः, प्रापदेकं सरोवरम् ॥२४९॥ उत्फुल्लपंकजाकीर्णं, यद् रेजे निर्मलोदकम् । वियत्तारात्रजव्याप्तं, विश्रांतमिव भूतले ॥२५०॥ कृत्वा स्नानादि तत्तीरे, सहकारतरोस्तले । क्षणं खेदापनोदाय, सुष्वाप क्ष्मापतेः सुतः ॥२५१॥ लतांतरितगात्रोऽथ, सुमतिः कुसुमोच्चयम् । कुर्वाणो नभसाऽद्राक्षीदायातं तत्र खेचरम् ॥२५२॥ वीक्ष्यामरकुमाराभं, कुमारं सोऽप्यचिंतयत् । ममानुपदिका कांता, दृष्ट्वाऽसिन्ननु रंस्यति ॥२५३॥ ततश्चासौ लतागुल्माद्, गृहीत्वौषधिमंजसा । घृष्ट्वा तं छटयाऽऽच्छोद्य, ललाटे तं स्त्रियं व्यधात् ॥२५४॥ गते विद्याधरे तत्र, तत्कान्ताऽथाजगाम सा । स्त्रीरूपां तां विलोक्येति, मनसीति व्यचिंतयत् ॥२५५॥ दृष्ट्वैतां मत्पतिर्नूनं, निवृत्तोऽनेन वर्त्मना । रक्तोऽमुष्यां हि मामेष, त्यक्ष्यतीति विषदुषी ॥२५६॥ तत्रान्यामौषधीं ज्ञात्वा, विद्याधरवधूः सुधीः । विधाय विधिना तेन, पुरुषं तं ततो ययौ ॥२५७॥ तदादाय प्रबुद्धस्य, दर्शयन्नौषधीयुगम् । राजसूनोः प्रबंधं तं, सुमतिः प्रत्यपीपदत् ॥२५८॥ इत्युग्रपुण्यसंभारसारो राजमृगांकसूः । समित्रोऽपि क्रमात् प्राप, ततः पद्मपुरं पुरम् ॥२५९॥ प्रासादे तत्र सौवर्णे, तस्थौ सुस्थः स्थिराशयः । चिंतारत्नप्रभावेण, जातसर्वसमीहितः ॥२६०॥ सर्वेषूत्सार्यमाणेषु, नृषु चक्षुष्पथादथ । रत्नवत्यन्यदा चैत्ये, ययौ स्त्रीभिः समावृता ॥२६१॥ स्त्रीरूपौ तावुभौ भूत्वा, गत्वा प्राग् तत्र तस्थतुः । अर्चामानर्च जैनेन्द्रीं, साऽथ स्रक्चंदना-

दिभिः ॥२६२॥ प्रतीयंती तु सा तत्र, पद्माक्षी पद्मपुत्रिका । प्रेक्षांचक्रे कुमारस्त्रीं, सुरस्त्रीमिव सुन्दराम् ॥२६३॥ सहर्षं सुचिरं वीक्ष्य, कुमारी तामभाषत । अपूर्वेव ममाभाति, भवत्यागमनं कुतः ? ॥२६४॥ मित्रस्त्र्यूचेऽन्यतः स्थानान्मत्सखीयमिहाययौ । ततो रत्नवती भूयोऽप्युवाचेति वचस्विनी ॥२६५॥ त्वत्सखी मम दृष्टापि, चंद्रज्योत्स्नाऽम्बुधेरिव । कुरुते भृशमुल्लासं, तदायातु मदौकसि ॥२६६॥ एवं निष्कृत्रिमं प्रोक्ते, जग्मतुः कृत्रिमस्त्रियौ । तया च कृतसत्कारे,चिरं च तत्र तस्थतुः ॥२६७॥ कथांतरेऽन्यदाऽवादीत् ,कुमारस्त्री नृपात्मजाम् । तावन्न ज्ञायतेऽद्यापि,पतिस्ते स पुलिंद्रकः॥२६८॥ अनुरूपं विना कान्तं, कमनीयापि कन्यका । मणीव स्वर्णसंबंधं, विना नूनं न राजते ॥२६९॥ भुवनानंदनं कंचित्, ततस्त्वं नृपनंदनम् । स्वयंवरागतं वीक्ष्य, विवाहयितुमर्हसि ॥२७०॥ ततो रत्नवतीत्यूचे, मुक्त्वा तं प्राग्भवप्रियम् । अवश्यं न करिष्येऽहमपि स्वर्गपतिं पतिम् ॥२७१॥ कुमारस्त्री जगादैवं, यद्येवं तव यौवनम् । विना भोगं वृथाऽरण्ये, मालत्या मुकुलं यथा ॥२७२॥ रत्नवत्यवदच्चित्तविश्रांत्यै क्रियते पतिः । सा च त्वय्येव मेऽस्त्यर्थं, कार्यं नान्येन केनचित् ॥२७३॥ तां पुलिंद्रवरस्त्र्यूचे, स पुलिंद्रो धवस्तव । लक्ष्यो हि लक्ष्मणा केन, समाख्याहि मृगाक्षि ! मे ॥२७४॥ ततः पद्मसुताऽवोचत् , प्राकृतं सुकृतं मम । यो जानाति स विज्ञेयः, प्राणेशो मम निश्चितम् ॥२७५॥ बभाषे राजसिंहस्त्री, दमसारर्षिभाषितम् । मंत्रेशमनिशं स्मृत्वा, मृत्वाऽभूस्त्वं नृपात्मजा ॥२७६॥ श्रुत्वेति रत्नवत्याख्यचंद्रलेखां सखीमसौ । किं स्वतः परतो वा मे, वेत्ति वृत्तान्तमेतकम् ? ॥२७७॥ साऽऽख्यदेषा स्वतो वेत्ति, यदस्यां ते मनोरतिः । दृश्यतेऽस्या नरस्येव,चेष्टा च वचनादिका ॥२७८॥ विकारास्ते सरस्यास्याः,समीपे च स्फुरन्ति ते । कामशास्त्रेषु ये प्रोक्ताः,स्त्रीणां प्रियसमागमे॥२७९॥ । यदाह–"स्त्री कांतं वीक्ष्य नाभीं प्रकटयति मुहुर्विक्षिपंती कटाक्षान् ,दोर्मूलं दर्शयंती रचयति कुसुमापीडमुत्क्षि-

नमस्कारमाहात्म्ये मातुलिंग ज्ञातं

त्तपाणिः। रोमांचस्वेदजृंभाः श्रयति कुचतटश्रं वस्त्रं विधत्ते, सोत्कंठं वक्ति नीविं शिथिलयति दशत्योष्ठमंगं भनक्ति ॥२८०॥ तत्कारणात्कुतोऽप्येष, प्राग्जन्मदयितस्तव। मर्त्यमूर्त्तिं तिरोधाय, स्त्रीत्वं चाकृत कृत्रिमम् ॥२८१॥ संज्ञिता रत्नवत्या सा, कुमारस्त्रीमभाषत। स्वामिन्! स्वाभाविकं रूपं, दर्शयाद्य प्रसीद मे ॥२८२॥ द्वितीयौषधियोगेन, योगसिद्धाविचक्षणात्! प्रपन्नौ तौ निजं रूपं, जगन्नेत्रामृतांजनम् ॥२८३॥ कुमाररूपमालोक्य, राजकन्योपमातिगम्। प्रमोदं प्राप तं यस्य, संकीर्णा त्रिजगत्यपि ॥२८४॥ चंद्रलेखा बभाषेऽथ, यथा नाथ! प्रकाशितं। रूपं तथाऽनुगृह्यास्मान्, कुलाद्यमपि कथ्यताम् ॥२८५॥ राजसिंहाज्ञया राष्ट्रपुरजाति-कुलादिकम्। पांथप्रबंधसंबंधं, सर्वं सुमतिरभ्यधात् ॥२८६॥ अवेत्यैनं च वृत्तान्तं, तुष्टोऽत्यर्थमथांजसा। राजसिंहकुमाराय, राजा रत्नवतीं ददौ ॥२८७॥ बिभ्राणः परमानंदं, परमर्ध्या परेऽहनि। श्रीपतिः श्रीमिव श्रीमान्, कुमारस्तामुदूढवान् ॥२८८॥ करीन्द्रा-दिप्रदानेन, कृतभक्तिर्नृपेण सः। रत्नवत्या समं भेजे, भोगान् भाग्यैः समार्जितान् ॥२८९॥ पित्राऽन्यदा प्रतीहारः, प्रहितोऽसौ कृतानतिः। कुमारस्यार्पयल्लेखं, तुष्टस्तं सोऽप्यवाचयत् ॥२९०॥ स्वस्ति श्रीमंदिराद्रम्यात्, पुराच्छ्रीमणिमंदिरात्। राजा राजमृगांकोऽथ, श्रीमत्पद्मपुरे पुरे ॥२९१॥ कुमारतिलकं राजसिंहमालिंग्य संमदात्। सस्नेहमतिसोत्कंठं, समादिशति तद्यथा ॥२९२॥ वयं कुश-लिनः किंतु, त्वद्वियोगविषादिताः। त्वद्दर्शनसुधास्वादं, सोत्साहा वत्स! वांछितुम् ॥२९३॥ अन्यद्वार्द्धकतो धर्म्मप्रवृद्धाधिक-बुद्धयः। व्रतं जिघृक्षवोऽतस्त्वमेत्य द्राग् राज्यमाश्रय ॥२९४॥ राजसिंहकुमारोऽथाऽऽपृच्छ्य पद्मनृपं ततः। चतुरंगचमूयुक्तश्चचाल स्वपुरं प्रति ॥२९५॥ प्राप्यैतत् सद्गजारूढो, रत्नवत्या युतोऽविशत्। शच्याऽमा हस्तिमल्लस्थः, शचीपतिरिव स्वकम् ॥२९६॥ प्रणतः पितृपादानां, भक्त्या भून्यस्तमस्तकः। आशीःप्रदानपूर्व्वं सः, पितृभ्यामभिनंदितः ॥२९७॥ नृपतिस्तुष्टचित्तोऽथ, चिंतयामास

चेतसि। निवेश्याशु निजे राज्ये, करिष्ये धर्म्ममादृतः ॥२९८॥ नत्वाऽथोद्यानपालेन, विज्ञप्तं भूपतेः पुरः। देवोद्यानेऽद्य संप्राप्तः, आचार्यो गुणसागरः ॥२९९॥ अहो मे भाग्यसंभारो, यदागात् समये गुरुः। इति ध्यात्वा नृपो राज्ये, राजसिंहमतिष्ठिपत् ॥३००॥ दत्त्वा दानं जिनौकस्सु, कृत्वाऽर्चां च गजस्थितः। राजसिंहयुतो राजा, ययौ गुर्वन्तिके ततः ॥३०१॥ नत्वा राजमृगांकस्तं, विनयेन व्यजिज्ञपत्। भीमाद् भवोदधेर्दीक्षातर्योत्तारय मां प्रभो! ॥३०२॥ गुरुणाऽपि ततो दत्तं, व्रतमस्य यथाविधि। तपस्तप्त्वा क्रमेणासौ, राजर्षिः सुगतिं ययौ ॥३०३॥ गृहिधर्म्मो गुरोः पार्श्वे, राज्ञा सम्यक्त्वपूर्वकः। रत्नवत्या समं राजसिंहेन प्रत्यपद्यत ॥३०४॥ गुरून्नत्वा निजं स्थानमथागादवनीपतिः। गुरुस्तु सपरीवारो, विजहार वसुंधराम् ॥३०५॥ ततस्त्रिवर्गसंसर्गसुंदरो नृपसत्तमः। राजसिंहश्चिरं कालं, प्राज्यं साम्राज्यमन्वशात् ॥३०६॥ नमस्कारप्रभावेण, दुर्जया अपि भूभुजः। शेषामिवाज्ञां शीर्षेण, लीलया तस्य बिभ्रति ॥३०७॥ वनं पुष्पैः सरः पद्मैस्ताराभिश्च यथा नभः। तथाऽसौ भूषितां चैत्यैर्धात्रीं धात्रीधवो व्यधात् ॥३०८॥ ग्लानत्वमन्यदा प्राप्तः, सोऽथ स्वार्थचिकीर्नृपः। सुतं प्रतापसिंहाख्यं, दक्षो राज्ये न्यवीविशत् ॥ ३०९ ॥ राजा रत्नवतीयुक्तो, राजसिंहोऽथ सिंहवत्। निर्भयोऽपि भवाद् भीतो, धर्म्माचार्यमजूहवत् ॥३१०॥ वंदित्वा तत्पदद्वंद्वं, निर्द्वंद्वं रचितांजलिः। जगाद भगवन्! मह्यं, समयोचितमादिश ॥३११॥ गुरुः प्रोचे महाभाग!, भवकोटिसुदुर्लभाम्। कुरुष्वाराधनां सम्यक्, सर्वाशंसाविवर्जितः ॥३१२॥ स पर्यंकासनासीनः, पूर्वाशाभिमुखस्ततः। गुरुभिः कारयांचक्रे, एवमाराधनामसौ ॥३१३॥ कथय त्वमतीचारान्, ज्ञानाद्याचारपंचके। यथागृहीतभंगानि, व्रतानि पुनराश्रय ॥३१४॥ भूदकाग्निमरुद्वृक्षान्, द्व्यक्षांस्त्र्यक्षांश्चतुरक्षकान्। श्वभ्रितिर्यग्नृदेवांश्च, क्षमयैषु क्षमस्व च ॥३१५॥ प्राणिघातानृतस्तेयसंवेशनपरिग्रहाः। मायालोभौ मद-

क्रोधौ, रागद्विड्ढाटिनीचता: ॥३१६॥ अभ्याख्यानारतिरती, निंदा च शठतानृतम्। मिथ्यात्वं चेत्यघस्थानान्यष्टादश विवर्जय ॥३१७॥ यत्सर्वजन्मभिः पापं, त्रिदोषैः त्रिविधं त्रिधा। त्रिलोक्यां यत्त्वयाऽकारि, तन्निंद निजदुष्कृतम् ॥३१८॥ विधिवद्दानशीलादि, सुकृतं यद् जगत्रये। स्वस्यान्यस्यापि सर्वाढ्यं,तत् त्रिधाऽप्यनुमोदय ॥३१९॥ जिनान् सिद्धान् मुनीन् धर्मं, शरण्यं शरणं श्रय। त्यजाहारं चतुर्भेदं, नमस्कारं मुहुः स्मर ॥३२०॥ नाहं कस्य न मे कश्चिदिति देहेऽपि निर्ममः। किं त्वाशंसेः सदा जैनाः, पादाः स्युर्मे गतिर्मतिः ॥३२१॥ विधायाराधनामेवं, राजसिंहः समाधिना। विपद्य ब्रह्मलोकेऽभूद्दशाब्ध्यायुः सुराधिपः ॥३२२॥ रत्नवत्यपि मृत्वैत्रं, ब्रह्मलोकादिवं ययौ। तौ द्वावपि ततश्च्युत्वा, क्रमेण शिवमेष्यतः ॥३२३॥ इत्याकर्ण्य पुलिंद्रवृत्तमतुलं नृस्वःशिवश्रीप्रदं, ज्ञात्वा पंचनमस्कृतिस्मृतिफलं-ज्ञातेषु शेषेषु च। तद् भव्या! भवभावभीतिभिदुरं भव्येन भावेन भो, नित्यं ध्यायत पंचमंगलमहामंत्रं सदा सौख्यदम् ॥ ३२७॥

॥ इति नमस्कारफलदृष्टांतः ॥

व्याख्यातं प्रथमद्वारं, अधुना 'अणुसरणं सावउ'त्ति द्वितीयद्वारावयवार्थमभिधित्सुराह—

कोऽहं? पुणो कंमि कुलंमि जाओ?, किं संमदिट्ठी वयनियमधारी?।
उयाहुऽहं दंसणसित्तजुत्तो?, एयं तु अन्नं च विचिंतइज्जा ॥ १९ ॥ दारं २॥

सुप्तस्य किल सर्वविस्मृतेः प्रबुद्धेन द्रव्यादिसारणा कार्या, तत्र द्रव्यतः कोऽहं यतिर्वा गृहीति, पुनःशब्दात् क्षेत्रकालपरिग्रहः, तत्र क्षेत्रतः आर्यदेशाद्युत्पन्नोऽहमिति, कालतः प्रत्यूषसमये, विबुद्धोऽहमिति भावतः, कस्मिन्नुग्रादिके कुले जातोऽहमिति,

भावमेव विशिनष्टि-किमहं सम्यग्दृष्टिः सन् व्रतनियमधारी ?' व्रतानि-मूलगुणाः नियमा-उत्तरगुणाः, उताहोनिपातोऽथवार्थो, अथवाऽहं दर्शनमात्रयुक्तः, यतोऽस्याभावे धर्मस्य सर्वथाऽप्यभावः, यदागमः-"दंसणभट्ठो भट्ठो दंसणभट्ठस्स नत्थि निव्वाणं । सिज्झंति चरणरहिया दंसणरहिया न सिज्झंति ॥१॥" ततः 'एयं तु'त्ति एतत् सम्यक्त्वं पालयितव्यमेव, तथा 'अण्णं च'त्ति अन्यच्च सम्यक्त्वगुणस्थानाद् भिन्नं देशविरतिरूपं-पंचमगुणस्थानं वक्ष्यमाणस्वरूपं विचिंतयेदिति वृत्तार्थः॥ 'वयाइं मि'त्ति तृतीय-द्वारस्य बहुभंगसंभवत्वं दर्शयन्नाह—

एक्कं व दो तिन्नि व पंच सत्त, अणुव्वयाइं नियमे वयाइं ।
एक्केक्कभेएणं दुहा तिहेणं, पक्खं च मासं अह जावजीवं ॥२०॥

'एक्कं व'त्ति स्थूलप्राणातिपातादीनां द्वादशव्रतानां द्वादशैककसंयोगानां मध्येऽन्यतमदेकं वा व्रतं, तथा स्थूलप्राणातिपात-मृषावादादिपदद्वयात्मकषट्षष्टिद्विकसंयोगेष्वन्यतमे द्वे वा व्रते, तथा स्थूलप्राणातिपातमृषावादादत्तादानादिपदत्रयरूपविंशत्युत्तर-द्विशतसंयोगेष्वन्यतमानि त्रीणि वा व्रतानि, वाशब्दाच्चतुष्कसंयोगादिपरिग्रहः। 'पंच सत्त'त्ति पंच सप्तेति पदद्वयमेवं योजनीयं, 'अणुव्वयाइं'ति आद्यानि पंचाणुव्रतानि मूलगुणाः 'नियमे वयाइं'ति नियमे-उत्तरगुणविषये सप्तान्यव्रतानि, अत्र च भंगकसूच-नार्थमाह-'इक्केक्के'त्यादि, एकैकभेदेन वक्ष्यमाणलक्षणेन षष्ठभंगेन तथा द्वित्रादिविधेनेति स्थूलप्राणातिपातादि न करोति न कारयति मनोवाक्कायैरिति प्रथमभंगेन, अत्राद्यंतग्रहणात् षड्भंग्यपि द्रष्टव्या, सा च पंचाणुव्रतान्याश्रित्य लेशतो दर्श्यते-स्थूलप्राणातिपातं न करोति न कारयति मनोवाक्कायैरिति प्रथमो भंगः, न करोति न कारयति च मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यां वा

सामान्यतो योगद्वयमंगीकृत्येति द्वितीयः, एवं सर्वत्र, ननु मनो विना कथं वाक्कायसंभवः, उच्यते, अनाभोगेन विशेषोपयोगा-भावाद्वा मनसो गौणत्वादसंज्ञिवत् मुख्यवृत्त्या वाक्कायव्यापारोऽवसेयः,न करोति न कारयति च मनसा वाचा कायेन चेति तृतीयः३ न करोति न कारयति वा मनोवाक्कायैरिति चतुर्थः ४ न करोति न कारयति वा मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यामिति पंचमः ५ न करोति न कारयति वा मनसा वाचा कायेन वेति षष्ठः ६, यदाहुः श्रीभद्रबाहुपादाः–"दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ। दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥१॥ एगविहं दुविहेणं एक्केक्कविहेण छट्ठओ होइ"त्ति एवं मृषावादादत्तादानमैथुनपरिग्रहेषु पृथग् २ षड् भंगाः, एवं पंचाणुव्रतानां पंचैकसंयोगमीलने त्रिंशद् भंगका भवंति, यदाहुः–"वय-एक्कगसंयोगाण हुंति पंचण्ह तीसई भंग"त्ति १, एवमेव पंचाणुव्रतानां दशद्विकसंयोगानां त्रीणि शतानि षष्ट्यधिकानि भंगाः स्युः, कथं?–स्थूलप्राणातिपातव्रतं द्विविधं त्रिविधेन मृषावादव्रतमपि द्विविधं त्रिविधेनेत्येको भंगः १ प्रथमं तथैव द्वितीयं तु द्विविधं द्विविधेनेति द्वितीयः २ प्रथमं तथैव द्वितीयं द्विविधमेकविधेनेति तृतीयः ३ प्रथमं तथैव द्वितीयमेकविधत्रिविधेनेति चतुर्थः ४ प्रथमं तथैव द्वितीयमेकविधं द्विविधेनेति पंचमः ५ प्रथमं तथैव द्वितीयमेकविधमेकविधेनेति षष्ठः ६, एते प्राणातिपात-प्रथमपदेन मृषावादसत्काः षड् भंगाः लब्धाः,अनेनैव क्रमेण प्राणातिपातस्य द्विविधं द्विविधेनेत्यादीनि पंच पदानि पृथग् २ मृषावाद-सत्कान् षड् भंगान् लभंते, एवमेकद्विकसंयोगभंगमीलने षट्त्रिंशत्, एवं शेषाणामपि नवानां द्विकसंयोगानां पृथक् २ षट्त्रिंशत्, दशानां षट्त्रिंशतो मीलने जातं यथोक्तं ३६०, यदाहुः–"दुगसंजोगाण दसण्ह तिन्नि सट्ठा सया हुंति"त्ति २, तथा दशसु त्रिक-संयोगेष्वेकविंशशतानि षष्ट्यधिकानि,कथं?, आद्यव्रतं द्विविधं त्रिविधेन, द्वितीयतृतीये तथैव १, प्रथमद्वितीये तथैव तृतीयं द्विविध-

द्विविधेन २, आद्ये तथैव तृतीयं द्विविधमेकविधेन ३ आद्ये तथैव तृतीयं एकविधं त्रिविधेन ४ आद्ये तथैव तृतीयमेकविधं द्विविधेन ५ आद्ये तथैव तृतीयमेकविधमेकविधेन षष्ठः ६, एते मृषावादादिपदेन षड् भंगा लब्धाः, एवं तस्य शेषाण्यपि पंच पदानि षट् २ लभंते, जाता षट्त्रिंशत्, एषा प्राणातिपाताद्यपदेन लब्धा, एवमस्य शेषाणि पंच पदानि प्रत्येकं षट्त्रिंशत् षट्त्रिंशल्लभंते, एवं षण्णां षट्त्रिंशतो मीलने जाते द्वे शते षोडशोत्तरे २१६, एते च एकत्रिकसंयोगेन लब्धे, एवं शेषा अपि नव त्रिकसंयोगाः प्रत्येकं द्वे शते षोडशोत्तरे लभंते, सर्वमीलने जातं यथोक्तं २१६०, यदाहुः "तिगसंयोगदसण्हं भंगसया एक्कवीसई सट्ठ"त्ति। तथा पंचसु चतुष्कसंयोगेषु चतुःषष्टिः शतान्यशीत्यधिकानि, कथं ?, प्रथमद्वितीयतृतीयानि द्विविधं त्रिविधेन तुर्यमपि तथैव १, आद्यानि त्रीणि तथैव तुर्यं तु द्विविधं द्विविधेन २ आद्यानि तथैव तुर्यं तु द्विविधमेकविधेन ३ आद्यानि तथैव तुर्यमेकविधं द्विविधेन ४ आद्यानि तथैव तुर्यमेकविधं द्विविधेन ५ आद्यानि तथैव तुर्यमेकविधमेकविधेन ६, एते षडदत्तादानाद्यपदेन लब्धाः, तच्छेषाण्यपि इत्थं प्रत्येकं षट् २ लभंते, जाता षट्त्रिंशत्, एषा मृषावादाद्यपदेन लब्धा, तच्छेषाण्यप्येवमेव, जाते द्वे शते षोडशोत्तरे, एते तु प्राणातिपाताद्यपदेन लब्धाः, तच्छेषाण्यप्येवमेव, सर्वमीलने जातानि द्वादश शतानि षण्णवत्यधिकानि, एतान्येकचतुष्कसंयोगेन लब्धानि, एवं शेषा अपि चत्वारश्चतुष्कसंयोगाः प्रत्येकमेतानि १२९६ लभंते, सर्वमीलने जातं यथोक्तं ६४८०, यदाहुः—"चउसंजोगाणं पुण चउसट्ठिसयाणऽसीयाणि"त्ति ४। तथा पंचकसंयोग एक एव, तत्र सप्त सहस्रा सप्त शतानि षट्सप्तत्यधिकानि, कथं ?, प्राणातिपातमृषावादादत्तादानमैथुनानि द्विविधंत्रिविधेन पंचममपि तथैव १. चत्वार्याद्यानि तथैव पंचमं द्विविधं द्विविधेन २ आद्यानि तथैव पंचमं द्विविधमेकविधेन ३ आद्यानि तथैव पंचममेकविधंत्रिविधेन ४ आद्यानि तथैव पंचममेकविधं द्विविधेन ५

| व्रतानि | संयोगाः | षड्भंगी | कुल भांगा |
| --- | --- | --- | --- |
| १ | १२ | ६ | ७२ |
| २ | ६६ | ३६ | २३७६ |
| ३ | २२० | २१६ | ४७५२० |
| ४ | ४९५ | १२९६ | ६४१५२० |
| ५ | ७९२ | ७७७६ | ६१५८५९२ |
| ६ | ९२४ | ४६६५६ | ४३११०१४४ |
| ७ | ७९२ | २७९९३६ | २२१७०९३१२ |
| ८ | ४९५ | १६७९६१६ | ८३१४०९९२० |
| ९ | २२० | १००७७६९६ | २२१७०८३१२० |
| १० | ६६ | ६०४६६१७६ | ३९९०७६७६१६ |
| ११ | १२ | ३६२७९७०५६ | ४३५३५६४६७२ |
| १२ | १ | २१७६७८२३३६ | २१७६७८२३३६ |
| | | | १३८४१२८७२०० |

आद्यानि तथैव पंचममेकविधमेकविधेन ६, एते षट् मैथुनाद्यपदेन लब्धाः, तच्छेषाण्यप्येवमेव, जाता षट्त्रिंशत्, एषाऽदत्तादानाद्यपदेन लब्धा, तच्छेषाण्यप्यस्मेव, जाते द्वे शते षोडशोत्तरे, एते तु मृषावादाद्यपदेन लब्धा, तच्छेषाण्यप्येवमेव,जातानि द्वादश शतानि षण्णवत्यधिकानि, एतानि प्राणातिपाताद्यपदेन लब्धानि, तच्छेषाण्यप्येवमेव, जातं यथोक्तं ७७७६, यदाहुः—"सतसत्तरी सयाइं छसत्तराइं तु पंच संजोगे"त्ति, उत्तरगुणाविरताभ्यां च मीलने सर्वाग्रं १६८०८, यदाहुः-"उत्तरगुणअविरयमेलियाण जाणाहि सव्वग्गं॥ सोलस चेव सहस्सा अट्ठ सया चेव हुंति अट्ठहिया। एसो उ सावगाणं वयगहणविही समासेणं ॥१॥"ति, स्थापना चात्र पंचाणुव्रतानां भंगानां षण्णां चेत्थं स्थापितानामक्षचारणिकया पूर्वोक्तयुक्त्या वर्त्त्यमानानां राशिसंयोगागतसर्वाग्राणां देवकुलिका—

अत्र च संयोगानयनोपायः—उभयमुहं रासिदुगं हिट्ठिलाणंतरेण भय पढमं । लद्धं रासिविभत्ते तस्सुवरि गुणंतिसंजोगा ॥१॥

| ग्रा | २<br>३ | २<br>२ | २<br>१ | ०<br>३ | १<br>२ | १<br>१ |
|---|---|---|---|---|---|---|
| मृ | २<br>३ | २<br>२ | २<br>१ | १<br>३ | १<br>२ | १<br>१ |
| अ | २<br>३ | २<br>२ | २<br>१ | १<br>३ | १<br>२ | १<br>१ |
| मै | २<br>३ | २<br>२ | २<br>१ | १<br>३ | १<br>२ | १<br>१ |
| प | २<br>३ | २<br>२ | २<br>१ | १<br>३ | १<br>२ | १<br>१ |

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| ५ | ४ | ३ | २ | १ |

एवं स्थापितयो राश्योरेककसंयोगाः पंच भवंति, नात्र करणगाथा व्यापारः, द्विकसंयोगास्तु दश,कथं ?, अधस्तनैककानंतरद्विकेनोपरितनचतुष्कस्य प्रथममधःपंचकलक्षणमंकं भजेत्, लब्धौ सार्द्धौ द्वौ, ताभ्यामुपरितनं चतुष्कं गुणयेत् लब्धा दश द्विकसंयोगाः, ते च द्विकानतरत्रिकेण भजेत् ,लब्धास्त्रयः सत्रिभागाः, तैश्चोपरितनं त्रिकं गुणयेत् , जाता दश त्रिकसंयोगाः, तांश्च त्रिकानंतरचतुष्ककेन भजेत् , लब्धौ सार्द्धौ द्वौ, ताभ्यामुपरितनं द्विकं गुणयेत् , जाताः पंच चतुष्कसंयोगाः, तांश्चतुष्ककानंतरपंचकेन भजेल्लब्ध एकः,तेनोपरितनमेकं गुणयेद् , एकेन गुणितं तदेवेत्येक एव जातः पंचकसंयोगः । एवं षडादिष्वपि तत्तदंकभागगुणनाभ्यां संयोगानानयेत् । यद्वा—एगाइं एगुत्तरमंकमुवरि लिहिय चएहिं समसंखं । चरिमो अंको एक्कगसंयोगा ताव नायव्वा ॥१॥ हिट्ठिल्लमुवरि खिविउं वारंवारंपि चरमचरमं तु । दुगसंजोगाइकमा नेयव्वा जाव पढमंकं ॥२॥ अक्षचारणिकया वा संयोगा आनेतव्याः,सा च सुखोन्नेया। सर्वव्रतभंगकानयनाय करणगाथेयं—एगवए छब्भंगा निद्दिट्ठा सावगाण जे सुत्ते । ते च्चिय वयवुड्ढीए सत्तगुणा छज्जुया कमसो ॥१॥द्वादशव्रतानां सर्वाग्रमिदं १३८४१२८७२०२ तेरसकोडिसयाइं चुलसीइजुयाइं बारस य लक्खा । सत्तासीइ सहस्सा दुन्नि सया तह दुरग्गा य ॥१॥ नवभंगिकाएकविंशतिभंगिका-

एकोनपंचाशद्भंगिकाखंडदेवकुलिकाश्च ग्रथगौरवभयान्नेहोक्ताः, दिग्मात्रमेवैतत्प्रदर्शितमिति ॥ सांप्रतं व्रतानां कालप्रमाणार्थमाह– 'पक्खं चे'त्यादि, किं मयैतानि व्रतानि पक्षं मासं वा यावत् अथवा यावज्जीवं गृहीतानीत्येवमनुसरतीति । सांप्रतं 'योग' इति तुर्यद्वारं, तच्च लाघवार्थं दैवसिकावश्यकावसरे सभावार्थं वक्ष्यते, अत्र तु तप एव विशिष्टनिर्जराहेतुः, यदुक्तं–"सव्वासिं पयडीणं परिणामवसादुवक्कमो भणिओ । पायमणिकाइयाणं तवसा उ निकाइयाणंपी ॥१॥"त्यतः षाण्मासिकतपःकायोत्सर्गे तद्विषयचिंतनार्थं सूत्रद्वयमाह—

छण्हं तिहीण मज्झंमि, का तिही अज्ज वासरे ? । किं वा कल्लाणगं अज्ज, लोगनाहाण संतियं ? ॥२१॥

मासाभ्यंतर इति गम्यते, षण्णां तिथीनां सितेतराष्टमीचतुर्दशीपूर्णिमामावास्यालक्षणानां मध्ये का तिथिरद्य वासरे ?, किं वाऽद्य कल्याणकं–इह भरते अत्रावसर्पिण्यां च्यवनजन्मादिभिरुपलक्षिता तिथिः कल्याणकं,केषां ?–लोकनाथानां–जगत्प्रभूणाम्–ऋषभादिजिनानां सत्कं–संबंधीति ।

पच्चक्खाणं तु जं तंमि, दिणंमी गिण्हियव्वयं । चिंतेऊणं सुसड्ढो उ, कुणइ अन्नं तओ इमं ॥२२॥ दारं ४ ।

प्रत्याख्यानं तु यदुपवासादि तस्मिन् अष्टम्यादिदिने ग्रहीतव्यं तच् चिंतयित्वा सुश्राद्धः तुशब्दात्तथैव कृत्वा ततः आवश्यकानंतरं करोत्यन्यदिदं–वक्ष्यमाणमिति ॥ सांप्रतं पंचमं चैत्यवन्दनद्वारं, तच्च द्रव्यभावपूजारूपं, तत्र द्रव्यपूजा अंगप्रक्षालनादिपूर्विकेत्यतस्तद्विधिं द्विसूत्र्याऽऽह—

तसाइजीवरहिए, भूमिभागे विसुद्धए । फासुएणं तु नीरेणं, इअरेणं गलिएण उ ॥२३॥

**काऊणं विहिणा ण्हाणं, सेयवत्थनियंसणो। मुहकोसं तु काऊणं, गिहबिंबाणि पमज्जए ॥२४॥**

त्रसादिजीवरहिते-उत्तिंगपनकादिजंतुभिरसंसक्ते भूमिभागे विशुद्धके-विषमशुषिरादिदोषैरदूषिते प्रासुकेन तु नीरेण, तदभावे इतरेण-सचित्तेनापि गलितेनैव कृत्वा विधिना-परिमितोदकसंपातिमसत्त्वरक्षणादियतनया श्वेतवस्त्रनिवसनः-संवीतशुचिसितांशुकयुगलः,मुखकोशं त्वष्टपुटपटप्रांतेनास्य,नासिकाश्वासनिरोधं कृत्वैव गृहबिंबानि प्रमार्ष्टि लोमहस्तकेनेति शेषः, अत्र च यद्यपि षट्कायोपमर्दादिका काचिद् विराधना स्यात् तथापि कूपोदाहरणेन श्रावकस्य द्रव्यस्तवः कर्त्तुमुचितः, यदाहुः-"अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो। संसारपयणुकरणो दव्वथए कूवदिट्ठंतो ॥१॥ दृष्टांतस्त्वयं-कश्चित्पुमान् अरण्यानीं वरेण्यसरणिच्युतः। अटाट्यमान उत्तप्तो, मध्याह्नेऽतितृषातुरः ॥१॥ चखान विवरं सोऽथ, निम्नावन्यामुदन्यकः। ववृधेऽस्य तृडत्यर्थं, तथा पंकश्च वर्ष्मणि ॥२॥ तदुत्थं शीतलं स्वच्छं, पायं पायं पयः पुमान्। चिच्छेद स दुरुच्छेदां, तृषामेष क्षणादपि ॥३॥ अविहस्तः स्वहस्तेन, सेवं सेवं तदंभसा। भीष्मग्रीष्मार्कसंभूतं, देहादाहमजीहरत् ॥४॥ प्रक्षाल्य तज्जलेनांगं, क्षालयामास मंक्ष्वसौ। प्राचीनं च नवीनं च, मलं निर्मलबुद्धिकृत् ॥५॥ अत्र चोपनयो भव्यजीवो भ्राम्यन् भवाटवीम्। तृष्णातापमलैः क्लान्तो, लोभतृट्पापलक्षणैः ॥६॥ विवेकभूमिमासाद्य, सोऽथ द्रव्यस्तवं दधत्। विषयेषु तृषां तीक्ष्णां, क्षिणोत्यक्षुण्णहर्षभाक् ॥७॥ तं द्रष्टुमागतान् दृष्ट्वा, मुनीन् श्रुत्वाऽथ देशनाम्। कषायशिखिसंतापं, निर्वापयति शुद्धधीः ॥८॥ दानादिकं च सद्धर्मं, कुर्व्वन् पापमयं मलम्। क्षालयत्यखिलं क्षिप्रं, युक्तोऽतः श्रावकस्य सः ॥९॥ इति कूपदृष्टान्तः ॥ पूजाविधिं दिशन् आह—

**गंधोदएण ण्हाविन्ता, जिणे तेलोक्कबंधवे। गोसीसचंदणाईहिं, विलिंपित्ता य पूयए ॥२५॥ पुप्फेहिं गंधेहिं**

सुगंधएहिं, धूवेहिं दीवेहि य अक्खएहिं। नाणाफलेहिं च घणेहि निच्चं, पाणीयपुन्नेहि य भायणेहिं ॥२६॥

गंधोदकेन घ्राणतर्प्पणघुसृणाद्युन्मिश्रोदकेन स्नपयित्वा जिनान्–त्रैलोक्यबान्धवान् गोशीर्षचंदनादिभिः आदिशब्दात् कर्पूराद्यैर्विलिप्य च पूजयेत्, कैरित्याह–'पुप्फेही'त्यादि, पुष्पैः–प्रत्यग्रकुसुमैर्गंधैः–वासैर्धूपैः कृत्वा अगुर्वाद्यैः,किंविशिष्टैः पुष्पाद्यैः?–'सुगंधिभिः' सद्गंधबंधुरैः, तथा दीपैश्च–प्रदीपैः अक्षतैः–शाल्यादितंदुलैः नानाफलैश्च–बीजपूराद्यैः, घृतैरित्यस्योपलक्षणत्वात् सर्वनैवेद्यैः नित्यं–प्रत्यहं पानीयपूर्णैश्च भाजनैः–निर्मलोदकभृतशंखादिपात्रैरितिसूत्रद्वयार्थः ॥ पूजाफलमाह—

जओ पूयापभावेणं, सुव्वए जिणसासणे। देवत्तं नरनाहत्तं, तित्थनाहत्तणं तहा ॥२७॥

यतो–यस्माद्धेतोः पूजाप्रभावेण श्रूयते जिनशासने, फलमिति गम्यते, किं तदित्याह–देवत्वं नरनाथत्वं तीर्थनाथत्वं चेति ॥ यथायोगं देवत्वादिषु दृष्टान्तानाह—

थेरी कुरुनरिंदो, सुव्वओ जिणसेहरो। सच्चई वासुदेवो य, नारओ य महायसो ॥२८॥

स्थविरा कुरुनरेन्द्रश्च सुव्रतो जिनशेखरः सत्यकिर्वासुदेवश्च नारदश्च महायशाः इत्यक्षरसंस्कारः। भावार्थस्तु कथानकेभ्योऽवसेयः, तत्र देवत्वे स्थविरोदाहरणं–श्रीमानिह महावीरो,वीरः कर्म्मविदारणे। रणेर्ष्यादिविनिर्मुक्तो,विमुक्तो भवबंधनात् ॥१॥ ग्रामाकरपुराकीर्णां, विहरन्नेकदा महीम्। पुरीं संप्राप काकंदीं, भव्यांभोजनभोमणिः ॥२॥ चित्रं तत्र च समवसरणं विबुधा व्यधुः। रजतस्वर्णमाणिक्यवप्रत्रयविराजितम् ॥३॥ पूर्वादिदिक्षु रत्नानि, मध्येऽशोकतरोस्तले। सिंहासनानि चत्वारि, विदधुर्व्यंतरामराः ॥४॥ तीर्थाय नम इत्युक्त्वा, तेषु रत्नासनेष्वथ। भगवान् श्रीमहावीरश्चतुर्मुख उपाविशत् ॥५॥ जितारिभूपतेस्तत्र, गत्वाऽथोद्यानपालकाः।

शशंसुः श्रीमहावीरागमनं शुभकृन्मुदा ॥६॥ सिंहासनादथोत्थाय, त्यक्त्वा पद्भ्यां च पादुके। जिनाभिमुखमानंदात्, सप्ताष्टानि पदान्यगात् ॥७॥ नृपः कृतोत्तरासंगस्तत्रस्थोऽपि पुरःस्थवत्। श्रीवीरं विधिना नत्वा, निषसादासने पुनः॥८॥ दत्त्वा तेभ्यो महादानं, नृपतिः परितोषिकम्। दध्यौ चेति धियां धाम, मत्वा नेदीयसीं निशाम् ॥९॥ वंदिष्ये त्रिजगद्वंद्यं, प्रभाते सर्वसंपदा। ध्यात्वेति कारयामास, पुर्यामाघोषणामिमाम् ॥१०॥ आकर्णयत भो लोका !, लोकालोकप्रकाशकः। केवलज्ञानमार्त्तंडः, सुरासुरकृतानतिः ॥११॥ जंगमः कल्पशाखीव, कामधेनुरिवापशुः। चिंतामणिरिवानश्मो, जगतामीप्सितप्रदः ॥१२॥ भव्यप्राणिजनान् सर्वान्, समुद्धर्तुं भवावटात्। भगवान् समवासार्षीत्, श्रीवीरः स्वपुराद् बहिः ॥१३॥ प्रातस्तं वंदितुं राजा, सर्वर्द्ध्याऽपि व्रजिष्यति। राजादेशात्ततो यूयं, तं वंदध्वं हितैषिणः ॥१४॥ इमां चाघोषणां श्रुत्वा, तत्राजन्मदरिद्रिता। जराजीर्णाखिलांगी च, वृद्धैकेदमचिंतयत् ॥१५॥ जानेऽहमात्मनस्त्रीणि, जन्मानि चरितैर्निजैः। नाकार्षं प्राग्भवे पुण्यं, जज्ञे तेनेह दुःखिता ॥१६॥ दानशीलतपोभावलवमप्यत्र न व्यधाम्। तेनामुत्रापि मे दुःखं, भविष्यत्येव केवलम् ॥१७॥ आजन्मोदरपूर्त्यर्थचर्या, भवकोटिसुदुर्लभम्। हारितं मानुषं जन्म, ही मया भाग्यहीनया ॥१८॥ तदद्यापि महावीरं, नत्वा श्रुत्वा च तद्गिरः। दृष्ट्वा च तन्मुखाम्भोजं, ग्रहीष्ये जन्मनः फलम् ॥१९॥ परं ततोऽहमायाता, भोक्ष्ये कस्य निकेतने ?। ज्ञातमेधांसि चानेष्ये, भविता तेन भोजनम् ॥२०॥ विचिंत्येति प्रभातेऽपि, ययावासन्नवर्त्तिनः। गिरेरुपत्यकाभूमिं, तत्र चैधांस्यमीमिलत् ॥२१॥ गत्वा गिरिनदीं तत्र, सा च दुर्गतनारिका। हस्तपादादि धावित्वा, चिंतयामास चेतसि ॥२२॥ गेहेषु जिनगृहेषु, पूजयंति जिनं सदा। श्रीमंतो वरपुष्पाद्यैः, श्रिया सर्वं हि सिध्यति ॥२३॥ अहं तु सिंदुवाराणां, मुधालभ्यैर्मणीचकैः। पूजयिष्यामि सर्वज्ञं, श्रेयसेऽदोऽपि निःश्रियाः ॥२४॥ ततस्तान्यात्मनोचित्य, बद्धा वस्त्रां-

चलेऽचलत् । श्रीवीरं वंदितुं राजमार्गाभिमुखमुन्मनाः ॥२५॥ इतः प्रातः कृतस्नानः,सुवर्णकलशव्रजैः । दिव्यांगरागसन्माल्यवस्त्रा-
लंकारभूषितः ॥२६॥ दिव्याभरणसंभारसारशुद्धांतसंयुतः । प्रभूतमंत्रिसामंतसेनानीपरिवारितः ॥२७॥ गजानीकरथानीकहयानीक-
पदातिभिः। सहस्रलक्षप्रयुतकोटिसंख्यैः समन्वितः ॥२८॥ सेवायातमहीपालच्छत्रच्छन्ननभस्तलः। वातोद्धूतध्वजश्रेणिच्छायाच्छादित-
भूतलः ॥२९॥ उत्फुल्लपुंडरीकाभपुंडरीकेण राजितः। वीज्यमानश्च डिंडीरपिंडपांडुरचामरैः ॥३०॥ भेरीभांकारसंभारभरितांबर-
कंदरः । गीयमानगुणग्रामो, महाध्वानैश्च मागधैः ॥३१॥ ऐरावताभमारूढ, इभराजं महाभुजः। जितारिर्वंदितुं वीरमचालीदचला-
पतिः ॥३२॥ सप्तभिः कुलकम् ॥ तथा नागरिका लोकाः, सुनेपथ्याः सबांधवाः । हस्त्यश्वरथयुग्यादिवाहनासीनविग्रहाः ॥३३॥
केचिद् भक्त्या वयस्योक्त्या, केचित्केचिच्च कौतुकात् । केचित् प्रवाहतः केचित्, संशयोच्छेदनेच्छया ॥ ३४ ॥ धर्म्मं शुश्रूषवः
केचित्, श्रीवीरचरणान्तिके । राजानुवृत्त्या चान्येऽपि, प्रचेलुः सपरिच्छदाः ॥३५॥ काष्ठभारयुतां तां तु, वृद्धां यांतीं शनैः शनैः ।
भगवद्वंदनोत्कण्ठां, निरीक्ष्य मुमुदे नृपः ॥३६॥ कल्याणीभक्तिरादिक्षत्, सादिनोऽथ निषादिना । मैनं भक्तिमतीं वृद्धां, कश्चि-
न्मर्दीत् समार्दवाम् ॥३७॥ वर्द्धमानशुभध्याना, वर्द्धमानं जिनेश्वरम् । ध्यायंती धीमती धन्या, साऽथ दुर्गतिनारिका ॥३८॥ प्रतो-
लीद्वारमायाता, ददर्श दृक्सुधांजनम् । महावीरं चतूरूपं, दिशंतं धर्म्ममुच्चकैः ॥३९॥ ॥ युग्मम् ॥ सुरासुरनरेन्द्राद्यैः, सेव्यमानं
मुनीश्वरम् । दृष्ट्वा रोमांचिता दध्यौ, हर्षाश्रुप्लावितेक्षणा ॥४०॥ धन्याऽहं कृतकृत्याऽहं, सर्वथा भाग्यवत्यहम् । फलं
मयाऽद्य संप्राप्तं, जन्मनो जीवितस्य च ॥४१॥ विश्वविश्वेश्वरं देवं, यद् वीरं प्राप्तवत्यहम् । तं वंदिष्येऽर्चयि-
ष्यामि, धर्म्मं श्रोष्यामि तन्मुखात् ॥४२॥ ध्यायंतीति तथोत्पश्यया, पश्यंती परमेश्वरम् । स्खलित्वा न्यपतद् भूम्यां,

प्रतोल्या इंद्रकीलके ॥४३॥ अविमुक्तशुभध्याना, क्षीणायुष्कतयाऽथ सा। सद्यो विपद्य सौधर्म्मे, महर्द्धिस्त्रिदशोऽभवत् ॥४४॥ जितारिरथ संप्राप्तोऽपश्यत्तां लुठितां भुवि। मूर्च्छितामिति मन्वानः, सेचयामास सोंऽभसा ॥४५॥ निष्पंदत्वादथ ज्ञात्वा, विपन्नां तामिलापतिः। तद्देहस्याग्निसंस्कारं, कारयामास सादरः ॥४६॥ ततः समवसृत्यंतः, प्रविश्य पृथिवीपतिः। कृत्वा प्रदक्षिणास्तिस्रो, ववंदे ज्ञातनंदनम् ॥४७॥ नत्वा साधूनशेषांश्च, यथास्थानमुपाविशत्। प्रभुः श्रीवीरनाथोऽथ, प्रारेभे धर्म्मदेशनाम् ॥४८॥ "भो भो भव्या भवांभोधौ, भवकोटिपरंपराम्। बंभ्रमित्वा भवंतो हि, कष्टेनापुर्मनुष्यताम् ॥४९॥ ततो देशं कुलं जातिं, रूपमारोग्य-जीविते। बुद्धिं श्रुतिं च सम्यक्त्वं, प्राप्य दुष्प्रापमप्यदः ॥५०॥ अहिंसासूनृतास्तेयब्रह्माकिंचनतात्मकः। सुदुर्लभतरः कार्यः, सद्भिर्धर्म्मोऽयमेव हि ॥५१॥ मोक्षसौख्यफलो धर्म्मः, स्वर्मनुष्ये तु यत् सुखम्। तदानुषंगिकं ह्यस्य, पलालादि कृषेर्यथा ॥५२॥ अत्रांतरे पुनर्नत्वा, राजा विरचितांजलिः। पप्रच्छ कुत्र वृद्धैषा, मृत्वोत्पन्ना जगत्प्रभो ! ॥५३॥ बभाषे सिद्धसर्वार्थः, सिद्धार्थनृप-नंदनः। मृत्वैषा दुर्गतानारी, सौधर्म्मे त्रिदशोऽभवत् ॥५४॥ प्राच्यं जन्मावधेर्ज्ञात्वा, ममानंतुमिहागतः। त्वत्पुरोवर्त्त्ययं राजन् !, राजमानो महर्धिभिः ॥५५॥ पुनर्नत्वा नृपोऽपृच्छदनासेवितसत्पथा। यावज्जीवमपि स्वामिन्नेषा प्राप कथं दिवम् ? ॥५६॥ प्रभुः प्राह महाराज !, जिनपूजाचिकीरियम्। विपद्य शुभभावेन, देवत्वं प्राप पावनम् ॥५७॥ निशम्यैतत् समस्तोऽपि, विस्मयोत्फुल्ल-लोचनः। जनोऽवोचदहो पूजाचिकीर्षाऽपि महाफला ॥५८॥ बभाषे भगवानेवं, शुभभावो मनागपि। सत्पात्रविषयः पुंसां, दत्ते फलपरंपराम् ॥५९॥ पुण्यानुबंधिपुण्यानुभावादस्या निशम्यताम्। भाविव्यतिकरं भव्या !, शुभभावविवर्द्धनम् ॥६०॥ अयं हि स्थविराजीवः, पूजापुण्येन तेन तु। उत्तमानि दिवः सौख्यान्यनुभूय ततश्च्युतः ॥६१॥ कनकाख्यपुरे राजा, भाव्यत्र कनकध्वजः।

य: सौंदर्याच्च शौर्याच्च, नारीणां भवति प्रियः ॥६२॥ अखंडशासनं प्राज्यं, राज्यं राजा प्रपालयन्। ग्रस्यमानं भुजंगेन, भेकं द्रक्ष्यति सोऽन्यदा ॥६३॥ कुररेण भुजंगं तु, तमप्यजगरेण च। गिल्यमानं निरीक्ष्यैवं, भावयिष्यति शुद्धधीः ॥६४॥ वराकोऽयं करभैर्भेकवत् प्राकृतो जनः। दोदूयते भुजंगाभैः, क्रूरदृग्भिर्नियोगिभिः ॥६५॥ लुप्यंते ते च भूपालैः, कुररेणेव लुब्धकैः। अवशास्तेऽपि गिल्यंतेऽजगरेणेव मृत्युना ॥६६॥ मण्डूकाद्या यथा ह्यंते, ग्रस्यमानाः परस्परम्। दुर्बला बलिभिर्वक्रे, विशत्यजगरस्य तु ॥६७॥ एवं विश्वमपीदृक्षं, हन्यमानं यथोत्तरम्। पारींद्रास्य इव श्वभ्रे, कृतपापं पतत्यहो ॥६८॥ यथा क्षणिकदेहार्थं, सर्वस्वेनापि यत्यते। तथा शाश्वतसौख्याय, किं न मोक्षाय धीमता! ॥६९॥ महीपतिरिति ध्यायन्नल्पकर्म्मा महामतिः। विवेकशाखिनो मूलं, जातिसरणमाप्स्यति ॥७०॥ ततो द्विगुणसंवेगः, साम्राज्यं प्राज्यमप्यथ। क्रमरेणुवदुज्झित्वा, परिव्रज्यां ग्रहीष्यति ॥७१॥ चारित्रं निरतीचारमाचर्य सुचिरं सुधीः। विधिनाऽऽराधनां कृत्वा, स मृत्वा स्वर्ग्गमेष्यति ॥७२॥ तत्रोत्तमानि सौख्यानि, मानयित्वा ततश्च्युतः। स नगर्यामयोध्यायां, भावी भव्यकुले पुमान् ॥७३॥ यथाख्यातव्रतात्तत्र, चैत्ये शक्रावतारके। केवलश्रियमासाद्य, क्रमान्मोक्षमवाप्स्यति ॥७४॥ इत्याकर्ण्य वचो जैनं, जनः सर्वोऽपि धूनयन्। हर्षप्रकर्षाच्छीर्षाणि, जगादेति सुविस्मितः ॥७५॥ जैनधर्म्मस्य माहात्म्यमहो विश्वे विजृंभते। पूजाविधित्सयाऽप्येषा, यदाप स्वर्गसंपदम् ॥७६॥ तथैषा लप्स्यते च्युत्वा, सत्कल्याणपरंपराम्। त्रिलोक्यामपि तन्नास्ति, धर्म्मस्तुल्योऽमुना परः ॥७७॥ प्रशस्यैवं प्रभोः पार्श्वे, केचिदाददिरे व्रतम्। श्रावकत्वं तथा केचित्, केचित् सम्यक्त्वमेव हि ॥७८॥ मद्यमांसादिकान् केचिद्, भेजुः कांश्चिदभिग्रहान्। बोधिबीज पुनः केचिद्, भद्रकत्वं च केचन ॥७९॥ भगवंतं पुनर्नत्वा, सुरासुरनरादयः। धन्यंमन्याः जिनोपास्त्या, स्वं स्वं स्थानं ययुस्ततः ॥८०॥ श्रीमान् वीर-

जिनेन्द्रोऽपि, तत्पुर्याः क्रमयोगतः। चिरं भव्यावबोधाय, विजहार वसुंधराम् ॥८१॥ इत्यवेत्य सुदुर्गतनारिकाज्ञातमत्र जिनार्चनगोचरम्। तद्विधत्त जिनार्चनमादृताः, स्वःसुखादिविधात् सुमेधसः! ॥८२॥ इति देवत्वे स्थविराकथा॥

सांप्रतं पूजाविषये कुरुचंद्रकथा,सा चाप्रतीतत्वान्न प्रतन्यते। इदानीमष्टप्रकारपूजायां सुव्रतोपलक्षिताष्टवणिग्भ्रातृकथा,सा चेयम्—

राकाशशांकवद् वृत्ते, जंबूद्वीपेऽत्र विद्यते। विदेहे मेरुतः पूर्व्वे, विजयः पुष्कलावती ॥१॥ अस्ति पुण्यजनाकीर्णाऽलकेव वसुपूरिता। अनेकधनदा किंतु, तत्र पूः पुंडरीकिणी ॥२॥ तत्रासीद् वरसेनाख्यश्चक्री सेनाऽपि यस्य हि। केनापि वज्रिणो वज्रमिव न प्रतिचस्खले ॥३॥ अथान्यदा कुवलयं, बोधयंश्चंद्रवज्जिनः। तत्पुर्यां समवासार्षीत्, सुयशाः सुरसंस्तुतः ॥४॥ वरसेनसुतश्चक्री, चक्रिसंपत्समन्वितः। जगाम वंदितुं प्रीतः, प्रभुपादान् पदातिवत् ॥५॥ देवाधिदेवं वंदित्वा, भूपतिर्भूरिभावनः। उपविश्य यथास्थानमश्रौषीद् धर्म्मदेशनाम् ॥६॥ अथ बंधुरगंधेन, वासयंतो भुवस्तलम्। स्वस्य देहप्रभाभिश्च, भासयंतो दिशो दश ॥७॥ दिव्यरूपश्रिया सर्वे, वस्त्रालंकरणैस्तथा। जयंतोऽग्रे समायातं, सुरासुरकदंबकम् ॥८॥ विस्मापयन्तश्चेतांसि, नयनानंदकारिणः। विशंतो देशनाभूमौ, राज्ञाऽष्टौ वीक्षिताः सुराः ॥९॥ तिस्रः प्रदक्षिणीकृत्य, नत्वा च सपरिच्छदम्। देवाधिदेवं ते देवा, विनयेन व्यजिज्ञपन् ॥१०॥ प्रभो! ज्ञानेन युष्माकं, प्रत्यक्षाः सुरसंपदः। यत् सदा वीक्षतेऽध्यक्षं, त्रिलोकीमपि केवली ॥११॥ मुनीनामागमाऽऽगम्या, एव देवश्रियस्ततः। देव! नाट्यविधिं तेषां, दर्शयामस्तदाऽऽदिश ॥१२॥ ततो द्रव्यस्तवत्वेन, मौनमत्र जिनो व्यधात्। अनिषेधादमन्यंत, ते तत्रानुमतिं हृदि ॥१३॥ ततो नाट्यानि दिव्यानि, विधिवद् विबुधाः व्यधुः। साधूनां समचित्तानां, पुरतो भक्तिनिर्भराः ॥१४॥ संहृत्यैतान्यपृच्छंस्ते,नत्वा श्रद्धालवो जिनम्। भगवन्! किं वयं भव्याः, अभव्या वेति शंस नः ॥१५॥

भव्या भवंत इत्युक्तेऽर्हता भूयोऽपि ते प्रभुम् । नत्वाऽपृच्छन् वयं स्वामिन् !, सेत्स्यामः कुत्र जन्मनि ? ॥१६॥ स्वामी स्माह दिवश्च्युत्वा, विजयेऽत्र नरेश्वराः । समुत्पद्य परिव्रज्यां, प्रपद्य शिवमेष्यथ ॥१७॥ प्रमोदमेदुरस्वांतो,वरसेनोऽथ तं जिनम् । नत्वाऽपृच्छदमी देवाः, कुतः कल्पादिहाययुः ?॥१८॥ के वा पूर्वभवेऽभूवन् ?, किं चैभिः सुकृतं कृतम् ? । एवं पृष्टो नरेन्द्रेण, जिनेन्द्रः प्रत्यभाषत ॥१९॥ महालयपुरे रम्ये, धातकीखंडभारते । महेभ्यो वसुदत्तोऽभूत्, तस्य पत्नी च रुक्मिणी ॥२०॥ तयोर्वैषयिकं सौख्यं, विशिष्टं सेवमानयोः । गार्हस्थ्यद्रोः फलानीवाजायंताष्टौ सुताः क्रमात् ॥२१॥ धनाह्वो १ विमलाभिख्यः २, शंखाख्यो ३ वरसेनकः ४ । शिवश्च ५ वरुणश्चैव ६, सुयशाः७ सुव्रतस्तथा ८॥२२॥ लावण्यरूपसंपन्नाः, सर्वे सर्वकलाविदः । गंभीराश्च विनीताश्च, सुदाक्षिण्याः स्थिराशयाः ॥२३॥ विहरन्नन्यदा तत्र, त्रैलोक्यैकदिवाकरः । सुरासुरनरार्च्योऽर्हन्, सुव्रतः समवासरत् ॥२४॥ तद्वंदनार्थमभ्येयुस्तेऽष्टापि श्रेष्ठिनंदनाः । प्रभुं प्रणम्य तत्पार्श्वे, शुश्रुवुर्देशनामिमाम् ॥२५॥ "धर्म्मश्चार्थश्च कामश्च, पुरुषार्थत्रयी मता । तत्र श्रेष्ठतमो धर्म्मो, न स्तस्तौ तं विना यतः ॥२६॥ दानशीलतपोभावैः, स तु धर्म्मश्चतुर्विधः । दानं तावत् त्रिधा ज्ञानाभयोपग्रहभेदतः॥२७॥ अन्येभ्यो भव्यवर्गेभ्योऽध्यापनश्रावणादिभिः । यद्दानमागमस्यैतद्, ज्ञानदानमुदाहृतम् ॥२८॥ यत्स्वभावात् सुखैषिभ्यो, भूतेभ्यो दीयते सदा । अभयं दुःखभीतेभ्योऽभयदानं तदुच्यते ॥२९॥ ज्ञानाभयप्रदातॄणामाहाराद्यैरुपग्रहः । दत्तैर्यैर्जायते शुद्धैस्तद्धर्म्मोपग्रहं स्मृतम् ॥३०॥ यच्छीलनं समाधानं, प्राणिना पापवर्जनात् । देशतः सर्वतो वाऽपि, तच्छीलं परिकीर्त्तितम् ॥३१॥ ताप्यंते येन कर्म्माणि, तत्तपस्तदपि द्विधा । बाह्यं स्यादनशनादि, प्रायश्चित्तादि चांतरम् ॥३२॥ स्वरूपं वीतरागत्वं, याभिर्भावयते भवी । ता भावनाः समाख्याता, द्वादशानित्यतादयः ॥३३॥ पुमर्थो नामतो ह्यर्थस्त्वनर्थः परमार्थतः । यद्दुःखार्ज्यो दुःखरक्ष्यो, व्यये नाशे

च दुःखदः ॥३४॥ कामोऽप्यापातमात्रेण, काम्यः कठिनकर्म्मणाम् । किंपाकफलवत् किंतु, विपाके दारुणोऽधिकम् ॥३५॥ तदेतकौ तु धिकृत्य, धर्म्मं कुरुत यत्नतः । चतुर्थपुरुषार्थोऽपि, मोक्षः स्यादचिराद्यतः ॥३६॥" श्रुत्वेमां देशनां भर्त्तुस्तेऽष्टावपि सहोदराः । अगृह्णन् गृहिणां धर्म्मं, बोधिमूलं तदंतिके ॥३७॥ अन्येद्युर्देशयामास, सदस्येवं जिनेश्वरः। पुष्पाद्यैरष्टधा पूजा, स्यात् त्रिसंध्यं जिनेशितुः ॥३८॥ फलं पूजाविधातुः स्यात्, सौभाग्यं जनमान्यता । ऐश्वर्यं रूपमारोग्यं, स्वर्गमोक्ष-सुखान्यपि ॥३९॥ इति पूजाफलं श्रुत्वा, जनः सर्वोऽपि संसदः । त्रिर्द्विः सकृच्च पूजायां, स्वशक्त्या नियमान् व्यधात् ॥४०॥ त्रिसंध्यमप्यवंध्येच्छाः, सुव्रतांताः सहोदराः । अष्टप्रकारपूजायां, जगृहुस्तेऽप्यभिग्रहम् ॥४१॥ ततस्तेऽष्टविधां पूजां, हृष्टा अष्टापि बांधवाः । चमत्कारकरीं चैत्ये, प्रत्यहं विधिवद् व्यधुः ॥४२॥ एकैकभेदमेकैकः, पुष्पादीनां यथाक्रमम् । तत्र प्रवर्त्तयामास, तोषयामास पूर्जनम् ॥४३॥ तुरुष्कागुरुकर्प्पूरैः, सारैः कुंकुमकेसरैः । गोशीर्षचंदनाद्यैश्च, समानर्चुः सुगंधिभिः ॥४४॥ एकचित्ताश्च सद्वृत्ताः, सद्वित्ता विस्मयास्पदम् । अर्चयन्तो जिनस्यार्चां, कस्य न स्युर्जनस्य ते ? ॥४५॥ इति तैर्भ्रातृभिर्नित्यं, धनाद्यैः सुव्रतांतिमैः । सर्वर्द्ध्या सर्वया युक्त्या, सर्वस्वजनसंयुतैः ॥४६॥ वर्द्धमानशुभध्यानैर्मन्यमानैः कृतार्थताम् । चित्तस्य जीवितस्यापि, स्वस्य विश्वस्य वत्सलैः ॥४७॥ यच्छद्भिर्याचकानां च, सदा वित्तमनिंदितम् । चक्रे जिनार्चनं लक्षाः, पूर्वाणां पंचविंशतिम् ॥४८॥ त्रिभिर्विशेषकम् । दत्तं दानं सुपात्रेषु, दीनादिषु च सर्वदा । व्रतानि निरतीचाराण्याचीर्णानि निजानि तैः ॥४९॥ यथाशक्ति तपस्तप्तं, भावना भाविताश्च तैः । दूरेण वर्जिताः पंच, दोषाः संलेखनागताः ॥५०॥ सर्वेऽपि ते सदाकालमवियुक्ताः परस्परम् । गृहिधर्म्मं विधायैवं, संतुष्टाः समचेतसः ॥५१॥ आलोचितमतिक्रांता, मासं मासमुपोषिताः । ध्यायंतो धीधनाः पुण्यं, पर्यन्ते पंचमंगलम् ॥ ५२ ॥

विपद्य सप्तमे कल्पे, ते महाशुक्रनामनि। उत्पेदिरे सुराः सप्तदशाब्धिप्रमितायुषः ॥५३॥ अनुरक्ताः समायुक्तास्ते तत्रापि परस्परम्। अजायंत जगज्ज्येष्ठे विमाने प्रवरर्द्धिके ॥५४॥ (मृत्वा शुक्रे जगज्ज्येष्ठे, विमाने परमायुषः। बभुवुस्ते सुरास्तत्राप्यनुरक्ताः परस्परम् ॥) प्राग्जन्मावधिना ज्ञात्वा, वरसेननृपोत्तम! । मद्वंदनार्थमभ्येयुस्ते देवाः सपरिच्छदाः ॥५५॥ भवेऽत्रापि विधायैते, भावार्हत्स्थापनार्हताम्। पूजां सुरश्रियं भुक्त्वा, नृत्वे यास्यंति निर्वृतिम् ॥५६॥ पूजाफलं सदृष्टान्तमित्याकर्ण्य सुविस्मिताः। वरसेननरेन्द्राद्याः, सर्वेऽपि परिषज्जनाः ॥५७॥ प्रतिज्ञां प्रत्यपद्यंत, प्रत्यहं जिनपूजने। स्वशक्त्या नियमांश्चान्यान्, धन्यंमन्या जिनांतिके ॥५८॥ प्रभुं नत्वा निजं स्थानं, चक्रिप्रभृतयो ययुः। भव्यजन्तूपकारार्थमन्यत्र प्रभुरप्यगात् ॥५९॥ ज्ञाते जनाः सुव्रतनामकेऽस्मिन्, जिनेंद्रपूजाफलमित्यवेत्य। देहस्य वित्तस्य तथाऽऽयुषश्च, तामेव सारामनिशं कुरुध्वम् ॥६०॥ इति सुव्रतकथा॥

जिनशेखरकथा त्वप्रतीता। सांप्रतं तीर्थंकरत्वलाभोदाहरणानि, तत्रेयं सत्यकिवक्तव्यता—चेटीकृतारिराजस्य, महाराजस्य पुत्रिका। चेटकस्य गुणज्येष्ठा, सुज्येष्ठा षष्टिकाऽभवत् ॥१॥ विप्रलब्धा च सा स्वस्रा, विरक्ता भवतो भृशम्। प्रव्रज्योपाश्रयस्यांतर्नित्यमातापनां व्यधात् ॥२॥ परीव्राडथ पेढालः, प्रौढविद्याबलोद्यतः। विद्याधारं नरं कंचिदुत्पिपादयिषुस्तदा ॥३॥ तथा स्थितां च सुज्येष्ठां, दृष्ट्वा कृत्वा च धूमिकाम्। अलक्ष्यः क्षिप्तवांस्तत्र, पौरुषं भृंगरूपभृत् ॥४॥ गर्भः प्रादुरभूत्तस्याः, समयेऽथ सुतोऽजनि। कृतसत्यकिनामासौ, प्रभुपार्श्वेऽन्यदा ययौ ॥५॥ कालसंदीपकाख्योऽथ, खेचरः पृष्टवान् प्रभुम्। को मे वैरीत्यथो वीरस्तमर्भकमदर्शयत् ॥६॥ ततः सत्यकिनं सोऽथ, मारयिष्यसि मामरे। साक्षेपमिति निर्भर्त्स्य, पादयोस्तमपातयत् ॥७॥ साध्वीपार्श्वस्थितः सोऽथैकादशांगानि लीलया। उपश्रुत्याददे प्रज्ञाप्रकर्षेण प्रकृष्टदृक् ॥८॥ पेढालस्तमथो नीत्वा, विद्यास्तस्मै ददौ मुदा। एषोऽपि

रोहिणीविद्यां, प्रारेभे साधितुं ततः ॥९॥ प्रज्वाल्य ज्वलनं तस्योपर्यार्द्रं चर्म तत्र च। चरति स चिरं पादांगुष्ठाभ्यां भीतिवर्जितः ॥१०॥ विद्यासिद्धिविघातार्थं, कालसंदीपकोऽथ सः। दिनानि सप्त चिक्षेप, वह्नावेधांसि मत्सरात् ॥११॥ हतोऽसौ पंच जन्मानि, रुष्टया विद्ययाऽनया। षष्ठे त्वल्पायुषाऽनेन, नेष्टा सप्तमके त्विह ॥१२॥ सिद्धा ललाटमध्येन, प्रविवेशास्य रोहिणी। तृतीयमक्षि तच्छिद्रं, जज्ञे तेन त्रिनेत्र्यसौ ॥१३॥ ततश्च सत्यकिर्विद्याचक्रवर्त्ती कृतांतवत्। कालसंदीपकं हंतुं, क्रोधाध्मातोऽन्वधावत ॥१४॥ सोऽनेशत्रिपुरं कृत्वा, ददाहैषोऽपि तद्रुषा। तस्मान्निर्यन् हतस्तेनोच्यतेऽसौ त्रिपुरांतकः ॥ १५ ॥ स्वमातृव्रतविध्वंसकारकं जनकं निजम्। पेढालमवधीत् क्रोधाद्, विद्याभिर्दुर्द्धरोऽधिकम् ॥१६॥ ववंदे भक्तितो नित्यं, जिनान् विहरतो भुवि। तदग्रे नाटकं चोच्चैश्चक्रे क्षायिकदृष्टिभृत् ॥१७॥ उत्सर्प्पिण्यामिहैष्यंत्यां, पूजापुण्येन तेन सः। भविता सुव्रतो नामैकादशो जिनपुंगवः ॥१८॥ इति विचिंत्य जिनार्चनगोचरं, जिनपतित्वफलं सुमनोहरम्। तदिह सत्यकिनेव सुबुद्धिभिः, जगति कृत्यमिदं गृहमेधिभिः ॥ १९ ॥

॥ पूजायां सत्यकिकथा ॥

तथा वासुदेवो नवमः कृष्णनामा। श्रीनेमिनाथपूजनवंदनतो द्वादशोऽर्हन्नममनामधेयो भवितेति, तच्चरितं त्वग्रे वक्ष्यते। नारदविद्याधरस्तु शाश्वतचैत्योपासनत एकविंशतितमो मल्लिनामा तीर्थंकरो भविष्यतीति। अधुना द्रव्यपूजां निगमयन् भावपूजां प्रस्तावयन्नाह—

अट्ठप्पयारपूयाए, पूइत्ता जगबंधवे। मुद्दाविहाणजुत्तेणं, कायव्वं जिणवंदणं ॥२९॥

अत्र च मुद्राणां स्वरूपं विषयश्चैवं—अन्नोन्नंतरअंगुलि कोसागारेहिं दोहिं हत्थेहिं। पिट्टोवरिकुप्परसंठिएहिं तह जोगमुद्दत्ति ॥१॥

चत्तारि अंगुलाइं पुरओ ऊणाइं जत्थ पच्छिमओ। पायाणं उस्सग्गे एसा पुण होइ जिणमुद्दा ॥२॥ मुत्तासुत्ती मुद्दा जत्थ समा दोवि गब्भिया हत्था। ते पुण निलाडदेसे लग्गा अन्ने अलग्गत्ति ॥३॥ पंचंगो पणिवाओ थयपाढो होइ जोगमुद्दाए। वंदण जिणमुद्दाए पणिहाणं मुत्तसुत्तीए ॥४॥" जिनवंदनमिति चैत्यवंदना, सा च त्रेधा 'नवकारेण जहन्ना दंडगथुइजुगल मज्झिमा नेया। संपुन्ना उक्कोसा विहिणा खलु वंदणा तिविहा ॥१॥ 'दंडथुइजुगल'त्ति चैत्यस्तवदंडकैकस्तुतिप्रदानयुगलरूपेति, अत्र च संप्रदायः— उत्कृष्टचैत्यवंदनैर्यापथिकीप्रतिक्रमण पुरस्सरं विधेयेत्यतः सैवादौ व्याख्यायते, तद्यथा—'इच्छामी'त्यादि, इच्छामि—अभिलषामि प्रतिक्रमितुं—निवर्त्तितुं ईरणमीर्या—ग मनं तद्युक्तः पंथा ईर्यापथस्तत्र भवा ईर्यापथिकी विराधना—जंतुबाधा मार्गे गच्छतां या काचिद्विराधना भवति सा ईर्यापथिकीत्यु च्यते, यद्वा ईर्यापथः—साध्वाचारः, यदाह—'ईर्यापथो ध्यानमौनादिकं भिक्षुव्रतं" तत्र भवा ईर्यापथिकी विराधना नद्युत्तरणशयनादिभिः प्राणातिपातादिका साध्वाचारातिक्रमरूपा तस्या विराधनायाः प्रतिक्रंतुमिच्छामीति संबंधः। संपत् १। क्व सति विराधना?—'गमणागमणे' २ गमने च आगमने च, तत्र स्वस्थानादन्यत्र गमनं व्यत्यये त्वागमनं, तत्रापि कथं विराधनेत्याह—'पाण क्कमणे' इत्यादि, प्राणिनो—द्वीन्द्रियादयस्तेषामाक्रमणे—संघट्टने,तथा 'बीयक्कमणे हरियक्कमणे' बीजाक्रमणे हरिताक्रमणे, आभ्यां सर्व्वबीजानां शेषवनस्पतीनां च जीवत्वमाह ३, तथा 'ओसे'त्यादि, अवश्यायः—त्रेहः, अस्य च ग्रहणं सूक्ष्मस्याप्यप्कायस्य परिहार्यत्वख्यापनार्थं, 'उत्तिंगा' भूम्यां वृत्तविवरकारिणो गर्दभाकारा जीवाः कीटिकानगराणि वा, पनकः—पंचवर्णा फुल्लिः, दकमृत्तिका अनुपहतभूमौ चिक्खिल्लः यद्वा दकं—अप्कायो मृत्तिका—पृथ्वीकायः मर्कटसंतानः— कोलिकजालं तेषां संक्रमणे। सं० ४। किं बहुना?—'जे मे जीवा विराहिया' सं० ५ ये केचन मया जीवा विराधिता—दुःखे

स्थापिताः सं० ५। ते च के इत्याह–'एगिंदिए'त्यादि, एकमेव स्पर्शनरूपमिंद्रियं येषां ते एकेंद्रियाः–पृथिव्यादयः, एवं स्पर्शन-रसनद्वयोपेता द्वीन्द्रियाः–शंखादयः स्पर्शनरसनघ्राणयुक्तास्त्रींद्रियाः–कीटिकादयः स्पर्शनरसनघ्राणचक्षुःसहिताश्चतुरिन्द्रियाः–शल-भादयः स्पर्शनरसनघ्राणचक्षुःश्रोत्रसहिताः पंचेन्द्रियाः–तिर्यग्नरादय।, सं० ६। विराधनाप्रकारमाह–'अभिहये'त्यादि, अभिमुखमा-गच्छंतो हताः–पादेन ताडिताः उत्क्षिप्य क्षिप्ता वा अभिहताः वर्त्तिताः–पुंजीकृताः धूल्यादिना वा स्थगिताः श्लेषिता–भूम्यादौ लगिता ईषत्पिष्टा वा संघातिता–मिथो गात्रैः पिंडीकृताः संघट्टिता–मनाक् स्पृष्टाः परितापिताः–सर्वतः पीडिताः क्लमिता–ग्लानिं प्रापिता जीवितशेषाः कृता इत्यर्थः, अवद्राविताः–उत्त्रासिताः, स्थानात् स्थानं संक्रामिताः–स्वस्थानात्परस्थानं नीताः, जीविताद् व्यपरो-पिताः, मारिता इत्यर्थः, सं० ७। 'तस्स'त्ति अभिहयेत्यादिविराधनाप्रकारस्य मिच्छामिदुक्कडंति–मिथ्या मे दुष्कृतं, मिथ्या–विफलं मे भवत्वित्यर्थः। अत्र चैतन्निरुक्तं यथा–"मित्ति मिउमद्दवत्ते छत्तिय दोसाण छायणे होइ। मेत्तिय मेराइ ठिओ दुत्ति दुगुंछासि अप्पाणं ॥१॥ कत्ति कडं मे पावं डत्तिय डेवेमि तं उवसमेणं। एसो मिच्छाउक्कडपयक्खरत्थो समासेणं ॥२॥ सं० ८॥, अत्र च मृगावतीदृष्टान्तस्ताहि—

एकदा श्रीमहावीरः, कोशाम्ब्यां समवासरत्। वंदितुं तत्र चंद्रार्कौ, सविमानौ समीयतुः ॥१॥ तथाऽपि चंदना ज्ञात्वा, दक्षाऽस्तसमयं ततः। निर्गत्यागान्निजस्थाने, तत्रैवास्थान् मृगावती ॥२॥ स्वस्थानं गतयोश्चंद्रसूर्ययोरथ विस्तृते। तमस्यागाद् द्रुतं भीता, सा साध्वीनां प्रतिश्रये ॥३॥ तत्रेर्यापथिकीं साऽथ, प्रतिक्रम्य प्रवर्त्तिनीम्। शयनस्थां प्रणम्योचे, मन्तुर्मे क्षम्यतामयम् ॥४॥ चंदना चंदनाभाभिर्वाणीभिस्तामथाभ्यधात्। भद्रे! भद्रकुलोत्पन्ने, किं ते सांप्रतमीदृशम्? ॥५॥ साऽप्यूचे मयका पापं, कृतं दुष्कृत-

मेतकम्। करिष्ये नेदृशं भूय, इत्युक्त्वा न्यपतत् पदोः ॥६॥ निद्राऽथागात् प्रवर्त्तिन्या, मृगावत्यास्तु भावतः। मिथ्यादुष्कृतकारिण्या, जज्ञे केवलमुज्ज्वलम् ॥७॥ सर्प्पव्यतिकरेणाथ, प्रबुद्धा चंदना तदा। अवाप केवलज्ञानं, क्षमयंती मृगावतीम् ॥ ८॥
एवमालोचितप्रतिक्रांतः कायोत्सर्गप्रायश्चित्ते पुनरात्मशुद्ध्यर्थमिदं भणति–'तस्स उत्तरीकरणेण'मित्यादि, तस्यालोचितप्रतिक्रांतस्यातिचारस्योत्तरीकरणादिना हेतुना 'ठामि काउस्सग्ग'मिति योगः, तत्रानुत्तरस्योत्तरस्य करणं–पुनः संस्कारद्वारेणोपरिकरणमुत्तरीकरणं, अयं भावार्थः–यस्यातिचारस्य पूर्वमालोचनादि कृतं तस्यैव पुनः शुद्धये कायोत्सर्गस्य करणं, तच्च प्रायश्चित्तकरणेन स्यादित्याह–'पायच्छित्तकरणेणं' प्रायो–बाहुल्येन चित्तं–जीवं मनो वा शोधयतीति पापं छिनत्तीति वाऽऽर्षत्वात् प्रायश्चित्तं तस्य करणेन–हेतुना, तच्च विशुद्ध्या स्यादित्याह–'विसोही'त्यादि, विशोधनं विशुद्धिः–अतिचारमलिनस्यात्मनो निर्मलीकरणं तस्याः करणेन हेतुना, तदपि विशल्यत्वेन स्यादित्याह–'विसल्लीकरणेणं' विशल्यो–विगतमायादिशल्यस्तस्य विशल्यस्य करणं विशल्यीकरणं तेन हेतुना, किं?–'पावाण'मित्यादि, पापानां कर्म्मणां निर्घातनार्थं–उच्छेदनार्थं 'ठामि' अनेकार्थत्वाद्धातूनां करोमि कायोत्सर्गं–कायव्यापारत्यागमित्यर्थः, किं सर्व्वथा?, नेत्याह–'अन्नत्थ ऊससिएण'मित्यादि, अन्यत्रोच्छ्वसितात्–ऊर्ध्वं श्वासग्रहणात्, पंचम्यर्थेऽत्र तृतीया, एवमुत्तरत्रापि, निःश्वसितात्–श्वासमोक्षणात् कासितात्–क्षुतात् जृंभितात्–उद्गारितात्, एतानि च प्रतीतानि निसर्गः–अपानेन वातनिर्गमस्तस्मात्, कासितादीनि च जीवरक्षार्थं मुखे हस्तदानादियतनया कार्याणि, 'भमलीए' अकस्माद्देहभ्रमेः 'पित्तमुच्छाए' पित्तक्षोभादीषन्मोहो मूर्च्छा तस्याः, तयोश्च सत्योरुपवेष्टव्यं, सहसा पतने मा भूत् संयमात्मविराधनेति, 'सुहुमेही'त्यादि, सूक्ष्मेभ्योऽङ्गसंचारेभ्यः–रोमोत्कंपादिभ्यः सूक्ष्मेभ्यः खेलः–श्लेष्मा तत्संचालेभ्यः सूक्ष्मेभ्यो दृष्टिसंचारेभ्यो–

निमेषादिभ्यः, 'एवमादी'त्यादि, एवमादिभिराकारैः-अपवादरूपैः, आदिशब्दादन्येऽपि गृह्यंते, अग्नेर्विद्युतश्च स्पर्शने प्रावरणं गृह्णतोऽपि मार्जारमूषकादेः पुरतो गमनेऽग्रतः सरतोऽपि चौरसंभ्रमे राजसंभ्रमे वा सर्प्पदष्टे आत्मनि परे वा साध्वादौ अपूर्णमपि कायोत्सर्गं पारयतोऽपि न भंगः, यदाहुः-"अगणीओ छिंदिज्ज व बोहीखोभो य दीहडक्को वा। आगारेहिं अभग्गो उस्सग्गो एवमादीहिं ॥१॥" एतैरभग्नः-सर्व्वथा अखंडितः अविराधितो-देशतोऽप्यविनाशितो भवेन्मम कायोत्सर्गः, कियंतं कालं यावदित्याह-'जावे'त्यादि, यावदर्हतां भगवतां नमस्कारेण-नमो अरिहंताणमित्यनेन न पारं गच्छामि, तावत्किमित्याह-'तावे'त्यादि, तावंतं कालं कायं-देहं स्थानेन-ऊर्द्ध्वादिस्थानेन मौनेन-वाग्निरोधेन ध्यानेन-सुप्रणिधानेन 'अप्पाणं' आर्षत्वादात्मीयं व्युत्सृजामि कुव्यापारनिषेधेन त्यजामि, अस्यां च विश्रमाष्टकोल्लिंगनपदानि 'इच्छा १ गम २ पाण ३ ओसा ४ जे मे ५ एगिंदिया ६ अभिहया ७ तस्स ८। अड संपय छत्तीसं पयाइं वन्नाण सहसयं ॥१॥' कायोत्सर्गे च 'चंदेसु निम्मलयरे' त्यंतश्चतुर्विंशतिस्तवश्चिंत्यः, पारिते च समस्तोऽपि भणितव्यः। एवमीर्यापथिकीं प्रतिक्रम्य महावृत्तानर्थयुक्तानपुनरुक्तान् भणतीति। सांप्रतं प्रथमदंडकभणनविधिं श्लोकद्वयेनाह—

पंचंगनमणपुव्वं तु, मुद्धाणं धरणीयले। तिन्नि वारे निवेसित्ता, वामं जाणुं च अंचिआ ॥३०॥

काऊणं वत्थदेसेणं, तओ वयणढक्कणं। जोगमुद्दाइ भत्तीए, संमं सक्कत्थयं भणे ॥३१॥

नमस्कारपाठानंतरं जानुद्वयकरद्वयशिरोलक्षणपंचांगनमनपूर्वं तुशब्दात्प्रतिलिख्य प्रमृज्य च भुवं मूर्द्धानं धरणितले त्रीन् वारान् निवेश्य-संस्थाप्य वामं जानुं चांचित्वा-किंचिदुन्नम्य ततश्च वसनदेशेन वदनपिधानं कृत्वा योगमुद्रया पूर्वोक्तस्वरूपया भक्त्या 'धन्नोऽहं जेण मए अणोरपारंमि भवसमुद्दंमि। बुड्डंतेण जिणिंदो जं पत्तो जाणवत्तं वे ॥१॥"त्यादिरूपया आनंदाश्रुपूर्णलोचनः

सम्यगिति अस्खलितादिविधिना शक्रस्तवं–प्रणिपातदंडकं भणेदिति श्लोकद्वयार्थः। स चायं दंडकः–'नमोत्थु णं'मित्यादि,नमो-नमस्कारोऽस्तु–भवतु णं वाक्यालङ्कारे,केभ्यः १–अर्हद्भ्यः,अत्र पाठत्रयं–अरहंताणं अरिहंताणं अरुहंताणं, तत्र अर्हति शक्रादिकृतां पूजामित्यर्हंतः, अरीन् कर्म्मलक्षणान् घ्नंतीत्येवं साधवोऽरिहंतारः, न रोहन्ति–कर्म्मदग्धबीजत्वात् पुनः संसारे न जायंत इत्यरोहंतस्तेभ्यः, चतुर्थ्याः स्थाने षष्ठी, बहुवचनं तु क्षेत्रकालभेदेनार्हद्बहुत्वख्यापनार्थं, ते च नामाद्यनेकविधा इति भावार्हद्-ग्रहणार्थमाह (१०००)–'भगवद्भ्यः' भगोऽत्र षड्विधः, यथा–'ऐश्वर्यस्य समग्रस्य १, रूपस्य २ यशसः ३ श्रियः ४। धर्म्मस्याथ ५ प्रयत्नस्य ६, षण्णां भग इतींगना ॥१॥" स समग्रैश्वर्यादिलक्षणो विद्यते येषां ते भगवंतस्तेभ्यः, एवंविधा एव भगवंतो विवेकिनां स्तोतव्या इत्याभ्यामालापकाभ्यां स्तोतव्यसंपदुक्ता। सांप्रतमस्या एव हेतुसंपदमाह–'आइगराण'मित्यादि, स्वस्वतीर्थेषु समस्तनीतिहेतुश्रुतधर्म्मस्यादिकर्तृभ्यः, 'तीर्थकरेभ्यः' तीर्थं–चतुर्विधः संघः प्रथमगणधरो वा तत्कारिभ्यः, 'स्वयंसंबुद्धेभ्यः' स्वयं–परोपदेशं विना सम्यग्–अविपर्ययेण बुद्धा–ज्ञाततत्त्वाः स्वयंसंबुद्धास्तेभ्यः, अथाद्याया एव हेतुविशेषसंपदमाह–'पुरिसुत्तमाण'-मित्यादि, पुरुषाणां–विशिष्टसत्त्वानां मध्ये तथाभव्यत्वादिभावतः सर्वकालमसाधारणगांभीर्यादिगुणग्रामयोगादुत्तमाः पुरुषोत्तमास्तेभ्यः,'पुरुषसिंहेभ्यः' पुरुषाः कर्म्मशत्रून् प्रति शूरतया सिंहा इव पुरुषसिंहास्तेभ्यः,'पुरुषवरपुंडरीकेभ्यः' पुरुषवरपुंडरीकाणीव, यथैतानि पंके जातानि जलैः प्रवृद्धानि तद्द्वयं विहायोपरि वर्त्तंते तथाऽर्हंतोऽपि कर्म्मपंके जाता भोगजलैः प्रवृद्धास्तद्द्वयं विहाय वर्त्तंत इति पुरुषवरपुंडरीकास्तेभ्यः,'पुरुषवरगंधहस्तिभ्यः' पुरुषा वरगंधहस्तिन इव २, यथैषां गंधेनैव क्षुद्रगजा भज्यंते तद्वदीतिदुर्भिक्षाद्युपद्रवगजा अर्हद्विहारपवनगंधादेव भज्यंत इति पुरुषवरगंधहस्तिनस्तेभ्यः ३, आद्याया एव सामान्योपयोगसंपद-

माह—'लोगुत्तमाण'मित्यादि, लोकोत्तमेभ्यः, इह लोकशब्देन भव्यसत्त्वलोको गृह्यते ततस्तन्मध्ये सकलकल्याणकलिततया भव्यत्वभावेनोत्तमा लोकोत्तमास्तेभ्यः, 'लोकनाथेभ्यः' लोकानां—विशिष्टभव्यसत्त्वानां सम्यक्त्वबीजाधानादियोजनेन रागाद्युपद्रवरक्षणेन च योगक्षेमकारिणो नाथास्तेभ्यः, 'लोकहितेभ्य' लोकाय—सकलैकेंद्रियादिप्राणिवर्गाय पंचास्तिकायात्मकाय वा सम्यग् रक्षणप्ररूपणादिना हिता लोकहितास्तेभ्यः, 'लोकप्रदीपेभ्यः' लोकस्य—विशिष्टसंज्ञिरूपस्य देशनांशुभिर्मिथ्यात्वतमोऽपनयनेन प्रदीपा लोकप्रदीपास्तेभ्यः 'लोकप्रद्योतकरेभ्यः' लोकस्य—गणधरादेः प्रद्योतं—विशिष्टं तत्त्वप्रकाशं कुर्वंतीति लोकप्रद्योतकरास्तेभ्यः ४, उपसंयोगसंपद एव हेतुसंपदमाह—'अभयदयाण'मित्यादि, अभयदेभ्यः, अभयं—इह १ परलोका २ दाना ३—कस्मा ४ दाजीव ५ मरणा ६ श्लोक ७ लक्षणसप्तभयाभावं ददतीत्यभयदास्तेभ्यः, 'चक्षुर्देभ्यः' तत्त्वाववोधरूपज्ञानदृष्टिदातृभ्यः, मार्गः—चेतोऽकुटिलगमनेन विशिष्टस्थानावाप्तिप्रवणो दर्शनमोहादिक्षयोपशमविशेषस्तं ददतीति मार्गदास्तेभ्यः, 'शरणदेभ्यः' रागादिभयभीतसत्त्वत्राणकारिभ्यः, बोधिदेभ्यः—सद्दर्शनदातृभ्यः, एतानि च यथोत्तरं पूर्वपूर्वफलभूतानि, तथाहि—अभयफलं चक्षुश्चक्षुःफलं मार्ग इत्यादि ५, अथाद्याया एव विशेषोपयोगसंपदमाह—'धम्मदयाण'मित्यादि, धर्म्मदेभ्यः यथार्हयतिगृहिधर्म्मदायिभ्यः, अत्र च हेत्वंतराणां सद्भावेऽपि भगवंत एव प्रधानहेतत्व इति, धर्म्मदत्वं च धर्म्मदेशनयैव स्यादित्याह—'धर्म्मदेशकेभ्यः' धर्म्मं—प्रस्तुतं यथायोग्यमवंध्यतया देशयंतीति धर्म्मदेशकास्तेभ्यः 'धम्मनायकेभ्य', धर्म्मस्य वशीकरणात् फलोपभोगात् प्रवर्द्धनात् व्याघातरक्षणाच्च नायका धर्म्मनायकास्तेभ्यः, 'धर्म्मसारथिभ्यः' प्रस्तुतधर्म्मस्य भव्यरथ्यापेक्षया सम्यग्दमनप्रवर्त्तनपालनयोगतः सारथयो धर्म्मसारथयस्तेभ्यः, अत्रार्थे संप्रदायः—तथाहि श्रीमहावीरो, विहरन्नेकदा महीम्। उद्याने समवासार्षीत्, पुराद्राजगृहाद् बहिः ॥१॥

पुनः श्रेणिकधारिण्योः, सूनुः श्रुत्वा विभोर्गिरः । प्रबुद्धोऽष्टौ प्रियास्त्यक्त्वा, मेघो दीक्षामुपाददे ॥२॥ ग्रहणासेवनाशिक्षाशिक्षायै स्वामिनाऽर्पितः । स्थविराणामसौ तैस्तु, शायितो द्वारवर्त्मनि ॥३॥ निर्यद्भिः प्रविशद्भिश्च, साधुभिस्तत्र भूरिभिः । सोऽसकृज्जानुहस्तांह्रिकूर्पराद्यैरघट्ट्यत ॥४॥ प्रमृजद्भिश्च सर्वांगं, तथाऽगुंड्यत रेणुना । यथाऽसौ क्षणमप्येकं, निद्रां प्राप न तन्निशि ॥५॥ दध्यौ सोऽथ पुरा मेऽर्मी, सादराः साधवोऽभवन् । इदानीं पाणिपादाद्यैर्घट्टयंति स लोष्ठुवत् ॥ ६ ॥ सहिष्ये दुःसहां हंत, कथमित्थं कदर्थनाम् ? । तत् प्रातः प्रभुमापृच्छय, श्रयिष्ये गृहितां पुनः ॥७॥ इति ध्यात्वोद्गते सूर्ये, गत्वाऽर्हंतं ननाम सः । बभाषे तमथो वीरः, सुधामधुरया गिरा ॥ ॥८॥ वत्स ! निर्गच्छदागच्छत्साधुभिर्घट्टितोऽद्य किम् । दुर्ध्यासीर्भवं पूर्वं, मेघानघमनाः शृणु ॥९॥ अतो भवात्तृतीयेऽभूर्वैताढ्यभुवि षड्रदः । हस्ती सहस्रयूथेशस्त्वं सुमेरुप्रभः सितः ॥१०॥ दवाद् भीतोऽन्यदा ग्रीष्मे, विहाय करिणीर्जवात् । धावमानः सरश्चैकं, पंकिलं तृषितोऽविशः ॥११॥ तत्राप्राप्तपयाः पंके, मग्नः प्रत्यर्थिदंतिना । विद्धः सप्त दिनान्यस्थाः, सहमानो महाव्यथाम् ॥१२॥ आयुर्वर्षशतं विंशत्युत्तरं पलिपाल्य च । रक्तो दंती चतुर्दंतो, विंध्यभूम्यामभूः पुनः ॥१३॥ मेरुप्रभाभिधः सप्तहस्तिनीशतनायकः । दवं दृष्ट्वाऽन्यदा जातिमस्मार्षीः स्वस्य पूर्विकाम् ॥१४॥ वर्षारात्रादिमध्यांते, वल्ल्याद्युन्मूल्य मूलतः । स्थंडिलं सपरीवारो, व्यधाद्योजनमात्रकम् ॥१५॥ दृष्ट्वाऽन्येद्युर्दवभीतः, पौरुषं स्वं विमुच्य च । द्रुतं गत्वाऽविशस्तत्र, स्थंडिले सत्त्वसंकुले ॥१६॥ संलीनांगः स्थितस्तत्र, गात्रकंडूयनेच्छया । उदक्षिपोऽह्रिमेकं त्वं, तद्भूम्यां शशकोऽविशत् ॥१७॥ कंडूयित्वा वपुः पादं, मुंचन्नालोक्य तं शशम् । सशंकस्त्वं तथैवास्थाः, शशकस्यानुकंपया ॥१८॥ सार्द्धाह्निद्वयाच्छान्ते, दवे प्रचलितोऽस्यथ । त्रुटित्वेव गिरेः कूटं, धरित्र्यामपतस्ततः ॥१९॥ ततो दिनत्रयीं क्षुत्तृड्बाधितोऽपि कृपापरः । आयुरब्दशतं क्षिप्त्वा,

भूस्त्वमत्र नृपात्मजः ॥२०॥ तदा कृपा कृता तस्य, वत्स ! स्वस्थात्मना त्वया । तथा स्वस्य व्यथाऽत्यर्थं, नागण्यत मनागपि ।.२१॥ इदानीं तु जगद्विद्वान्, सर्व्वसावद्यवर्जकः । साधुभिः समचित्तैस्त्वं, घट्ट्यमानोऽपि दूयसे ॥ २२ ॥ स्वाम्याख्यातमिति श्रुत्वा, स्मृत्वा पूर्व्वभवौ निजौ । पुनरायातसंवेगो, नत्वा मेघोऽभ्यधात् प्रभुम् ॥२३॥ जीयाश्चिरं यदेवं मामुत्पथप्रस्थितं पथि । पुनः प्रावीवृतः क्षिप्रं, रथ्याविव सुसारथिः ॥२४॥ मुनयोऽमी महात्मानोऽमीषां पादरजोऽपि हि । वंद्यं मेऽतः प्रभृत्येषां, निसृष्टं स्वशरीरकम् ॥२५॥ मुक्त्वा नेत्रे शरीरेऽत्र, कुर्व्वतां घट्टनादिकम् । मनसाऽपि न दुष्यामीत्यत्रार्थे मेऽस्त्वभिग्रहः ॥२६॥ एवं स्थिरीकृतो मेघस्तीव्रं तप्त्वा तपश्चिरम् । कृत्वा संलेखनां मासं, विजये त्रिदशोऽजनि ॥२७॥ ततश्च्युत्वा विदेहेषु, लप्स्यते पदमव्ययम् । तदेवं भगवंतोऽमी, धर्म्मसारथयो मताः ॥२८॥ तथा 'धर्म्मवरचातुरंतचक्रवर्त्तिभ्यः' धर्म्म एव वरं-प्रधानं चतसृणां गतीनामंतकरणाच्चतुरंतं चक्रमिव चक्रं मिथ्यात्वादिभावशत्रुलवनात् तेन वर्त्तंत इत्येवंशीला धर्म्मवरचतुरंतचक्रवर्त्तिनस्तेभ्यः, 'अतः समृद्ध्यादावा' इति प्राकृतसूत्रादत्रात्त्वं ६ । अथाद्याया एव सकारणस्वरूपसंपदमाह-'अप्पडिहये'त्यादि, अप्रतिहते-सर्वत्राप्रतिघे वरे-प्रधाने क्षायिकत्वाद्विशेषसामान्यावबोधरूपे ज्ञानदर्शने धारयंतीत्यप्रतिहतवरज्ञानदर्शनधरास्तेभ्यः 'व्यावृत्तच्छद्मभ्यः' छादयतीति छद्म-ज्ञानावरणीयादि घातिकर्म्मचतुष्कं तद् व्यावृत्तं-अपगतं येभ्यस्ते व्यावृत्तच्छद्मानस्तेभ्यः ७, स्वतुल्यपरफलकर्त्त्वसंपदमाह-'जिणाण'मित्यादि, जिनेभ्यः-रागादिजेतृभ्यः जापकेभ्यः-अन्येषामप्युपदेशादिना रागादिजयकारयितृभ्यः, तीर्णेभ्यः-भवार्णवपारगतेभ्यः तारकेभ्यः-तारयंत्यन्यानपीति तारकास्तेभ्यः,बुद्धेभ्यः-ज्ञाततत्त्वेभ्यः, बोधकेभ्योऽन्येषामपि तत्त्वज्ञापकेभ्यः,मुक्तेभ्यः-भवहेतुकर्म्मपाशरहितेभ्यः मोचकेभ्यः-मोचयंत्यन्यानपि मोचकास्तेभ्यः । सांप्रतं मुक्त्यवस्थामाश्रित्य नवमीं संपदमाह-'सव्व-

न्नूण'मित्यादि, सर्वं वस्तु सामान्यविशेषात्मकमपि प्रथमसमये विशेषात्मकतया जानंतीति सर्व्वज्ञास्तेभ्यः, ततो द्वितीयसमये सर्वं वस्तु सामान्यात्मकतया पश्यंतीत्येवंशीलाः सर्वदर्शिनस्तेभ्यः, आह-इत्थमेषां दर्शनसमये ज्ञानस्यासत्त्वादसर्वज्ञताप्रसंगः, अत्रोच्यते, सर्व्वस्य केवलिनः सदैव ज्ञानदर्शनलब्धिसद्भावेऽपि तत्स्वाभाव्यान्न युगपदेकस्मिन् समये उपयोगद्वयसंभवः, क्षायोपशमिकसंवेदने तथा दर्शनात्, न च चतुर्ज्ञानिनोऽप्येकस्मिन् ज्ञानोपयोगे सति शेषज्ञानाभावः स्यात्, अत्र च बहु वक्तव्यं तत्तु नोच्यते, ग्रंथगौरवभयात्, तथा शिवं-निरुपद्रवं अचलं-चलनक्रियारहितं अरुजं-रोगवर्जितं अनंतं अनंतज्ञानयोगात् अक्षयं क्षयहेत्वभावात् अव्याबाधं अमूर्त्तत्वात् अपुनरावृत्ति अकर्म्मत्वात् सिद्धिगतिनामधेयं-लोकाग्रलक्षणं स्थानं संप्राप्तेभ्यः, नमो जिनेभ्यः जितभयेभ्यः, पुनरंते नमस्काराभिधानं मध्यपदेष्वपि अनुवृत्त्यर्थं, अत्र च स्तुतित्वान्न पौनरुक्त्याशंका कार्या, यदाहुः-"सज्झायझाणतवओसहेसु उवएसथुइपयाणेसु। संतगुणकित्तणेसु य न हुंति पुणरुत्तदोसा उ ॥१॥" अनेन च जिनजन्मादिषु शक्रो जिनान् स्तौति इत्ययं शक्रस्तव उच्यते, तित्तीसं च पयाइं नव संपय वण्ण दुसयवासट्ठा। भावजिणत्थयरूवो अहिगारो एस पढमोऽत्थि ॥१॥ अतोऽनंतरं त्रिकालवर्त्तिद्रव्यार्हद्वंदनार्थमिमां गाथां पूर्वाचार्याः पठंति-'जे अ अईया सिद्धा जे य भविस्संतिऽणागए काले। संपई अ वट्टमाणा सव्वे तिविहेण वंदामि ॥१॥ कंठ्या। ननु किं द्रव्यार्हंतो नरकादिगतिगता अपि भावार्हद्वद् वंदनार्हाः?, कामं, कथमिति चेत् उच्यते, सर्वत्र तावन्नामस्थापनाद्रव्यार्हंतो भावार्हदवस्थां हृदि व्यवस्थाप्य नमस्कार्याः, अत्रापि च भरताधिपेन तथैव नमस्कृतत्वात्, तथा ह्याद्यो जिनोऽयोध्यानगर्या बहिरेकदा। तस्थिवानथ तं नंतुं, भरतश्चक्रवर्त्यगात् ॥१॥ नत्वा पाक्षीद्यथेयत्यां, सुरासुरनृपर्षदि। स जीवोऽस्ति जिनो योऽत्रावसर्प्पिण्यां भविष्यति? ॥२॥ स्वाम्यूचे तव पुत्रोऽयं,

पारिव्राज्यप्रवर्त्तकः। मरीचिर्भरते भावी, त्रिपृष्ठः प्रथमो हरिः ॥३॥ मूकापुर्यां विदेहेषु, प्रियमित्रश्च चक्र्यसौ। भरतेऽत्र चतुर्विंशः, श्रीवीरो धर्म्मचक्र्यपि ॥४॥ श्रुत्वेति भरतश्चक्री, तत्र गत्वाऽब्रवीदिदम्। पारिव्राज्यं न ते वंदे, न च चक्र्यर्द्धचक्रिताम् ॥५॥ किंतु तातेन यत्प्रोक्तश्चतुर्विंशोऽत्र तीर्थकृत्। आर्हंत्यं त्रिजगद्वंद्यं, तत्ते वंदेऽधुनाऽप्यहम् ॥६॥ ततः प्रदक्षिणास्तिस्रः, कृत्वा तं भक्तिनिर्भरः। अभिवंद्य निजं धाम, जगाम भरताधिपः ॥७॥ तदेवं द्रव्यार्हतां नमस्करणीयत्वात् पूर्वाचार्याचरितत्वाच्च युक्तेयं गाथेति, द्रव्यार्हद्वंदनार्थोऽयं द्वितीयोऽधिकारः, प्रथमो दंडकः। तत उत्थाय स्थापनार्हद्वंदनार्थं जिनमुद्रया चैत्यस्तवदंडकं विधिवद् भणतीत्येतदेवाह—

विसिट्ठवन्ननासेणं, भाविंतो य पयं पयं। जिणनाहस्स बिंबंमि, दिन्नदिट्ठी सुहासओ ॥३२॥

विशिष्टवर्णन्यासेन—व्यक्ताक्षरपदसंपत्सत्यापनेन, तथा भावयंश्च पदं पदं—अभ्युपगमाद्युपयोगपरः प्रतिपदमर्थं चिंतयन्, ते चामी अभ्युपगमादयः—अब्भुवगमो निमित्तं हेऊ इगवयणअंत आगारा। बहुवयणंता य पुणो उस्सग्गविहाणमाणं तु ॥१॥ तथा—जिननाथस्य बिंबे दत्तदृष्टिः—त्रिदिग्निरीक्षणनिषेधेनाधिकृतजिनबिंब एव न्यस्तदृक्, तथा शुभाशयो निदानाद्यदूषितचित्तः, एवंविधगुणश्चैत्यस्तवं पठतीति प्रक्रमाल्लभ्यत इति श्लोकार्थः। स चायं "अरिहंतचेइयाण"मित्यादि, अर्हतां—भावार्हतां चैत्यानि—चित्तसमाधिजनकानि प्रतिमालक्षणानि अर्हच्चैत्यानि तेषां वंदनादिप्रत्ययं कायोत्सर्गं करोमीति संबंधः, कायस्योत्सर्गः—स्थानमौनध्यानं विना क्रियांतरनिरासेन त्यागस्तं करोमि "वंदणवत्तियाए" वंदनप्रत्ययं—वंदननिमित्तं, प्रशस्तमनोवाक्काय-प्रवृत्तिनिमित्तमिति भावः, यादृग् वंदनात् पुण्यं स्यात्तादृक्कायोत्सर्गादपि मे भवत्विति, 'वत्तियाए'त्ति आर्षत्वात्सिद्धं, 'पूयणवत्ति-

याए' पूजनप्रत्ययं, पूजनं–गंधमाल्यादिभिरभ्यर्चनं 'सक्कारवत्तियाए' सत्कारप्रत्ययं, सत्कारो–वस्त्राभरणादिभिः पूजनं, नन्वेतौ पूजासत्कारौ द्रव्यस्तवत्वात् साधोः 'छज्जीवकायसंजमो' इत्यादिवचनप्रामाण्यात्कथं नानुचितौ?, श्रावकस्य तु साक्षात्तौ कुर्वतः कायोत्सर्गद्वारेण तत्प्रार्थने कथं न नैरर्थक्यं?, उच्यते, साधोर्द्रव्यस्तवनिषेधः स्वयं करणमाश्रित्य, न तु कारणानुमती, यतः–'अकसिणपवत्तगाण'मित्याद्युपदेशदानतः कारणसद्भावो भगवतां विशिष्टपूजादिदर्शने च प्रमोदादिना अनुमतिरपि, यदुक्तं–"सुव्वइ य वयररिसिणो कारवणंपिय अणुट्ठियमिमस्स। वायगगंथेसु तहा एयगया देसणा चेव ॥१॥" श्रावकस्य त्वेतौ संपादयतोऽपि भक्त्यतिशयादाधिक्यसंपादनार्थं प्रार्थयमानस्य न नैरर्थक्यं, किंच–एते भगवंतोऽत्यादरेण वंद्यमानाः पूज्यमाना अप्यनंतगुणत्वान्न सुवंदितपूजिताः स्युः, अत्र संप्रदायः–राजा दशार्णभद्रोऽभूद्दशार्णपुरपत्तने। तत्रान्यदा दशार्णाद्रौ, वीरोऽर्हन् समवासरत् ॥१॥ वर्द्धितो नृपतिर्वीरागमेनोद्यानपालकैः। हर्षप्रकर्षादुत्तस्थौ, पृथ्वीशोऽथ निजासनात् ॥२॥ ततः कृतोत्तरासंगः, संमुखं परमेशितुः। गत्वा पदानि सप्ताष्टौ, ववंदे विधिवज्जिनम् ॥३॥ सिंहासनमथास्थाय, तेभ्यो दानं महद्ददौ। ततोऽतिभक्तिसंभारभ्राजिष्णुर्ध्यातवानिति ॥४॥ श्वो वंदिष्ये तथाऽर्हंतं, यथाऽन्येन न वंदितः। ध्यात्वेत्यकारयद्रात्रौ, पुरमुद्यत्पताककम् ॥५॥ कृतादृशोभमंभोभिः, सिक्तभूमि सुगंधिभिः। रत्नतोरणपांचालीमंचोन्मञ्चविराजितम् ॥ ६ ॥ दह्यमानागुरुस्तोमधूमधूम्रनभस्तलम्। स्थाने स्थाने प्रबंधेन, प्रारब्धानेकनाटकम् ॥७॥ प्रातर्विहितशृंगारो, भूपतिर्गंधसिंधुरम्। आरूढः सर्वसामंतैः, सर्वर्द्ध्या सहितैर्वृतः ॥८॥ प्रत्येकं शिबिकारूढशुद्धान्तेन समन्वितः। त्रिदशस्त्रैणतुल्येन, सहस्रार्द्धमितेन सः ॥९॥ चतुरंगचमूयुक्तो, मन्यमानो जगत् तृणम्। वंदितुं श्रीमहावीरं, निर्ययौ निजमंदिरात् ॥१०॥ गीतवादित्रनृत्यादि, प्रेक्षमाणः पदे पदे। ददानमथार्थिभ्यो, मनोरथपथातिगम् ॥११॥ गीय-

सत्कारे
दशार्णभद्रः

मानगुणग्रामः, क्रियमाणोरुमंगलः। प्राप दशार्णभद्रस्तं, दशार्णाभिधभूधरम् ॥१२॥ उत्तीर्य सिंधुरस्कंधात्, प्रविश्य विधिवत् ततः। नृपः समवसृत्यंतश्चक्रे तिस्रः प्रदक्षिणाः ॥१३॥ नत्वाऽर्हतं यथास्थानं, निषण्णो हृदि रंजितः। वज्री ज्ञात्वाऽथ तच्चित्तं, मनसेवमचिंतयत् ॥१४॥ अस्याहो भक्तिरागोऽयं, विश्वपूज्यस्य पूजने। परमेतेन मानेन, दूष्यतेऽमुष्य ही यतः ॥१५॥ सुरासुरनराधीशैः, सर्वैः सर्व्वर्द्धिभिर्जिनाः। युगपद्यदि पूज्यंते, तथाऽपि स्युर्न पूजिताः ॥१६॥ अप्रमेयगुणा ह्येते, पुजा तु प्रमिताऽङ्गिनाम्। अतोऽस्य मानमोक्षार्थं, यतिष्ये शक्तिभक्तितः ॥१७॥ अथैरावणदेवेनाकारयत्तुंगकुंजरान्। चतुःषष्टिसहस्राणि, पर्वतानिव जंगमान् ॥१८॥ तेषु पंचशती जज्ञे, शीर्षाणां द्वादशोत्तरा। प्रत्येकमथ शीर्षेषु, जज्ञिरे चाष्टदंतकाः ॥१९॥ दंते दंते च वाप्योऽष्टौ, तत्राष्टाष्टांबुजानि च। प्रत्येकं लक्षपत्राणि, तेष्वंतः स्वर्णकर्णिकाः ॥२०॥ प्रासादस्तत्र तत्रेंद्रोऽध्यास्ताग्रमहिषीयुतः। प्रत्येकं तेषु पत्रेषु, पश्यन् नाट्यविधिं परम् ॥२१॥ राजन् स्वाराज्यसंपत्त्या, देवराजोऽन्ययाऽपि सः। जिनराजं नमस्कर्तुं, दशार्णगिरिमागमत् ॥२२॥ प्रभुं प्रदक्षिणीकृत्य, नमतीन्द्रे गजस्थिते। गजाग्रिमौ पदौ प्राग्णि, मग्नावार्द्रभुवीव यत् ॥२३॥ गजाग्रपदकस्तेन, स ख्यातस्तीर्थमुत्तमम्। क्षितीशोऽथ सहस्राक्षं, निरीक्ष्येति व्यचिंतयत् ॥२४॥ अहो रूपमहो ऋद्धिरहो स्त्रैणं च वज्रिणः। अहो भक्तिरहो शक्तिरस्यान्यत् सर्वमप्यहो ॥२५॥ तत् कूपभेककल्पेन, गर्वोऽयं ही मया कृतः। ततोऽनर्थप्रदायिन्या, कृतं मेऽतः श्रियाऽनया ॥२६॥ ध्यात्वेति बुद्धिमान् धीरः, पंचभिर्मुष्टिभिः कचान्। उत्खाय तत्क्षणाद् दीक्षां, प्रभुपार्श्वे समाददौ ॥२७॥ जितंमन्योऽथ राजर्षिं, नत्वोचे हर्षभाग् हरिः। धन्यस्त्वं येन दुष्पूरा, प्रतिज्ञा पूरिता स्वका ॥२८॥ पुनः पुनः प्रशस्यैवं, सुत्रामा स्वर्गमीयिवान्। क्रमात् कर्मक्षयं कृत्वा, राजर्षिस्तु शिवं ययौ ॥२९॥ तदेवं पूजासत्कारौ भावस्तवहेतुत्वाद्गणनीयावेव, 'सम्माणवत्तियाए' सन्मानप्रत्ययं, सन्मानः

स्तवादिभिर्गुणोत्कीर्त्तनं, अथ वंदनाद्याशंसाः किमर्थमित्याह–'बोहिलाभवत्तियाए' बोधिलाभो–जिनधर्म्मप्राप्तिस्तत्प्रत्ययं१, एषोऽपि किंनिमित्तमित्याह–'निरुवसग्गवत्तियाए' निरुपसर्गो–जन्माद्युपसर्गरहितो मोक्षस्तत्प्रत्ययं २, अयं च कायोत्सर्गः श्रद्धादिरहितैः क्रियमाणोऽपि नेष्टसाधक इत्यत आह–'सद्धाए'इत्यादि, श्रद्धया–स्वाभिलाषेण,न त्वन्याभियोगादिना,मेधया–हेयोपादेयपरिज्ञानरूपया, न तु जडत्वेन, मर्यादावर्त्तितया वा, नासमंजसत्वेन, धृत्या–मनःस्वास्थ्येन, न रागाद्याकुलतया, धारणया–अर्हद्गुणाविस्मरणरूपया, न तु शून्यतया, अनुप्रेक्षया–अर्हद्गुणानामेव पुनः पुनश्चिंतनेन, न तद्वैकल्येन, वर्द्धमानयेति प्रत्येकं श्रद्धादिभिः संबध्यते, एवमेतैर्हेतुभिस्तिष्ठामि–करोमि कायोत्सर्गं, ननु प्राकरोमि कायोत्सर्गमित्युक्तमेव, किमर्थं पुनः ठामीत्यादि?, उच्यते, 'सत्सामीप्ये सद्वद्वे'ति सूत्रात् करोमि–करिष्यामीति क्रियाभिमुख्यं प्रागुक्तं, अधुना त्वासन्नतरत्वादस्य करणमेव, किं सर्वथा कायोत्सर्गो?, नेत्याह–'अन्नत्थ ऊससिएण' मित्यादि, व्याख्याऽस्य प्राग्वत्, अत्रापि विश्रामाष्टकोल्लिंगनपदानि 'अरिहं वंदण सद्धा अन्नत्थ सुहुम एव जा ताव। अड संपय तेयाला पय वन्ना दुसयतीसहिया ॥१॥' एवं स्थापनार्हद्वंदनाख्यस्तृतीयोऽधिकारः, द्वितीयो दंडकः ॥ सांप्रत कायोत्सर्गस्य दोषवर्जनं तस्मिन् चिंतनं च सूत्रकृदेवाह—

घोडगलयमाईए, दोसे उस्सग्गसंतिए। काउस्सग्गे ठिओ वज्जे, नमुक्कारं विचिंतए ॥३३॥ कंठ्या। दोषानाह—

घोडग लया य खंभे कुड्डे माले य सबरि वहु नियले। लंबुत्तर थण उद्धी संजइ खलिणा य वायस कविट्ठे ॥३४॥

सीसोकंपिय मुई अंगुलि भमुहा य वारुणी पेहा। नाहीकरयलकोप्पर उस्सारिय पारियंमि थुई ॥ ३५ ॥

अश्ववद् विषमपादः १ वाताहतलतावत् कंपमानः २ स्तंभे कुड्ये वाऽवष्टभ्य ३ माले चोत्तमांगं निधाय ४ अवसनशबरीव-

दुयाग्रे करौ कृत्वा ५ वधूवद्वनतोत्तमांगः ६ निगडितवच्चरणौ विस्तार्य मेलयित्वा वा ७ नाभेरुपरि जानुनोरधश्च प्रलंबमान-निवसनः ८ दंशादिरक्षार्थमज्ञानाद्वा हृदयं प्रच्छाद्य ९ शकटोर्द्धिवदंगुष्ठौ पार्ष्णी वा मीलयित्वा १० संयतीवत् प्रावृत्य ११ कपिवद् रजोहरणमग्रतः कृत्वा १२ वायसवच्चक्षुर्गोलकौ भ्रमयन् १३ कपित्थवत् परिधानं पिंडयित्वा १४ यक्षाविष्ट इव शिरः कंपयन् १५ मूकवत् हूहूकुर्व्वन् १६ आलापकगणनार्थमंगुलीर्भ्रुवौ वा चालयन् १७ वारुणी—सुरा तद्वत् बुडबुडयन् १८ अनुप्रेक्षमाणो वानर इवौष्ठपुटं चालयन् कायोत्सर्गं करोतीत्येकोनविंशतिर्दोषाः १९ । सूत्रे सर्वमप्यनुष्ठानं साधुमुद्दिश्योक्तमतस्तद्विधिशेषमाह—'नाहि'-त्ति नाभेरधश्चत्वार्यंगुलानि चोलपट्टः 'करयल'त्ति दक्षिणेतरपाणिभ्यां मुखवस्त्रिका रजोहरणं च 'कुप्पर'त्ति कूर्प्पराभ्यां चोलपट्टश्च धरणीयः 'उस्सारिय पारियंमि थुइ'त्ति उत्सारिते—पूरिते कायोत्सर्गे नमस्कारेण पारिते वंद्यमानजिनस्तुतिर्भणनीया, पाठांतरं वा 'एगूणवीसदोसा काउस्सग्गस्स वज्जिज्ज'त्ति गाथाद्वयार्थः । ततः स्तुतिदानानंतरमस्यामेवावसर्प्पिण्यां ये भारतवर्षे तीर्थकृतोऽभूवं-स्तेषामासन्नोपकारित्वेन नामोत्कीर्त्तनाय चतुर्विंशतिस्तवं पठंति—'लोगस्स उज्जोअगरे' इत्यादि, लोकस्य—पंचास्तिकायात्मकस्य केवलालोकदीपेनोद्योतकरान्—प्रकाशकान् धर्म्मतीर्थकरान्—नद्यादेः शाक्यादेश्च द्रव्यतीर्थस्य निरासेन संसारोत्तारकसंघादिरूपधर्म्म-तीर्थकरणशीलान् जिनान्—रागादिजेतॄन्, अर्हत इति विशेष्यपदं, तान् कीर्त्तयिष्ये—नामभिः स्तोष्ये, चतुर्विंशतिमपि, अपिशब्दात् शेष-क्षेत्रसंभवांश्च, केवलिनो भावार्हत इत्यर्थः, नामान्येवाह—'उसभे'त्यादि गाथात्रयं पाठसिद्धं । नामार्थस्तु सामान्यतो विशेषतश्चो-च्यते—तत्र सामान्यत उसभोत्ति समग्रसंयमभरोद्वहनाद् वृषभ इव वृषभः, एवं तावत् सर्व्वेऽप्यर्हंतो वृषभाः प्रथमजिने को विशेष इति १, उच्यते, उर्वोर्वृषभलांछनत्वात् मातुश्च चतुर्दशस्वप्नेषु पूर्वमृषभदर्शनाच्चेति ऋषभः १, एवं सामान्यनामान्वर्थः सर्वेष्वपि भावनीयः,

तत्र परीषहादिभिर्न जित इत्यजितः, गर्भस्थेऽस्मिन् जननी द्यूते राज्ञा न जितेत्यजितः २ संभवंति चतुस्त्रिंशदतिशया अस्मिन्निति शं-सुखं भवत्यस्मिन् स्तुते चेति स संभवः, गर्भस्थेऽस्मिन् पृथ्व्यामधिका सस्यसंभूतिर्जातेति संभवः ३ अभिनंद्यते देवेंद्रादिभिरित्यभिनंदनः गर्भात्प्रभृत्येवाभीक्ष्णं शक्रेणाभिनंदित इत्यभिनंदनः ४ शोभना मतिरस्येति सुमतिः, गर्भगतेऽस्मिन् द्वयोः सपत्न्योर्व्यवहारच्छेदने मातुः सुनिश्चिता मतिरभूदिति सुमतिः ५ कायकान्तिमाश्रित्य पद्मस्येव प्रभाऽस्येति पद्मप्रभः, गर्भस्थे प्रभौ मातुः पद्मशयनदोहदो देवतया पूरित इति पद्मवर्णश्चेति पद्मप्रभः ६ शोभनानि पार्श्वान्यस्येति सुपार्श्वः गर्भस्थेऽस्मिन् माताऽपि सुपार्श्वा जातेत्यपि सुपार्श्वः ७ चंद्रवत् सौम्या प्रभाऽस्येति चंद्रप्रभः,गर्भस्थेऽस्मिन् मातुश्चंद्रपानदोहदोऽभूदिति चंद्रप्रभः ८ शोभनो विधिरस्येति सुविधिः,गर्भस्थेऽस्मिन् माताऽपि सर्वविधिषु कुशला जातेति सुविधिः ९ समस्तसत्त्वसंतापोशमकत्वात् शीतलः, गर्भस्थेऽस्मिन् पितुः पूर्वोत्पन्नोऽचिकित्स्यः पित्तदाहो राज्ञीकरस्पर्शादेवोपशांत इति शीतलः १० विश्वस्यापि श्रेयान्-हितकर इति श्रेयांसः, गर्भस्थेऽस्मिन् केनाप्यनाक्रांतपूर्वा देवताधिष्ठिता शय्या जनन्या आक्रांता श्रेयश्च जातमिति श्रेयांसः ११ वसवो-देवविशेषास्तेषां पूज्यो वासुपूज्यः, गर्भस्थेऽस्मिन् वसूनि-रत्नानि तैरभीक्ष्णं वासवो राजकुलं पूजितवानिति वसुपूज्यस्य राज्ञोऽपत्यमिति वा वासुपूज्यः १२ विमलानि ज्ञानादीनि अस्येति विगतमलो वा विमलः, गर्भस्थेऽस्मिन् मातुर्मतिस्तनुश्च विमला जातेति विमलः १३ अनंतकर्मांशजयाद् अनंतानि वा ज्ञानादीन्यस्येत्यनंतः,गर्भस्थेऽस्मिन् मात्रा रत्नखचितमनंतं-महत्प्रमाणं दाम स्वप्ने दृष्टमित्यनंतः १४ दुर्गतौ पतंतं सत्त्वसंघातं धारयतीति धर्म्मः, गर्भस्थेऽस्मिन् माता दानादिधर्म्मपरा जातेति धर्म्मः १५ शांत्यात्मकत्वात् तत्कर्तृत्वाच्चेति शांतिः अस्मिन् गर्भस्थे पूर्वोत्पन्नाशिवस्य शांतिर्जातेति शांतिः १६ कौ-पृथ्व्यां स्थितवानिति निरुक्त्या कुंथुः, गर्भस्थेऽस्मिन् माता रत्न-

विचित्रं कुंथुं-स्तूपं दृष्टवतीति कुंथुः १७ सर्वो नाम महासत्त्वः, कुले यत्र प्रजायते । तस्याभिवृद्धये वृद्धैरमावर उदाहृतः ॥१॥ इत्यरः, गर्भस्थेऽस्मिन् मात्रा सर्वरत्नमयोऽरो दृष्ट इत्यरः १८ परीपहादिमल्लजयान्मल्लिः, आर्षत्वादिकारः, गर्भस्थेऽस्मिन् मातुः सर्वर्तुक-कुसुममाल्यशयनीयदोहदो देवतया पूरित इति मल्लिः १९ मन्यते जगतस्त्रिकालावस्थामिति मुनिः, सुष्ठु व्रतान्यस्य सुव्रतः, मुनि-श्चासौ सुव्रतश्चेति मुनिसुव्रतः, गर्भस्थेऽस्मिन् माता मुनिवत् सुव्रता जातेति मुनिसुव्रतः २० परीपहादिनामनान्नमिः, गर्भस्थेऽस्मिन् प्रत्यंतावरुद्धे नगरे भगवत्पुण्यशक्तिप्रेरितां प्राकारोपरिस्थितां भगवन्मातरमवलोक्य ते वैरिनृपाः प्रणता इति नमिः २१ अरिष्टस्य-दूरितस्य नेमिः—चक्रधारेवेत्यरिष्ठनेमिः, गर्भस्थेऽस्मिन् मात्रा महान् रिष्ठरत्नमय उत्पतन्नेमिर्दृष्ट इत्यरिष्ठनेमिः, अकारोऽत्रापश्चिमादि-शब्दवत् २२ सर्वभावान् पश्यतीति निरुक्तात् पार्श्वः, गर्भस्थेऽस्मिन् माता शयनीयस्था निशि तमस्यपि सर्प्पमपश्यदिति पार्श्वः २३ उत्पत्तेरारभ्य ज्ञानादिभिर्वर्द्धत इति वर्द्धमानः गर्भस्थेऽस्मिन् ज्ञातकुलं धनधान्यादिभिर्वृद्धिं गतमिति वर्द्धमानः २४ । इति कीर्त्तयित्वा चित्तशुद्धये प्रणिधानमाह—'एव'मित्यादि, एवं—पूर्वोक्तप्रकारेण मयाऽभिष्टुताः—नामभिः कीर्त्तिताः, किंविशिष्टाः ?—विधूतरजो-मलाः, बध्यमानं बद्धं ऐर्यापथं वा कर्म्म रजः, पूर्वबद्धं निकाचितं सांपरायिकं वा मलं, ते विधूते—अपनीते यैस्ते विधूतरजोमलाः, अत एव च क्षीणजरामरणाः, चतुर्विंशतिरपि जिनवराः, अपिशब्दः प्राग्वत्, जिनेभ्यः—श्रुतादिजिनेभ्यो वराः—प्रकृष्टाः तीर्थकरा मे—मम प्रसीदंतु—प्रसादपरा भवंतु, यद्यप्येते वीतरागादित्वान्न प्रसीदंति तथापि तानचिंत्यमाहात्म्योपेतान् चिंतामण्यादीनिव मनःशुद्ध्याऽऽराधयन्नभीष्टफलमवाप्नोतीति । तथा—'कित्तिये'त्यादि, कीर्त्तिताः—स्वनामभिः प्रोक्ताः वंदिताः—कायवाङ्मनोभिः स्तुताः महिताः—पुष्पादिभिः पूजिताः य एते ऋषभाद्या लोकस्य—प्राणिवर्गस्य कर्म्ममलाभावेनोत्तमाः सिद्धा—निष्ठितार्थाः अरोगस्य

भाव आरोग्यं—सिद्धत्वं तस्मै बोधिलाभः—अर्हद्धर्म्मावाप्तिः आरोग्यबोधिलाभस्तं, स चानिदानो मोक्षायैवातस्तदर्थमाह—'समाधिवरं' वरसमाधिं—परमस्वास्थ्यरूपं, भावसमाधिमित्यर्थः, सोऽप्यनेकधा तारतम्येनात उत्तमं—सर्वोत्कृष्टं ददतु, भावसमाधिगुणाविर्भावकं जिनदत्ताख्यानकं, तथाहि—

छद्मस्थ एकदा वीरो, वैशाल्यामाययौ बहिः। तस्थौ प्रतिमया देवकुले काले घनागमे ॥१॥ तत्राऽऽसीत् परमश्राद्धो, जिनदत्ताभिधः सुधीः। च्युतः श्रेष्ठिपदाज्जीर्णश्रेष्ठित्वेन स विश्रुतः ॥२॥ वीरं संवीक्ष्य वंदित्वा, कृत्वोपास्तिं चिराद् गृहम्। अगादहिंडनेनास्य, तर्कयन्नुपवासिताम् ॥३॥ एवं प्रतिदिनं सर्वं, वर्षारात्रमतीत्य सः। दध्यौ स्वाम्यद्य मद्गेहे, यद्यागच्छेत् परेण किम् ? ॥४॥ ध्यायन्निति गृहस्यांतस्तस्थौ स्वस्थमनाश्चिरम्। मध्याह्ने तु गृहद्वारे, सोऽथ स्थित्वेत्यचिंतयत् ॥५॥ यद्यत्रैष्यति वीरोऽद्य, कल्पद्रुरिव जंगमः। संमुखस्तस्य यास्यामि, मूर्द्धबद्धांजलिस्तदा ॥६॥ तं त्रिः प्रदक्षिणीकृत्य, वंदिष्ये सपरिच्छदः। ततो नेष्ये गृहस्यांतर्निधानमिव जंगमम् ॥७॥ प्रधानैस्तत्र पानान्नैः, प्रासुकैरेषणीयकैः। भक्त्या तं पारयिष्यामि, संसारांभोधितारकम् ॥८॥ पुनर्नत्वाऽनुयास्यामि, पदानि कतिचित् ततः। धन्यंमन्यः स्वयं भोक्ष्ये, शेषमुद्धरितं मुदा ॥९॥ एवं मनोरथश्रेणीं, जिनदत्तस्य कुर्व्वतः। श्रीवीरोऽभिनवश्रेष्ठिगृहे भिक्षार्थमागमत् ॥१०॥ कुल्माषा दापितास्तेन, चेट्या चट्टुकहस्तया। सुपात्रदानतस्तत्र, पंच दिव्यानि जज्ञिरे ॥११॥ नृपाद्या मिलितास्तत्र, श्रेष्ठ्यसौ तैः प्रशंसितः। पारयित्वा ततोऽन्यत्र, विहर्त्तुं प्रभुरप्यगात् ॥१२॥ तत्पुर्यामथ तत्राहि, केवली समवासरत्। नृपाद्या एत्य तं नत्वाऽपृच्छन् कः पुण्यवानिह ? ॥१४॥ सोऽथाख्यज्जिनदत्तं तं, राज्ञोचेऽनेन नो जिनः। पारितः पारितः किंतु, श्रेष्ठिनाऽभिनवेन सः ॥१५॥ केवली कथयित्वाऽस्य, भावनां मूलतोऽपि हि। बभाषे भावतोऽनेन, पारितः परमेश्वरः ॥१६॥ दधानेन

समाधिं तं, प्रधानं धीमता तदा। द्वादशस्वर्गसंसर्गयोग्यं कर्म्म समर्जितम् ॥१७॥ किं चान्यद्यदि नाश्रोष्यत्तदाऽसौ देवदुंदुभिम्। ततस्तदैव सोऽप्राप्स्यत्, केवलज्ञानमुज्ज्वलम् ॥१८॥ अनेन भावशून्येन, नूतनश्रेष्ठिना पुनः। सुपात्रदानतः प्राप्तं, स्वर्णवृष्ट्यादिकं फलम्॥१९॥ समाधिरहितो जीवः, स्याल्लभेतैहिकं फलम्। युक्तः समाधिना प्राप, जिनदत्तस्तु नाकिताम् ॥२०॥ जिनदत्तं प्रशस्याथ, ते सर्वेऽगुर्यथाऽऽगतम्। जिनास्तदेवं विज्ञेया, नूनं भावसमाधिदाः ॥२१॥ तथा 'चंदेसु' इत्यादि, पंचम्यर्थे सप्तमी, ततश्चंद्रेभ्यो निर्मलतराः कर्म्ममलकलंकापगमात्, आदित्येभ्योऽधिकं प्रकाशकराः, केवलोद्योतेन लोकालोकप्रकाशकत्वात्, यदागमः-'चंदाइच-गहाणं पभा पयासेइ परिमियं खेत्तं। केवलियनाणलंभो लोयालोयं पयासेइ'॥१॥त्ति, सागरवरः-स्वयंभूरमणांभोधिस्तद्वद् गंभीराः परीषहाद्यक्षोभ्यत्वात् सिद्धाः-क्षीणाशेषकर्म्माणः सिद्धिं-परमपदावाप्तिं मम दिशंतु। 'अडवीसपयपमाणा इह संपय वण्ण दुसय छप्पन्ना। नामजिणत्थयरूवो चउत्थओ एस अहिगारो ।१॥ एवं चतुर्विंशतिस्तवमुक्त्वा सर्वलोके अर्हच्चैत्यानां वंदनाद्यर्थं कायोत्सर्ग-करणायेदं पठति-'सव्वलोए अरिहंतचेइयाण'मित्यादि 'वोसिरामी'ति यावद्,अर्थः प्राग्वत्, नवरं सर्व्वलोके-अधस्तिर्यगूर्ध्व-लोकरूपे, तत्राधोलोके चमरादिभवनेषु द्वासप्ततिलक्षाधिकसप्तकोटिसंख्येषु १ तिर्यग्लोके असंख्येषु व्यंतरनगरद्वीपाचलज्योतिष्क-विमानादिषु २ ऊर्ध्वलोके सौधर्म्मादिस्वर्गगतविमानेषु त्रयोविंशत्युत्तरसप्तनवतिसहस्राधिकचतुरशीतिलक्षसंख्येष्विति ३, अत एव स्तुतिरत्र सर्वतीर्थंकरसाधारणा। एष सर्वलोकस्थापनाऽर्हत्स्तवरूपः पंचमोऽधिकारः। तृतीयो दंडकः। सांप्रतं येन तेऽर्हतस्तत्कथिताश्च भावा ज्ञायंते तत् प्रदीपकल्पं श्रुतमर्हति कीर्त्तनं, तत्रापि तत्प्रणेतॄन् प्रथमं स्तौति-'पुक्खरवरदीवड्ढे' इत्यादि, पुष्करवरस्तृतीयद्वीपः तस्यार्द्धे मानुषोत्तरपर्वतादर्वाग्भागवर्त्तिनि तथा धातकीखंडे द्वीपे द्वितीये जंबूद्वीपे च प्रथमद्वीपे। यानि

भरतैरवतमहाविदेहानि पंचदश क्षेत्राणि तेषु, प्राकृतत्वादेकवचनं,धर्म्मस्य–श्रुतधर्म्मस्यादिकरान् नमस्यामि–स्तुवे। एष षष्ठोऽधिकारः। अधुना श्रुतधर्म्मं स्तौति–'तमतिमिरे'त्यादि, तमः–अज्ञानं तदेव तिमिरं यद्वा बद्धस्पृष्टनिधत्तं ज्ञानावरणीयं कर्म्म तमः निकाचितं तिमिरं तस्य तयोर्वा पटलं–वृंदं तद्विध्वंसयति–विनाशयतीति तमस्तिमिरपटलविध्वंसनस्तस्य 'सुरगणनरेन्द्रमहितस्ये'ति व्यक्तं, सीमायां–मर्यादायां धारयतीति सीमाधरः, प्रक्रमात् श्रुतधर्म्मस्तस्य प्राकृतत्वात्कर्म्मणि षष्ठी अतस्तं वंदे, तस्य वा यन्माहात्म्यं तद्वंदे इति संबंधे षष्ठी, प्रकर्षेण स्फोटितं विवेकिनां मोहजालं मिथ्यात्वादिरूपं येन तस्य, इत्थं श्रुतमभिवंद्य तस्यैव गुणोपदर्शनपूर्वकमप्रमादविषयतां दर्शयति–'जाईजरामरणे'त्यादि, जातिजरामरणशोकप्रणाशनस्य, जातिः–जन्म, शेषं व्यक्तं, कल्यं–आरोग्यं अणयति–शब्दयतीति कल्याणं,पुष्कलं–संपूर्णं,न च तदल्पं, किंतु ?, विशालं–विस्तीर्णं सुखं आह्वयति–प्रापयतीति कल्याणपुष्कलविशालसुखावहस्तस्य सारं–सामर्थ्यमुपलभ्य कः प्रमादं कुर्यात् ?, न कश्चिदित्यर्थः, अत्र संप्रदायः—

प्रमादात् सूरिरेकोऽत्र, प्रेत्याभूद्विगतश्रुतः। तत्रोद्यच्छन् स एवासीत्, पारदृश्वा श्रुतांबुधेः ॥ १ ॥ तथाहि–एकस्मिन् भ्रातरौ गच्छे, गंगाकूलनिवासिनौ। व्रतं जगृहतुः शांतौ, तत्रैकोऽभूद् बहुश्रुतः ॥२॥ सूरिर्जज्ञे क्रमेणासौ, शिष्यैः सूत्रार्थमिच्छुभिः। सेव्यमानो दिनं सर्वं, विश्रामं नाश्नुते क्वचित् ॥३॥ निशायामपि सूत्रार्थचिंतनाप्रच्छनादिभिः। नाससाद सुखं निद्रामन्वहं व्यग्रमानसः ॥४॥ भ्राता तस्य द्वितीयस्तु, नित्यमास्ते यथासुखम्। तं च पश्यन्नसौ सूरिर्दध्यौ दुर्बुद्धिबाधितः ॥५॥ अहो मे बांधवो धन्यो, योऽयमास्ते सदा सुखी। ज्ञानविज्ञानहीनत्वात्, केनाप्यायास्यते न च ॥६॥ अजाकृपाणकल्पेन, ज्ञानेनाहं त्ववाप्नुयाम्। दुःखं ततोऽत्र केनापि, विदुषा सूदितं ह्यदः ॥७॥ मूर्खत्वं हि सखे! ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिंतो ?, बहु-

भोजनो २ ऽत्रपमना ३ नक्तंदिवाशायकः ४ । कार्याकार्यविचारणांधवधिरो ५ मानापमाने समः ६, प्रायेणामयवर्जितो ७ दृढवपु ८-र्मूर्खः सुखं जीवति ॥८॥ न पुनर्भावयति यथा–नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां, येषां यांति दिनानि पंडितजन-व्यायामखिन्नात्मनाम् । तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता, शेषैः किं पशुवद्विवेकरहितैर्भूभारभूतैर्नरैः ? ॥९॥ ज्ञान-प्रद्वेषतश्चैवं, ज्ञानमाशातयन्नसौ । दुष्टबुद्धिः प्रमादेन, ज्ञानघ्नं कर्म्म बद्धवान् ॥१०॥ ज्ञानाचारातिचारं तमनालोच्य विपद्य च । देवोऽभूद्देवलोकेऽसौ, सच्चारित्रप्रभावतः ॥११॥ च्युत्वाऽऽभीरकुले कस्मिन्, भरतेऽत्र सुतोऽजनि । पितृभ्यामनुरूपां स, कन्यामुद्वा-हितो युवा ॥१२॥ तस्यैकदा सुता जज्ञे, सुरूपा भद्रकन्यका । यौवनं प्राप सा यूनां, मनोनयनहारकम् ॥१३॥ अनोधुरि निधायैनां, तत्पिता नगरं प्रति । प्रतस्थे सममाभीरैर्घृतं विक्रेतुमन्यदा ॥१४॥ तामेव पश्यतां तेषामनांसि च मनांसि च । उत्पथस्यान्यभज्यंत,सद्यः प्रस्फाल्य कुत्रचित् ॥१५॥ विलक्षीभूय संभूय,तैरित्यौच्यत तावथ । नाम्ना शकटाऽशकटापितेति च मुहुर्मुहुः ॥१६॥ तदैव तस्य वैराग्यं, बभूव लघुकर्म्मणः । सुतामुद्वाह्य केनापि, दत्त्वा तस्मै धनादिकम् ॥१७॥ गच्छे कस्मिन् स निष्क्रम्य, योगोद्वहनमाद्दतः । कुर्वन्न-ध्यैष्ट सुस्पष्टमुत्तराध्ययनत्रयम् ॥१८॥ पठतोऽसंस्कृताख्यं च, तुर्याध्ययनमंजसा । तत् ज्ञानावरणीयाख्यं, कर्मोदयमगात्ततः ॥१९॥ अधीयानस्य तस्यागादाचाम्लाभ्यां दिनद्वयम् । नैकोऽप्यालापकोऽस्यागात्, कृच्छ्रेणाप्यभियोगतः ॥२०॥ ततोऽसौ गुरुभिः प्रोचे, किं तेऽनुज्ञाप्यतामिदम् ? । स प्राह भगवन्नस्य, योगः कीदृक् ? ततो गुरुः ॥२१॥ ऊचे यावदिदं नैति, तावदाचाम्लमस्य तु । स साह कृतमन्येन, श्रुतेन तपसा च मे ॥२२॥ आचाम्लान्यथ सोऽकार्षीद्, द्वादशाब्दीं समाहितः । क्षयमाप च तत्कर्म, सुखे-नाध्यैष्ट तत श्रुतम् ॥२३॥ शेषं चापि श्रुतं क्षिप्रमधीयाय महामतिः । श्रुतभक्तेरिहामुत्र, स सर्वसुखभागभूत् ॥२४॥ यतश्चैवमतः–

'सिद्धे भो पयओ' इत्यादि, चतुर्थ्याः स्थाने सप्तमी, सिद्धाय–फलाव्यभिचारेण प्रतिष्ठिताय सकलनयव्यापकत्वेन त्रिकोटी-परिशुद्धत्वेन च प्रख्याताय भो इत्यतिशयिनामामंत्रणे पश्यंतु भवंतः प्रयतः–आदरपरोऽहं भूत्वा नमो जिनमताय,कुर्वे इति शेषः, तस्मिंश्च सति नंदिः–समृद्धिः सदा संयमे–चारित्रे भूयात् ,यदार्षं–"पढमं नाणं तओ दये"त्यादि, किंविशिष्टे संयमे ?–'देवनाग-सुवर्णकिंनरगणैः सद्भूतभावेनार्चिते' देवा–वैमानिका नागा–धरणादयः शोभनो वर्णो येषां ते सुवर्णा–ज्योतिष्काः किंनरा–व्यंतर-विशेषास्तेषां गणैः–समूहैः सद्भूतभावेनार्चितः, अत्र वकारेऽनुस्वारः प्राकृतत्वात् सकारस्य द्वित्वं च, लोक्यत इति लोको–ज्ञानं स यत्र श्रुते प्रतिष्ठितः–तद्वशीभूतः तथा जगदिदं ज्ञेयतया प्रतिष्ठितं, किंभूतं ?–त्रैलोक्यमर्त्यासुरं, आधाराधेयरूपं, तत्र त्रैलोक्य-मूर्ध्वाधस्तिर्यग्लोकलक्षणं तस्मिन् मर्त्यासुरमित्युपलक्षणत्वान्नारकतिर्यगादिपरिग्रहः, अयमित्थं भूतो धर्म्मः–श्रुतधर्म्मो वर्द्धतां–वृद्धिं यातु शाश्वतः–अर्थतो नित्यः विजयतः–परवादिविजयेन धर्म्मोत्तरं–चारित्रधर्म्मस्य प्राधान्यं यथा भवत्येवं वर्द्धताम्, पुनर्वृद्ध्य-भिधानं प्रत्यहं मोक्षार्थिनां ज्ञानवृद्धिर्विधेयेत्युपदेशार्थं। श्रुतस्यैव कायोत्सर्गार्थं पठति–"सुयस्स भगवओ"इत्यादि,वोसिरा-मी"ति यावत् , अर्थः प्राग्वत् , नवरं श्रुतस्येति–प्रवचनस्य सामायिकादिचतुर्दशपूर्वपर्यंतस्य भगवतः–समग्रैश्वर्यादियुक्तस्य। स्तुति-श्चात्र श्रुतस्य दातव्या। 'सुयनाणत्थयरूवो अहिगारो एस होइ सत्तमओ। इह पय संपय सोलस नवुत्तरा वन्न दुन्नि सया ॥१॥' चतुर्थो दंडकः। ततश्च सर्वानुष्ठानफलभूतेभ्यः सिद्धेभ्यो नमस्करणायेदं पठति–"सिद्धाणं बुद्धाण"मित्यादि, सिद्धेभ्यः क्षीणा-शेषकर्मभ्यः परिनिष्ठितार्थेभ्यः, ते च सामान्यतः 'कम्मे सिप्पे य विज्जा ये'त्याद्यनेकविधाः स्युरत आह–बुद्धेभ्यो–ज्ञाततत्त्वेभ्यः, 'पारगतेभ्यः' पारं–पर्यंतं संसारस्य प्रयोजनव्रातस्य वा गताः पारगतास्तेभ्यः, 'परंपरगतेभ्यः' परंपरया–चतुर्दशगुणस्थानक्रमारो-

हरूपया यद्वा कथंचित्कर्म्मक्षयोपशमादेः सम्यग्दर्शनं ततो ज्ञानं ततश्चारित्रमित्येवंभूतया गतास्तेभ्यः, 'लोकाग्रमुपगतेभ्यः' सिद्धिक्षेत्रसंप्राप्तेभ्यः, नमः सदा सर्वसिद्धेभ्यः-तीर्थसिद्धादिपंचदशविधेभ्यः, ते चामी-जिण १ अजिण २ तित्थ ३ ऽतित्था ४ गिहि ५ अन्न ६ सलिंग ७ थी ८ नर ९ नपुंसा १० । पत्तेय ११ सयंबुद्धा १२ बुद्धबोहि १३ क १४ णिका य १५ ॥ १ ॥ बुद्धा-आचार्यास्तैर्बोधिताः संतो ये सिद्धास्ते बुद्धबोधितसिद्धाः,शेपं व्यक्तं १, सिद्धस्तुतिरष्टमोऽधिकारः । अथासन्नोपकारित्वाद्वर्त्तमानतीर्थाधिपतेः श्रीवीरस्वामिनः स्तुतिं पठति-"जो देवाणवी"त्यादि, यो देवानामपि भुवनपत्यादीनां पूज्यत्वाद्देवः, यं देवाः प्रांजलयो-विनयरचितकरसंपुटा नमस्यंति तं भगवंतं देवदेवैः-शक्रादिभिर्महितं-पूजितं शिरसा वंदे महावीरं २ ॥ अथ नमस्कारफलप्रदर्शनपरमिदमाह-"इक्कोवि नमुक्कारो" इत्यादि, एकोऽपि नमस्कारः, आसतां बहवः, 'जिनवरवृषभाय' जिनाः-श्रुतावधिजिनादयस्तेषां वराः केवलिनस्तेषां वृषभः-तीर्थकरनामकर्म्मोदयादुत्तमो जिनवरवृषभस्तस्मै वर्द्धमानाय,किमित्याह-संसारसागरात्-तिर्यग्नरनारकामरभवानुभवलक्षणः संसारः स एव प्रभूतभवस्थित्यादिभिर्दुष्प्राप्यमाणपारत्वात् सागर इव तस्मात् तारयति-पारं नयति, कमित्याह-"नरं वा नारीं वा" नरग्रहणं पुरुषोत्तमधर्म्मप्रतिपादनार्थं, नारीग्रहणं तासामपि तद्भव एव मुक्तिगमनज्ञापनार्थं, न हि क्वापि स्त्रीषु विशेषेण मुक्तिगमनं प्रति प्रतिबंधः प्रतिपादितोऽस्ति, तत्कारणस्य रत्नत्रयस्य नरेषु नारीषु चाविशेषेण भणनात्, तत्पालनस्य च उभयत्रापि प्रत्यक्षोपलभ्यमानत्वात्, अथैतासां सप्तमनरकगमनाभावेनोर्ध्वाधोगतिवैषम्यदर्शनात् कश्चिन्मुक्तिगमनं प्रति विप्रतिपद्यते,तदप्ययुक्तं,न हि यस्याधः स्तोका गतिस्तस्योर्ध्वमपि स्तोकैव,तथाहि-अधोगतौ भुजपरिसर्प्पा द्वितीयां नरकपृथिवीं, पक्षिणस्तृतीयां, सिंहास्तुर्यामुरगाः पंचमीमेव यावद्यांति, न परतः, परपृथ्वीगमनहेतुतथाविधमनोवीर्यविरहात्, अथ

च सर्वेऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद् यांति, तत्राधोगतिविषयमनोवीर्यपरिणतिवैषम्यदर्शनादूर्ध्वगतावपि तद्वैषम्यं, तथा च सति सिद्धं स्त्रीपुंसानामधोगतिवैषम्येऽपि निर्वाणं समानमिति। एष नवमोऽधिकारः॥ एतास्तिस्रः स्तुतयो गणधरकृतत्वान्नियमेनोच्यंते, संप्रदायाच्चान्ये अपि, यदाह आवश्यकचूर्णिकृत्–'सेसा जहिच्छाए'त्ति, "उज्जितसेलसिहरे दिक्खा नाणं निसीहिया जस्स। तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥४॥ कंठ्या, नवरं निसीहियत्ति मोक्षः, दशमोऽधिकारः॥

अत्र किंचित् संप्रदायागतमुच्यते–पुरा यदेदं श्रीमदुज्जयंततीर्थं बोटिकैः श्रीश्रमणसंघपार्श्वाद् बलादुद्दालयितुमारब्धं तदा संघस्य कायोत्सर्गानुभावेनाकंपिता शासनदेवता नृपपर्षदि दूरादानीतकन्यामुखेन उज्जितसेलसिहरेत्यादिगाथां चैत्यवंदनान्तर्गतां कृत्वा समार्प्पयत्, तत्प्रभृत्येव सकलसंघेन पठ्यमानेयमागमदिति॥ तथा–"चत्तारि अट्ठ दस दो य वंदिया जिणवरा चउवीसं। परमट्ठनिट्ठियट्ठा सिद्धा सिद्धिं मम दिसंतु॥५॥ 'परमट्ठनिट्ठियट्ठ'त्ति परमार्थेन, न कल्पनामात्रेण, निष्ठिता अर्था येषां ते तथा, शेषं व्यक्तं, एष एकादशोऽधिकारः।

अत्रापि संप्रदायः–चंपायां प्रस्थितं वीरं, नत्वाऽऽपृच्छय सगौतमौ। साधू शालमहाशालौ, पृष्ठचंपां समीयतुः॥ १॥ स्वस्त्रीयो राट् तयोस्तत्र, गांगलिः पितृभ्यां सह। यशोमतीपिठरकाभिधाभ्यां प्राव्रजन् मुदा॥२॥ आगच्छतां ततः शालादीनां प्रभुपदान्तिके। केवलज्ञानमुत्पेदे, पंचानामपि वर्त्मनि॥३॥ गौतमोऽपि जिनोपांते, ययौ यावद्विवंदिषुः। प्रचेलुस्तेऽथ शालाद्यास्तावत्केवलिपर्षदि॥४॥ ततस्तान् गौतमोऽवादीद् वंदध्वं किं न भो विभुम्?। स्वाम्यूचे केवलज्ञानभाजो माऽऽशातयैतकान्॥५॥ श्रुत्वेति गौतमेनैते, क्षमयांचक्रिरे ततः। शुश्रुवे प्राग्जनाख्यातमर्थमेवं जनो ब्रुवन्॥६॥ यो भूमिगोचरो देवान्, वंदतेऽष्टापदे

पुनः। केवलज्ञानमागाच, स सेत्स्यत्यत्र जन्मनि ॥७॥ चक्रे मनोरथं यावद्, गौतमस्तावदर्हता। आदिष्टोऽष्टापदे देवान्, नंतुं लब्धिनिधे! व्रज ॥८॥ सोऽचालीदथ तत्रान्ये, श्रुत्वैतज्जनवार्त्तया। मुक्तीच्छवोऽचलंस्तत्र, कौंडिन्याद्यास्तपस्विनः ॥९॥ तत्र पंचशतीयुक्तः, कौंडिन्याख्यश्चतुर्थकृत्। आर्द्रमूलफलाहारी, प्रथमां मेखलां ययौ ॥१०॥ दिन्नः कुलपतिः षष्ठभोजी पंचशतीयुतः। शुष्कमूलफलाहारी, द्वितीयामारुरोह सः ॥११॥ सेवाली त्वष्टमासेवी, शुष्कसेवालभोजकः। सोऽपि तावत्परीवारोऽप्यारुरोह तृतीयकाम् ॥१२॥ तदूर्ध्वमक्षमा गंतुं, ते निरीक्ष्याथ गौतमम्। दध्युः स्थूलधियः स्थूलः, कथमेषोऽधिरोक्ष्यति ? ॥१३॥ सूर्यरश्मीन् समाश्रित्य, तेषामुत्पश्यतामपि। स गरुत्मानिवोड्डीय, ययौ मंक्षु गिरेः शिरः ॥१४॥ गौतमस्येति शक्त्या ते, विस्मिता इत्यचिंतयन्। अस्य शिष्या भविष्यामः, प्रत्यायातो महात्मनः ॥१५॥ गौतमोऽथ चतुर्द्वारे, चैत्ये दक्षिणदिक्स्थितान्। संभवादीन् जिनांस्तत्र, चतुरश्चतुरोऽनमत् ॥१६॥ प्रत्यगाशास्थितानष्टौ, सुपार्श्वादीन् जिनांस्ततः। ततोऽप्युत्तरदिक्संस्थान्, धर्म्मादींश्च तथाऽर्हतः ॥१७॥ ततःपूर्वदिगासीनं, नाभेयमजितं तथा। मानवर्णयुतानेवं,चतुर्विंशतिमर्हतः ॥१८॥ ववंदे विधिवद् वृंदारकवृंदाभिवंदितान्। इंद्रभूतिर्दिनं सर्वं, ततः सायं विनिर्ययौ ॥१९॥ सोऽथ पृथ्वीशिलापट्टे, निषसाद विशारदः। कुबेरोऽथ तदाऽऽगत्य, तं वंदित्वा निषेदिवान् ॥२०॥ तस्याग्रे गौतमोऽप्युग्राननगारगुणान् जगौ। शंकहृत्पुंडरीकाख्यं, तथाऽध्ययनमुत्तमम् ॥२१॥ तत् तत्सामानिको दध्रे, सहस्रार्धमितं सुरः। सम्यक्त्वं च क्रमात् सोऽभूद्वज्रोऽन्त्यो दशपूर्व्विणाम् ॥२२॥ द्वितीयेऽह्नि जिनान्नत्वाऽवतरन्नथ गौतमः। विज्ञप्तस्तापसैर्भक्त्या, देहि दीक्षां मुनीश्वर! ॥२३॥ दीक्षितास्तेन ते तस्मादुत्तेरुः पर्वतादथ। केवलज्ञानमापुश्च, तद्दिने शुभभावतः ॥२४॥ गौतमस्तु जिने वीरे, निर्वृत्ते प्राप केवलम्। तदेवं गौतमेनेत्थं, चतुराद्या जिना नताः ॥२५॥–संपय

पयमाणा इह वीसं स छहत्तरं च वन्नसयं। पणिवायदंडगाईसु पंचमो दंडओ य इमो ॥१॥ एवमेतत्पठित्वोपचितपुण्यसंभार उचिते-प्वौचित्यप्रवृत्तिरिति ज्ञापनार्थमाह–'वेयावच्चगराण'मित्यादि, वैयावृत्यकराणां–प्रवचनार्थं व्यापृतभावानां गोमुखयक्षादीनां शांतिकराणां सर्वलोकस्य सम्यग्दृष्टिविषये समाधिकराणां, एषां संवन्धिनं षष्ठ्याः सप्तम्यर्थत्वाद् एतद्विषयं वा आश्रित्य करोति कायोत्सर्गं, अत्र वंदनादिप्रत्ययं न पठ्यते, तेषामविरतत्वात्, अन्यत्रोच्छ्वसितेनेत्यादि पूर्ववत्। तत एषां स्तुतिं भणित्वा प्राग्वच्छक्रस्तव च ततः सर्वचैत्यसाधुवंदनं कृत्वा स्तोत्रं च यथोचितमुद्दामगंभीरस्वरेण पठित्वा मुक्ताशुक्तिमुद्रया प्रणिधानं करोति–'जय वीयराये'त्यादि, जय वीतराग ! जगद्गुरो !, एतच्च भगवतो विश्वनाथस्य बुद्ध्या संनिधापनार्थमामंत्रणं, भवतु मम तव प्रभावतः भगवन्निति पुनः संवोधनं भक्त्यतिशयख्यापनार्थं, किमित्याह–भवनिर्वेदः–संसारविरागः मार्गानुसारिता–असद्ग्रहत्यागेन तत्त्वप्रतिपत्तिः, इष्टफलसिद्धिः–ऐहिकार्थनिष्पत्तिः, ययोपगृहीतस्य चित्तस्वास्थ्यं भवति, लोकविरुद्धत्यागः–सर्वजननिंदादिवर्जनं, यदाह–सव्वस्स चेव निंदा विसेसओ तहय गुणसमिद्धाणं। उजुधम्मकरणहसणं राढा जणपूयणिज्जाणं ॥१॥ बहुजणविरुद्धसंगो देसादाचारलंघणं चेव। उव्वणभोगो य तहा दाणाइवि पयडमन्ने उ ॥२॥ साहुवसणंमि तोसो सइ सामत्थंमि अपडियारो उ। एमाइयाइ इत्थं लोगविरुद्धाइं नेयाइं ॥३॥ तथा–गुरुजनपूजा–मातापित्रादीनां भक्तिः परार्थकरणं च–परहितार्थकरणं, जीवलोकसारं पौरुषचिह्नमेतत्, शुभगुरुयोगो–विशिष्टचारित्रयुक्ताचार्यसंबंधः तद्वचनसेवा–सद्गुरूपदेशविधानं, न जातुचिदयमहितमुपदिशति आभवं–आसंसारं अखंडा–संपूर्णा। इदं च प्रणिधानं न निदानरूपं, प्रायो निःसंगाभिलाषरूपत्वादिति, चैत्यवंदनाद्वारमुपसंहरन् षष्ठं प्रत्याख्यानद्वारं विवृण्वन्नाह—

वंदित्ता थुइथुत्तेहिं, गिहचिंवाणि सावओ। पच्चक्खाणं तओ गिण्हे, अप्पणा देवसक्खियं ॥३६॥ दारं।

वंदित्वा स्तुतिस्तोत्रैर्गृहबिंवानि श्रावकः प्रत्याख्यानं ततो गृह्णीयादात्मना देवसाक्षिकमिति ॥३६॥ प्रमाचितः श्रीश्रुतदेवतायाः, प्रत्यूपकृत्यानुगतो विशिष्टः। उपासकानां दिनकृत्यवृत्तौ, प्रस्ताव एष प्रथमोऽनुशिष्टः ॥१॥ इतिश्री श्रावकादिनकृत्यवृत्तौ नमस्कारेण विवोध इत्यादिद्वारषट्कवर्णनः प्रथमः प्रस्तावः ग्रंथाग्रं ॥ १४१५ अक्षर २७॥

नमो जैनागमाय, सांप्रतं सप्तमं चैत्यगृहगमनद्वारं, तत्र तावत्तद्विधिं सूत्रद्वयेनाह—

तओ हयगयाईहिं, जाणेहि य रहेहि य। बंधुमित्तपरिक्खित्तो, घित्तुं पूयं स उत्तमं ॥३७॥

अन्नेसिं भव्वसत्ताणं, दायंतो मग्गमुत्तमं। वच्चए जिणगेहंमि, पभाविंतो य सासणं ॥३८॥

ततो गृहचैत्यार्चानंतरमश्वहस्त्याद्यैरादिशब्दात् पत्तिभिः यानैश्च—शिबिकाद्यैः रथैश्च रथाद्यैः संयुक्त इति शेषः, बंधुमित्रपरिक्षिप्तः—स्वजनसुहृत्परिवृतो गृहीत्वा पूजां—पूजाहेतुपुष्पादिद्रव्यं स ऋद्धिमान् श्राद्ध उत्तमां—वरां ॥३७॥ अन्येषां भव्यसत्त्वानां दर्शयन् मार्गं—मोक्षपथमुत्तमं ईदृक्पूजाकारणोद्यमदर्शनात्, यथा—कार्ये शुभेऽशुभे वाऽपि, प्रवृत्तिर्यैः कृताऽऽदितः। ज्ञेयास्ते तस्य कर्त्तारः, पश्चादप्युपचारतः ॥१॥ इति, व्रजति जिनगृहे प्रभावयंश्च शासनमिति सूत्रद्वयार्थः॥ प्रभावनामेव सूत्रषट्केन भावयति—

अहो धन्नो हु एसो उ, अहो एयस्स जीवियं। अहो माणुस्सयं जम्मं, एयस्स य सुलद्धयं ॥३९॥

अहो भत्ती अहो रागो, अहो एअस्स आयरो। तिलोगनाहपूयाए, पुण्णवंतस्स पइदिणं ॥४०॥

धन्ना एयस्स रिद्धीओ, धन्नो चाऽयं परिस्समो। धन्नो परियणो सयलो, जो एयमणुवत्तइ ॥४१॥

अहो एयस्स इत्थेव, जंमे चेव पसन्नओ । भयवं अरिहंतुत्ति, सव्वसुक्खाण दायगो ॥४२॥
अन्नहा एरिसी रिद्धी, कहमेयस्स उत्तमा ?। रयणायरसंवाए, हवंति रयणवंतया ॥४३॥
एएण पुण्णवंतेण, अण्णजम्मंमि वाविओ। पुण्णरुक्खो महाकाओ, सो इण्हिं फलिओ इमो ॥४४॥

अहो इति प्रशंसागर्भविस्मयद्योतको निपातः धन्यः—पुण्यात्मा हु निश्चये एष एव, अहो एतस्यैव धर्म्मकीर्त्योर्भाजनत्वेन जीवितं, गण्यमिति शेषः, अहो मानुष्यकं च जन्मैतस्यैव सुलब्धकं, स्वपरोपकारकर्तृत्वाद्, उक्तं च—"दानं वित्ताद्दतं वाचः, कीर्त्तिर्धर्म्मौ तथाऽऽयुषः । परोपकरणं कायादसारात् सारमुद्धरे ॥१॥"दिति ॥३९॥ अहो भक्तिः—शिरोनामनादिका बाह्या प्रतिपत्तिः, अहो रागो—रोमोद्गमादिगम्याऽऽन्तरा प्रीतिः, अहो एतस्यादरो—देहशुद्ध्यादितत्परता त्रैलोक्यनाथपूजायां पुण्यवतः प्रतिदिनमिति ॥४०॥ धन्या एतस्य ऋद्धयो दानभोगोपयोगित्वात्, यदुक्तं—"दानं भोगो नाशस्तिस्रो गतयो भवंति वित्तस्य । यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥१॥"इति, धन्यो वाऽयं परिश्रमः, वा अप्यर्थे, अयं प्रत्यक्षोपलक्ष्यमानः प्रत्यहं चैत्यवंदनादिप्रयासोऽपि प्रेत्यसुखहेतुत्वाद्धन्यः—श्लाघ्यतमः, यतः—इहलोइयंमि कज्जे सव्वारंभेण जह जणो (जयइ)। तह जइ लक्खसेणवि परलोए ता सुही होज्ज ॥१॥"त्ति,धन्यश्च परिजनः सर्वो,धन्यो य एनमनुवर्त्तते—सेवते,यतः—शिष्टजनसंसर्गोऽपि श्रेयस्कृत् ,तथा चार्षे—"सुंदरजणसंसग्गी सीलदरिद्दंपि कुणइ सीलड्ढं । जह मेरुगिरिविलग्गं तणंपि कणगत्तणमुवेइ ॥१॥"त्ति ॥४१॥ अहो एतस्यात्रापि जन्मनि चैव एवोऽप्यर्थे, चैवौ पूरणे, प्रसन्नको भगवानर्हन्नित्येवं सर्वसौख्यानां—नरस्वर्गापवर्गशर्मणां दायक इति ॥४२॥ अन्यथेति अर्हत्—प्रसत्तिं विना ईदृग् ऋद्धिः कथमेतस्योत्तमा—त्यागादिगुणयुक्तत्वेन पुण्यानुबंधिपुण्यहेतुत्वात् प्रधाना, संपन्नेति शेषः । मुख्यमर्थ-

मन्वयेन रागर्वयमाह—रत्नाकरसेवया भवंति रत्नवंत इति ॥४३॥ एतेन पुण्यवतोऽन्यजन्मन्युप्तः पुण्यवृक्षो महाकायः स इदानीं फलितोऽयमिति प्रत्यक्षोपलभ्यमानः सुखसंपत्तिफलभारेणेति सूत्रपञ्चार्थः ॥ प्रभावनाफलमाह—

एवं पसंसं पकुणंतयाणं, अणेगसत्ताण दुहाहयाणं ।
सम्मत्तरुक्खस्स महाफलस्स, तेसिं तु सो चेव य कारणं तु ॥४५॥

एवं—उक्तप्रकारेण तेषां प्रशंसतामनेकसत्त्वानां दुःखाहतानां—दौर्गत्याद्यसातसंतप्तानां सम्यक्त्ववृक्षस्य महत्—सर्वातिशायि मोक्षाख्यं फलं यस्यासौ महाफलः, यदुक्तं—"तेलुक्कस्स पहुत्तं लद्धूणवि परिवडंति कालेणं। सम्मत्तं पुण लद्धं अक्खय सोक्खं लहइ मोक्खं ॥१॥"ति तस्य, लाभे इति शेषः, तेषां तु प्रशंसाकारिणां स एव—प्रभावक एव श्रावकः कारणं—निमित्तं, चतुशब्दाः पूरणे इति। एतदेव सदृष्टान्तमाह—

जत्तिय गुणपडिवत्ती सव्वन्नुमयंमि अविचला होइ। सच्चिय बीयं जायइ बोहीए तेणनाएण ॥४६॥

यावती—यावन्मात्रा गुणाः—क्षांत्यादयस्तेषां प्रतिपत्तिः—अनुमत्यादिना स्वीकृतिः सर्वज्ञमते अविचला भवति सैव बीजं जायते बोधेः—जिनधर्म्मप्राप्तेः स्तेनज्ञातेनेति ॥ तद्दृष्टान्तश्चायं—

अनेकविबुधाकीर्णा, सुपर्व्वाचार्यसंयुता। पुरंदरपुरीतुल्या, कौशाम्बीत्यास्ति पूर्व्वरा ॥१॥ जितांतरारिषड्वर्गो, जितारिस्तत्र राडभूत्। यत्प्रतापानले पेतुः, स्वयं द्विपत्पतंगकाः ॥२॥ श्रेष्ठिनौ धनयक्षाख्यौ, तत्राभूतां महाधनौ। धनस्य धर्म्मपालस्तु, वस्तुपालोऽपरस्य च ॥३॥ जन्मांतरीयसंस्कारादनयोर्जन्मतोऽप्यभूत्। मैत्री प्रीतेः परं पात्रं, लोकाश्चर्यविधायिनी ॥ ४ ॥ एकस्मै रोचते यत्तद्,द्वितीयायापि रोचते। ततो लोकैरगीयेतामेकचित्ताविमाविति ॥५॥ अन्यदा समवासार्षीदुद्यानेऽत्र मनोरमे। भगवान्

श्रीमहावीरस्तं प्रणंतुं ययुर्जनाः ॥६॥ जनेन सहितौ श्रेष्ठिसुतौ तौ कौतुकोद्यतौ । तत्रायातौ प्रभोः पार्श्वेऽशृणुतां देशनामिति ॥७॥
नरत्वं प्राप्य दुष्प्रापं, धर्म्मः कार्यः स चेदृशः । यदात्मनोऽनभीष्टं तत्, कर्त्तव्यं न परेष्वपि ॥८॥ वणिक्सूनुस्तयोरेकः, शृण्वानः
स्वामिदेशनाम् । पूर्यते साधिकं धन्यः, श्रद्धानेन पदे पदे ॥९॥ उत्फुल्लाक्षिः शिरो धुन्वन्, श्रोत्रपत्रपुटार्प्पितम् । रोमांचितवपुर्जैनं,
पपौ पीयूषवद् वचः ॥१०॥ संमूर्च्छनजवच्छून्यो, द्वितीयोऽस्थादनादृतः । सुदक्षत्वाच्च तौ चित्तं, लक्षयामासतुर्मिथः ॥११॥ देशनांते
समुत्थाय, जग्मतुस्तौ निजौकसि । श्रद्धालुर्धर्म्मपालोऽथ, वस्तुपालमदोऽवदत् ॥१२॥ वयस्यावगतं किंचित्त्वया चित्ते जिनोदितम् ?।
स ऊचे न मया किंचित्, ज्ञातं नैव च भावितः ॥१३॥ धर्म्मपालोऽवदत् सर्वं, ज्ञातवान् भावितोऽप्यहम् । बधिरांध इव त्वं तु,
तदत्र किमु कारणम् ?॥१४॥ वस्तुपालोऽभ्यधाद्धेतुं, न जाने चेतरोऽवदत् । एकचित्ततयाऽऽख्यातौ, सर्वत्रावामियच्चिरम् ॥ १५ ॥
पश्येदानीं पुनर्जज्ञे, पृथक् चित्तं ततोऽत्र नौ । कोऽपि पारत्रिको हेतुः, प्रक्ष्यावस्तज्जिनेश्वरम् ॥१६॥ धर्म्मपालो द्वितीयेऽह्नि, गत्वा
तेन समन्वितः । नत्वा वीरमपृच्छत्तं, संदेहं स्वाम्यथोऽभ्यधात् ॥१७॥ शालिग्रामे पुराऽभूतां, द्रंगिकस्य कुटुम्बिनः । पुत्रौ पवि-
त्रतारुण्यरूपसंपत्समन्वितौ ॥१८॥ निर्द्धनत्वादसंप्राप्तभोगांगौ भोगकाम्यया । धनायंतौ ततः स्तैन्यं, प्रारेभेते सुदुर्मती ॥ १९ ॥
निश्येकस्मादथ ग्रामात्, कृष्ट्वा गा इयृतो द्रुतम् । पश्चादापतितैर्दंडपाशिकैस्त्रासितौ भृशम् ॥२०॥ नश्यंतौ तौ महारण्ये, मुनिमातापना-
परम् । अपश्यतां ततश्चैकश्चिंतयामास चेतसि ॥२१॥ अहो महानुभावोऽयं, मुनिर्मुनिमचर्चिका । निस्संगो निर्भयः शांतो, मूर्त्तो
धर्म्म इवांगवान् ॥२२॥ आवां पुनरधन्यानामधन्यौ धनगृद्धितौ । विदधानौ विरुद्धानि, पराभवपदं गतौ ॥२३॥ धिक्कारोपहता-
त्मानौ, यास्यावः कां गतिं मृतौ ?। ही जातौ दुःखभावेन, लोकद्वयविराधकौ ॥२४॥ द्वितीयो गुरुकर्म्मत्वात्, तं मुनिं प्रत्युदासितः।

गुणिरागाद्वयागो, बोधिबीजं न चापरः । २५॥ वञ्ग्रा तनुकषायत्वान्, मर्त्यायुर्मृत्युमाप्य च । तयोः सद्यस्त्वमुत्पन्नो, द्वितीयोऽयं च ते सुहृत् ॥२६॥ धर्म्मपाल! त्वया यत्तु, प्राग्जन्मनि गुणिर्मुदा । अन्वमोद्यत तस्माच्च, गुणिरागाद्गरीयसः ॥२७॥ उपार्जि बोधिबीजं यत्तत्फलेनाधुना भवान् । बोधिरत्नं क्षणात् प्राप, स्वर्गमोक्षसुखप्रदम् ॥२८॥ वस्तुपालस्य यज्जीव, उदास्त स मुनौ ततः । नाप धर्ममबीजोऽसौ, जन्यजन्मुद्रनापने ॥२९॥ अर्हदुक्तमिति श्रुत्वा, धर्म्मपालस्य धीमतः । मोक्षलक्ष्मीसखीव द्राग्, जातिस्मृतिरजायत ॥३०॥ संजातप्रत्ययः सोऽथ, भववैराग्यवान् सुधीः । प्रपेदे शासनं जैनं, भावतः पापनाशनम् ॥३१॥ धर्म्मपालस्ततो धर्म्मं, सम्यगासेव्य शुद्धधीः । स्वर्मनुष्यश्रियं प्राप्य, मोक्षसौख्यमवाप्स्यति ॥३२॥ निर्बीजत्वात् द्वितीयस्तु, तदा न प्रतिबुद्धवान् । मोहोपहतचित्तात्मा, भवमेव भ्रमिष्यति ॥३३॥ इत्यवेत्य गुणरागसंभवं, बोधिबीजमसमानवैभवम् । स्तूयतां किमिव न प्रभावनां, स्वान्ययोरपि हि या प्रभावना ॥३४॥ इति स्तेनकथा ॥ सांप्रतं दृष्टान्तद्वारेण प्रभावनायाः सर्वोत्तमं फलमाह—

अलद्धपुव्वं तु भवोदहिंमि, लहंति तित्थस्स पभावणाए। तित्थेसरत्तं अमरिंदपुज्जं, दसारसीहो इव सेणिओ वा ॥

अलब्धपूर्वमेव भवोदधौ लभंते, जीवा इति शेषः, तीर्थस्य प्रभावनया तीर्थेश्वरत्वममरेंद्रपूज्यं, तथा चार्षं—"अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थेर ५ बहुस्सुए ६ तवस्सीसु ७ । वच्छल्लयाइ एसिं अभिक्खनाणोवओगे य ८ ॥ १ ॥ दंसण ९ विणए १० आवस्सए य ११ सीलव्वए निरइयारो १२ । खणलव १३ तव १४ च्चियाए १५ वेयावच्चे १६ समाही य १७ ॥२॥ अप्पुव्वनाणगहणे १८ सुयभत्ती १९ पवयणे पभावणया २० । एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥३॥" त्ति । कविवेति ?—दशार्हाः—समस्तयदुवंशपूज्याः समुद्रविजयाद्या दश भ्रातरस्तत्कुले शौर्याद्यतिशयेन सिंह इव दशार्हसिंहः—कृष्णः स इव, श्रेणिकश्चेत्यक्षरार्थः ॥४७॥

भावार्थस्तु ज्ञाताभ्यामवसेयः, तत्रेदं कृष्णज्ञातं—

कण्हस्स य दिट्ठंतं बलदेवो तहय नेमिनाहो य। उवउज्जेति तओ सिं चरियं संखेवओ वोच्छं ॥१॥ अत्थित्थ पुरी महुरा वरकमला सह नइइ जमुणाए। हरिवंसे जदुपुत्तो सूरो नामेण तत्थ निवो ॥२॥ जिट्ठसुयं सोरिं सो ठविऊण कणिट्ठयं सुवीरं च। रज्जे जुवरज्जंमि य संविग्गो गिण्हए दिक्खं ॥३॥ सोरी महुरारज्जं कयाइ दाउं सुवीरकुमरस्स। देसे कुसट्टनामे सयं तु सोरियपुरं उवए ॥४॥ अंधगवण्हिप्पमुहा जाया सोरिस्स तत्थ बहुपुत्ता। तह भोयवण्हिमाई सुवीरनिवइस्सवि अणेगे ॥५॥ अह भोयवण्हि-कुमरं रज्जे ठविउं निवो सुवीरोवि। सिंधूसु सोवीरपुरं ठविउं पालइ तहिं रज्जं ॥६॥ सोरियपुररज्जंमी अंधगवण्हिं ठवित्तु सूरनिवो। सुपइट्ठमुणिसमीवे पव्वइऊणं सिवं पत्तो ॥७॥ महुराए पुण रज्जं अणुसासंतस्स भोयवण्हिस्स। जाओ य उग्गसेणो उदग्गभुय-विक्कमो पुत्तो ॥८॥ अंधगवण्हिस्स सुआ सुभद्दपत्तीइ दस दसार पुणो। पढमो समुद्दविजओ अक्खोभो तह थिमियकुमरो ॥९॥ तह सागरो य हिमवं अयलो धरणो य पूरणकुमारो। अभिचंदो वसुदेवो कुंती मद्दी य दो धूया ॥१०॥ कुंती पंडुनिवेणं दमघो-सेणं तु मद्दिया ऊढा। सुपइट्ठमुणी नाणी अह अंधगवण्हिणा पुट्ठो ॥११॥ कास इमो वसुदेवो सोहग्गनिही? तओ मुणी कहई। मगहासु नंदिगामे रोरदिओ सोमिला विप्पी ॥१२॥ ताण सुओ उ विरूवो उवरयपियरो य नंदिसेणोत्ति। मातुलगेहे कम्मं करेइ तप्पुत्तिलोभेणं ॥१३॥ सत्तहिवि तस्सुयाहिं स निच्छिओ तो गओ स रयणपुरं। अह कीलंतं मिहुणं दट्ठुं मरणुज्जुओ संतो ॥१४॥ सुट्ठियमुणिणा दिट्ठो नाणाइसएण मुणिय तब्भावं। मा वच्छ! मरसु दुक्खित्ति दुक्खहरणं कुणसु धम्मं ॥१५॥ इय सोउं पव्वइओ वेयावच्चे अभिग्गहो गहिओ। अह सक्केणं एसो पसंसिओ अविचलपइन्नो ॥१६॥ एयं असद्दहंतो एगो देवो गिलाणमुणिरूवो। रन्नंमि

ठिओ वीएण साहुरूवेण वसहिं गओ ॥१७॥ भणइ य नियमं घेत्तुं कह भुंजसि नंदिसेण ! जं भणिहिं । अत्थि मुणी अइसारी अह एसो पाणगट्ठाए । १८॥ हिंडइ सयलंपि पुरं अणेसणीयं करेइ देवोऽवि । किच्छेण तं गहेउं पत्तो य गिलाणपासंमि ॥१९॥ भणिओ य कवडमुणिणा धिद्धी तेऽभिग्गहो जमहमेवं । रोगत्तो तं भुंजसि तो खामइ नंदिसेणो तं ॥२०॥ पायित्तु पाणियं उट्ठसुत्ति भणियंमि भणइ सो साहू । घिम्मुंड ! किं न पेच्छसि पयंपि गंतुं अहमसत्तो ? ॥२१॥ खंधंमि चडावेउं तं चलिओ नंदिसेणसाहूवि । अक्कोसइ वोसिरइ य पुरीसमेसो अइदुगंधं ॥२२॥ चिंतइ य नंदिसेणो कहमेसो होहिई अणवगल्लो ? । तो मायं संहरिउं नमिउं खामेइ तं देवो ॥२३॥ साहिय सक्कपसंसं गओ स सग्गं मुणीवि वसहीए । पुट्ठो य गुरूहिं तयं जहट्ठियं कहइ मयमुक्को ॥२४॥ बारस वाससहस्से तविय तवं दुक्करं कयाणसणो । कयसोहग्गनियाणो मरिउं सुक्के सुरो जाओ ॥२५॥ सो चविउं तुम्ह सुओ सोहग्गनिही इमो समुप्पन्नो । अह राया नियरज्जे समुद्दविजयं ठविय पुत्तं ॥२६॥ सुपयट्ठंते पव्वइय निव्वुओ उग्गसेणमह कुमरं । महुरारज्जे ठविउं पव्वइओ भोयवण्हीवि ॥२७॥ अह उग्गसेणरन्ना निमंतिओ मासपारणे एगो । बालतवस्सी सो पुण गिहागओ तेण नहु नाओ ॥२८॥ तिसु पारणेसु एवं मरिउं सो तव्वहे कयनियाणो । देवीइ उग्गसेणस्स धारणीए गओ गब्भे ॥२९॥ निवमंसे डोहलओ जाओ देवीइ सो उ मंतीहिं । बुद्धीहिं पूरिओ अह जाओ पुत्तो य तो छन्नं ॥३०॥ पित्तियमुद्दाजुत्तो खित्तो देवीइ कंसपेडाए । जउणाइ वाहिओ सो गोसे सोरियपुरं पत्तो ॥३१॥ तं दट्ठूण सुभद्दो रसवाणियओ गिहंमि नेऊणं । अप्पेइ नियपियाए नामं च करेइ कंसोत्ति ॥३२॥ संवड्ढिओ य संतो कलहणसीलोत्ति अप्पिओ पिउणा । वसुदेवकुमारस्स उ अहिज्जिओ तेण सममेसो ॥३३॥ ते दोवि अभिरमंता एगत्थुज्जाणकाणणाईसु । सोहंति सोमभोमव्व एगरासिंमि वियरंता ॥३४॥ अह रायगिहे राया पडिविण्हू

अभिग्रहः कंसजन्म च

नामओ जरासंधो। दूयमुहेणाइसइ समुद्दविजयं निवं एवं ॥३५॥ वेयड्ढगिरिसमीवे सिंहपुरे सिंहरायनिव जुद्धे। बंधित्ता मम अप्पसु जीवजसं तुह सुयं दाहं ॥३६॥ वरपट्टणं च एकं तो वसुदेवो समुद्दविजयनिवं। निब्बंधेणऽब्भत्थिय बहुसेन्नो तस्सुवरि चलिओ ॥३७। इयरोऽवि तस्स समुहो मिलियाइं कमेण दोऽवि सेन्नाइं। सिंहरहेणं सद्धिं जुज्झइ वसुदेवकुमरोऽवि ॥३८॥ कंसेणं सारहिणा छलण्णुणा बंधिऊण सो गहिओ। तो वसुदेवकुमारो सोरियपुरमागओ सिग्घं ॥३९॥ वसुदेवं पच्छन्नं समुद्दविजओ भणेइ जीवजसा। कुट्ठगिनिमित्तिणा मे पइपिइकुलखयकरी कहिया ॥४०॥ कंसो य विक्कमेणं लक्खिज्जइ खत्तिओ ततो रन्ना। पुट्ठो रसवाणियओ दंसइ पिउमाइमुद्दं से ॥४१॥ पत्तयलिहियं दट्ठुं नाओ जह एस उग्गसेणसुओ। धारणिदेवीजाओ महाभुओ जायवोत्ति इमो ॥४२॥ राया समुद्दविजओ कंसजुओ अद्धचक्किणो पासे। अप्पइ सिंहरहनिवं कंसस्स य विक्कमं कहइ ॥४३॥ कंसस्स उ जीवजसा दिन्ना महुरा य मग्गिया तेणं। तो सो महुरं गंतुं निक्खिवई पंजरे पियरं ॥४४॥ अह उग्गसेणपुत्तो तइया अइमुत्तओ य पव्वइओ। राया समुद्दविजओ उ आगओ सोरियपुरंमि ॥४५॥ अह अन्नदिणे राया विन्नत्तो रहसि नागरजणेहिं। अणुधावंति महेला वसुदेवो हिंडए जत्थ ॥४६॥ तो रन्ना वसुदेवो अंकं आरोविऊण आइट्ठो। वासगओ तं चिट्ठसु सिक्खंतो वच्छ! सुकलाओ ॥४७॥ अन्नदिणे सिवदेवी दासीहत्था सुगंधिदव्वं तु। पेसइ रायनिमित्तं दट्ठुं तं हरइ वसुदेवो ॥४८॥ रुट्ठा दासी साहइ विन्नत्तं नागराण तो कुमरो। वेसं परिवत्तेउं पओससमयंमि पुरबाहिं ॥४९॥ किंची अणाहमडयं चियाइ खिविऊण जालए जलणं। गुरुजणखामणहेउं सविहे खंभे इमं लिहइ ॥५०॥ जं सज्झ गुणा दोसत्ति निवसिया गुरुमणे खमंतु तयं। वसुदेवो पुण कुमरो जलंतजलणे पविट्ठोत्ति ॥५१॥ पच्चूसे नाऊणं वसुदेवो एसउत्ति सयणेहिं। मयकिच्चाइं कयाइं इय नाउं भमइ निस्संको ॥५२॥

तिकं द्रुतम्। तं नत्वा गद्गदध्वानो, व्यजिज्ञपदिदं नृपः ॥२८॥ यथा दातुः प्रियालापः, स्यादन्यत्रापि विघ्नकृत्। तथा मे मंद-भाग्यस्य, बभूवेदं निमन्त्रणम् ॥२९॥ तथापि मम दीनस्य, क्षमस्वैतत् क्षमानिधे!। ममद्य चानुमन्यस्व, मद्गेहेऽदोऽपि पारणम् ॥३०॥ अनुनीतो नृपेणैवं, प्रपेदे श्येनकोऽपि तत्। ततो नत्वा गृहेऽगच्छन्मुदितो मेदिनीपतिः ॥३१॥ ययौ यावत् तपस्व्येष, संप्राप्ते पारणाहनि। नृपौकस्तावदास्थानमभूत्तस्य महत्तरम् ॥३२॥ तथैव विनिवृत्त्यासौ, पुनः प्राविशदुग्रिकाम्। तं चानुनेतुं तत्रागात्, स्वस्थीभूतः सुमंगलः ॥३३॥ मुंचन्नश्रांतमश्रूणि, नत्वोचे तमृषिं नृपः। भगवन्! भवतामेवं, धिग्मां दुष्कर्म्मकारिणम् ॥३४॥ सर्वसहावदाराध्याः, सदा सर्वसहा मयि। तत्प्रसद्यानुगृह्णंतु, पारणेनाधुनाऽपि माम् ॥३५॥ प्रपेदे नृपदाक्षिण्यात्, तृतीयमपि पारणम्। श्येनकर्षिस्ततो राजा, धन्यंमन्यो गृहं ययौ ॥३६॥ पूर्णेऽथ मासक्षपणे, यावत्तत्र ययावृषिः। बृहत्तरतमं तावद्, राज्ञोऽस्वास्थ्यमजायत ॥३७॥ राजलोकास्त्विदं दध्यावयमेति यदा यदा। तदा तदा महीभर्तुः, सहसा जायते रुजा ॥३८॥ इति तैः श्येनकः क्रुद्धैर्यष्टिलोष्टादिभिर्भृशम्। यथेष्टं कुट्टितो गेहे, प्रविष्ट इव तस्करः ॥३९॥ संचूर्णितसमस्तांगश्चिंतयामास चेतसि। नूनं सुमंगलो राजा, मत्सरी मयि सर्वदा ॥४०॥ भवांतरेऽस्य भूयासं, वधाय तपसाऽमुना। निदायेति विपद्याभूदल्पर्द्धिर्व्यंतरोऽथ सः ॥४१॥ गृहीत्वा तापसीं दीक्षां, सुमंगलनृपोऽपि हि। कालेन मृत्वा भूत्वा च, व्यंतरः स ततश्च्युतः ॥४२॥ तस्मिन् कुशाग्र-नगरे, प्रसेनजिदिलापतिः। धारिण्याख्यामहादेव्या, उदरे समवातरत् ॥४३॥ सा देवी समयेऽसूत, सुनुमन्यूनलक्षणम्। सर्वर्ध्या विदधे पित्रा, तस्य जन्मोत्सवो महान् ॥ ४४ ॥ विशिष्टमतिधृत्यादिगुणश्रेणिभृदित्ययम्। ततः श्रेणिक इत्याख्यां, पिता तस्य स्वयं व्यधात् ॥४५॥ श्रेणिको ववृधे रूपसौभाग्यादिभिरन्वहम्। कलाभिर्नव्यनव्याभिः, शुक्लपक्ष इवोडुपः ॥४६॥ शुशुभे श्रेणि-

कांगश्रीः, यौवनेन विशेषिता । यथा मधुश्रीर्मलयमारुतेन विशेषिता ॥ ४७ ॥–इतोऽत्राभूत् पुरे नागरथिको नागवल्लभः । पत्नी च सुलसा तस्य, धर्म्मकर्म्मसु लालसा ॥४८॥ तयोः सदैकमनसोर्दंपत्योः प्रीतिपात्रयोः । भूयान् कालः सुखेनागाद्यथा भारुंडपक्षिणोः॥४९॥ परं गाढमपुत्रत्वं, हृदि नागस्य शल्यवत् । बाधतेऽहर्निशं यद्वा, चक्षुषोः कर्करो यथा ॥५०॥ चिंताप्रपन्नमन्येद्युः सुलसोचे निजं पतिम् । युष्माकं बाधतेऽङ्गे किं, कश्चिच्छूलादिरामयः? ॥५१॥ अप्रसन्नो नृपः किं वा, नादृतं स्वजनेन वा । मित्रेण किमवज्ञातं, किंचित्परिजनेन वा ? ॥५२॥ सदाऽऽदेशविधायिन्या, मयाऽऽज्ञा काऽपि खंडिता । यद्येवं ताम्यसि स्वांते, स्वामिंस्तन्मां निवेदय ॥५३॥ रथिकस्त्वाह नैतेभ्यो, मामेकमपि बाधते । प्रियेऽनपत्यता यत्तन्मामतीव विबाधते ॥५४॥ सुलसोचे सुतार्थे त्वमन्यां कन्यां विवाहय । स्वाम्यूचे कृतमन्याभिः, कन्याभिरिह जन्मनि ॥५५॥ ततोऽधिकं तपोदानशीलार्चाभावनादिके । सुधर्मे सुलसा तस्थौ,स हि सर्वत्र कामधुक् ॥५६॥–इतश्च दिवि देवेन्द्रः,सदस्येवमवर्णयत् । श्राविका सुलसा धर्म्मे, निश्चला शैलराजवत् ॥५७॥ तद्वचोऽश्रद्दधानोऽत्रागत्यैकस्त्रिदशोऽविशत् । कृत्वा नैषेधिकीं साधुवेषेण सुलसागृहे ॥५८॥ तदा जिनार्चां कुर्व्वंती,सुलसा द्रागुपस्थिता । भक्त्या नत्वा च तं साधुं,पप्रच्छागमकारणम्॥५९॥ स प्राहात्र पुरे भद्रे !, मुनिर्ग्लानोऽस्ति तत्कृते । तैलाय लक्षपाकाय, श्राविकेऽहमिहागमम्॥६०॥ तुष्टाऽथ सुलसा तैलकुंभमादाय पाणिना । प्रतिलंभयितुं साधुं,यावदागाच्छनैः शनैः॥६१॥ तावत् सुपर्वणाऽचिंत्यशक्तिना स्फोटितः कुटः। तत्तैलमपि कुत्रापि, सर्वमप्यगमद् द्रुतम् ॥६२॥ इत्यस्फोटि द्वितीयोऽपि, तृतीयोऽपि घटः क्षणात् । द्रव्यहान्या गुर्वह्व्याऽपि, व्यषीदत् सुलसा न तु ॥६३॥ दध्यौ चेदं मुनौ ग्लाने,ययौ यन्नोपयोगिताम् । निर्दोषौषधमप्यत्र, ममेयं ही प्रमादिता॥६४॥ अथ संहृत्य तां मायां, प्रत्यक्षीभूय सोऽमरः। निवेद्येन्द्रकृतां श्लाघामूचे भद्रे ! वरं वृणु॥६५॥ जगाद

सुलसाऽप्येवं, पतितोपकृते मम। देहि पुत्रमपुत्रायास्ततोऽवादीदिद सुरः ॥६६॥ गृहाण गुटिका एतां, द्वात्रिंशतमपि क्रमात्। भक्षयेस्ते भविष्यंति, पुत्रा द्वात्रिंशदुत्तमाः ॥६७॥ ताः समर्प्य पुनः कार्ये, स्मर्त्तव्योऽहं त्वयाऽनघे! । इत्युक्त्वा स ययौ स्वर्गमुत्पत्य गगनाध्वना॥६८॥ सुलसाऽचिंतयच्चैवं, प्रत्यब्दं प्रसवव्यथाम्। समांसमीनाऽनड्वाहीवत् को ननु सहिष्यति? ॥६९॥ देवदत्तास्ततश्चैता, गुटिका एकवेलया। भक्षयामि ततोऽमूभिः, पुत्रो मे भवितोत्तमः ॥७०॥ तथैव सुलसा चक्रे, पुत्रा द्वात्रिंशदप्यथ। उत्पेदिरे तदुदरे, नान्यथा दिविषद्वरः॥७१॥ वर्धमानांश्च तान् गर्भान्, सा धर्तुमसहाऽभवत्। प्रभूतफलसंभारमिव वल्ली दिने दिने॥७२॥ ततः सस्मार तं देवं, सोऽप्यागत्याब्रवीदिदम्। किं स्मृतोऽहं त्वया भद्रे!, साऽथाचख्यौ निजां व्यथाम् ॥७३॥ बभाषेऽनिमिषोऽप्येवं, त्वया साधु कृतं नहि। द्वात्रिंशदपि ते पुत्रा, भविष्यंति समायुषः ॥७४॥ दैवानुभावतः पीडां, सोऽपहृत्य तिरोदधे। कालेन सुलसाऽसूत, सुतान् द्वात्रिंशतं वरान् ॥७५॥ धन्यंमन्योऽथ नागोऽपि, पुत्रजन्मोत्सवं व्यधात्। पुत्रान् प्रीत्या पृथग् धात्रीपंचकैः पर्यपालयत् ॥७६॥ अंकेऽथ हृदि पृष्ठे च, स्कंधयोस्तैः समाश्रितः। नागोऽभादर्भकारूढः, फलेग्रहितरुर्यथा ॥७७॥ सुखेनोपकलाचार्यमधीत्य सकलाः कलाः। उद्यौवना बभूवुस्ते, श्रेणिकस्यानुयायिनः॥७८॥—प्रसेनजिन्महीनाथो, राज्यार्हत्वं परीक्षितुम्। भुंजानानां स्वपुत्राणां, खुदेनामोचयच्छुनः ॥७९॥ नेशुः सर्वेऽपि राजन्याः, श्रेणिकस्त्वात्मनोऽभितः। तत्पात्राण्यंतरा चक्रे, बुभुजे च यथासुखम् ॥८०॥ राजा पुनः परीक्षार्थं, मोदकानां करंडकान्। ददौ निजकुमाराणां, पयःकुंभांश्च मुद्रितान् ॥८१॥ इमां मुद्रामभिंदाना, यूयमश्नीत मोदकान्। तथैव पिबतांभश्च, पुत्रानित्यादिदेश च ॥८२॥ कुमारा बलवंतोऽपि, भोक्तुं पातुं च नाशकन्। बुद्धिसाध्येषु कार्येषु, कुर्युरूर्जस्विनोऽपि किम् ?॥८३॥ श्रेणिकस्तु गृहे नीत्वा, तं मोदककरंडकम्। चालं चालं क्षरच्चूर्णं,

स्वर्णस्थालस्थमाशिवान्॥८४॥ धृत्वा रूप्यमयीं शुक्तिं,तत्पयःकुंभबुध्नके । गलद्वाबिंदुपूर्णां तामुत्पाट्य च पयः पपौ ॥८५॥ सर्वमेतत्परिज्ञाय,हृदये धृतवान्नृपः।—तदा च नगरे तत्रासकृद् जज्ञे प्रदीपनम्॥८६॥ ततश्चाघोषयामास,पुरे राजेति यद्गृहात् । उत्थास्यत्यनलः सोऽस्मात्, पुरान्निष्क्रामयिष्यते ॥८७॥ अन्येद्युर्मेदिनीभर्तुर्गृहे सूदप्रमादतः। जज्ञे प्रदीपनं ह्यग्निर्यस्मश्च स्वो न कस्यचित् ॥८८॥ राज्ञा पुत्राः समादिष्टा, यो यद् गृह्णाति तस्य तत् । ततस्ते निर्ययुः शीघ्रं,गृहीत्वाऽश्वगजादिकम्॥८९॥ श्रेणिकस्तु समादाय, जयभंभां विनिर्ययौ । युक्तिमत्राह पृष्टोऽसौ, राज्ञा शांते प्रदीपने ॥९०॥ एषैव देव! भूपानां, जयश्रीचिह्नमादिमम् । यत्नेन तेन रक्ष्येयं, नित्यं जीवितवन्नृपैः ॥९१॥ इत्याकर्ण्य वचस्तस्य, श्रेणिकस्य ददौ मुदा । भंभासार इति क्षोणिपतिर्नामापरं तदा ॥९२॥ सस्मार च वचः स्वीयं, सत्यसंघः प्रसेनजित् । ततः पुराद् द्विगव्यूत्या, स्वस्मै गृहमकारयत् ॥९३॥ सांतःपुरपरीवारस्तत्रोवास स्वयं नृपः । व्यवहर्तुं जनोऽप्यत्र, यानायान् प्रश्नितोऽवदत् ॥९४॥ यामि राजगृहं राजगृहादायामि चेति तत् । जज्ञे चैत्यादिना रम्यं, नाम्ना राजगृहं पुरम् ॥९५॥ पुत्रपौत्रयुतो राज्यं, कुर्वंस्तत्र महीपतिः । ज्ञातपूर्वी स्वतुगवृत्तं, चिंतयामास चेतसि ॥९६॥ स्वराज्यं भोक्ष्यते तावद्, विक्रमेण धिया स्वयम् । अन्येषामपि राज्यानि, राज्यार्हः श्रेणिकस्ततः ॥९७॥ किं त्विदानीमसत्कार्यो, मार्यो माऽन्यैरसौ सुतैः । इत्यन्येषां कुमाराणां, ददौ ग्रामादिकं नृपः ॥ ९८ ॥ श्रेणिकस्त्वपमानेन, तेन देशांतरं प्रति । प्राचालीदचलो भीत्या, केसरीव वनांतरम् ॥९९॥ जगामाश्रांतमश्रांतः, खड्गव्यग्रकरोऽध्वनि । क्रीडां कर्तुमिवोद्यानमार्गेऽनघप्रमोदभाक्॥१००॥ गच्छन् क्रमेण स प्राप, पुरं वेन्नातटाभिधम् । यच्छ्रीकल्लोलमालाभिर्वेलातटमिवाबभौ ॥१०१॥ भद्रस्य वणिजस्तत्र, विपणौ स पणायतः । कूर्म्म लाभोदयं नाम, तस्य मूर्त्तमिवाययौ ॥१०२॥ दिने तस्मिंश्च तत्राभूद्विशिष्टः कश्चिदुत्सवः । ततस्तच्छ्रेष्ठिनो हट्टे,

क्रेतुमागाज्जनो बहुः॥१०३॥ श्रेणिको लघुहस्तत्वाद्, बद्ध्वा बद्ध्वाऽर्पयद् द्रुतम्। क्रायकाणां वरद्रव्यपुटिकात्रुटिकादिकम्॥१०४॥ लाभश्च तत्प्रभावेण, भूयिष्ठः श्रेष्ठिनोऽभवत्। कस्याद्यातिथयो यूयं, ततः श्रेष्ठी तमभ्यधात्॥१०५॥ श्रेणिकोऽपि बभाषे वः, ततोऽसौ पर्यचिंतयत्। नंदायोग्यो वरः स्वप्ने, यो मयाऽवैक्षि सैष किम्?॥१०६॥ ततः श्रेष्ठी निजौकस्तं, नीत्वा संस्नाप्य चादरात्। परिधाप्य सुवासांसि, भोजयित्वैवमब्रवीत् ॥ १०७ ॥ नंदानाम्नीं सुतां मे त्वमिमामुद्वह मानद!। स प्राह कथमज्ञातकुलादेर्मम दास्यसि? ॥१०८॥ श्रेष्ठ्यूचे सर्वमज्ञायि, गुणैस्तव कुलादिकम्। परिणिन्ये ततो नंदां, सानंदो नृपनंदनः ॥१०९॥ भुंजानो नंदया सार्धं, तत्र वैषयिकं सुखम्। श्रेणिकोऽस्थात्कियत्कालं, गर्भं दध्रेऽथ भद्रजा॥११०॥ राजा श्रेणिकवृत्तांतमज्ञासीद् गुप्तपुरुषैः। सहस्राक्षा हि राजानो, भवंति चरलोचनैः॥१११॥ अन्यदा रोगमत्युग्रमाससाद प्रसेनजित्। ततः श्रेणिकमाह्वातुं, प्राहिणोदौष्ट्रिकानसौ ॥११२॥ श्रेणिकस्य नृपाह्वानमेकांते तैर्निवेदितम्। नंदां संभाष्य तस्यै सोऽक्षराण्येतानि चार्प्पयत् ॥११३॥ वयं राजगृहे पांडुकुड्या गोपास्ततः स्वयम्। करभीं तां समारुह्य, ययौ जनकसन्निधौ ॥११४॥ तं चाभ्यषिंचत् साम्राज्ये, सुप्रसन्नः प्रसेनजित्। पूर्णकुंभां-बुधाराभिर्नेत्रहर्षाश्रुभिः समम् ॥११५॥ ततः पंचनमस्कारं, स्मरन् पार्श्वजिनं नृपः। विधायाराधनं धीरो, विपद्य त्रिदिवं ययौ ॥११६॥ सर्वं सर्वंसहाभारं, बभारैकोऽपि शेषवत्। श्रेणिकस्तु तथैकोनां, मंत्रिपंचशतीं व्यधात् ॥ ११७ ॥ संपूर्णमथ तां कर्तुं, जिज्ञासुर्धीधनं नरम्। पुरुषैः क्षेपयामास, शुष्ककूपे निजोर्मिकाम् ॥११८॥ अघोषयच्च यो मुद्रां, तटस्थो लाति पाणिना। स्वां पुत्रीं मंत्रिधुर्यत्वं, राज्यार्द्धं राति तस्य राट् ॥११९॥ भूयानपि जनोऽभ्यागादादातुं स्वकरेण ताम्। किन्तु कुब्ज इवाशक्तः, फल-मत्युच्चशाखिनः ॥१२०॥–इतश्च तस्या नंदाया, अन्यदा दोहदोऽभवत्। रांती दानं गजारूढा, अमाम्यभयदा पुरे ॥१२१॥ पित्रा

नृपमनुज्ञाप्य, तस्याः सोऽपूरि दोहदः। कालेनासूत सा सूनुं, रत्नं वैडूर्यभूरिव ॥१२२॥ कृत्वा मातामहस्तस्य, महांतं जननोत्सवम्। सूनोरभय इत्याख्यां, दोहदानुस्मृतेर्ददौ ॥१२३॥ ववृधे लाल्यमानोऽसौ, धात्रीभिः पंचभिः क्रमात्। रूपलावण्यसौभाग्यैः, कलाभिर्नव्यचंद्रवत् ॥१२४॥ कलाचार्यस्य भद्रेणार्पितो भद्रदिने सुतः। द्राक् तेनाबोधि दीपेन, दीपवत् सकलाः कलाः ॥१२५॥ विनीतमुद्यतं शांतं, धीमंतममितौजसम्। गुरुस्तमिति विज्ञाय, प्रशशंस पदे पदे ॥१२६॥ एकांते तु सहाध्यायी, तमूचे कोऽपि मत्सरी। किं ते गुणांतरैर्यस्य, पिता विज्ञायते नहि ?॥१२७॥ अभयोऽप्याह भद्रो मे, पिताऽस्ति विपणौ स्थितः। स प्राह ननु ते मातुः, पिता भद्रो न ते पुनः ॥१२८॥ गत्वोपनंदमानंदमुक्तो नंदेय ऊचिवान्। ब्रूहि मातः! पिता को मे ?, साऽपि भद्रमचीकथत् ॥१२९॥ अभयोऽप्यभ्यधाद् भूयो, ननु भद्रः पिता तव। यथाज्ञातमनाबाधं, तातः को मे ? निवेद्यताम् ॥१३०॥ रुदंती साह सा कोऽपि, पुमान् वैदेशिकस्तु माम्। उद्वाह्य त्वयि गर्भस्थेऽगात् कुत्राप्यौष्ट्रिकैः समम् ॥१३१॥ ऊचेऽभयकुमारोऽपि, किमुक्तं तेन गच्छता। तानि न्यासीकृतानीवाक्षराण्यस्मै ददर्श सा ॥१३२॥ गोपाः पांडुरकुड्यास्तन्नूनं राजा पिता मम। करोति राज्यं तत्रावां, व्रजावो मातरंजसा ॥१३३॥ भद्रो ज्ञात्वाऽतिनिर्बंधं, सामग्रीं परिकल्प्य च। समं दुहित्रा दौहित्रं, विससर्ज शुभे क्षणे ॥१३४॥ क्रमेणाध्वानमुल्लंघ्य, प्राप राजगृहं पुरम्। नंदां तस्माद् बहिर्मुक्त्वा, पुरांतस्त्वात्मनाऽविशत् ॥१३५॥ अगात् कूपतटे तत्र, दृष्ट्वा च मिलितं जनम्। किमेतदिति तेनोक्ते, जनः सर्वोऽप्यवोचत ॥१३६॥ आदत्स्व मुद्रिकामेनां, पाणिना तत्पणीकृतम्। राज्यार्धं मंत्रिधुर्यत्वं,राट्पुत्रीं च वराकृते ! ॥१३७॥ अभयोऽप्यभ्यधादेवं, भवंतः किं न गृह्णते ?। तेऽप्यूचुर्गगनाल्लातुं, शक्या तारा करेण किम् ?॥१३८॥ततो जघान तामार्द्रगोमयेण नृपात्मजः। तत्सद्योऽशोषयत् क्षिप्त्वा,ज्वलंतं तृणपूलकम्॥१३९॥

मुक्त्वा वाःसारणीं वाप्यास्तं कूपं द्रागपूरयत्। तरंतीं गोमयस्थां तामाददे पाणिनाऽभयः ॥१४०॥ यामिकैः कथितेऽमुष्मिन्, वृत्तांते भूपतेः स तु। आनाययत नांदेयं, सोऽपि गत्वाऽनमत् नृपम् (ग्रं० ३०००) ॥१४१॥ उपवेश्यासने राजा, निजासन्ने तमभ्यधात्। कुतस्त्वमागमः? सोऽपि, प्रोचे बेन्नातटात्प्रभो! ॥१४२॥ स्मृत्वा नंदां नृपोऽपृच्छत्तं धृत्वा पाणिपल्लवे। भद्रं भद्रमुखाख्याहि, भद्राख्यं तत्र वाणिजम् ॥१४३॥ नंदानाम्नीं च तत्पुत्रीं, वत्स! जानासि वा नवा?। स प्राहाजन्मतोऽप्येतद्द्वयमप्युपलक्षये ॥१४४॥ वत्स! नंदोदरिण्यासीत्तस्याः किमुदपद्यत?। ऊचेऽभयकुमाराख्यं, सा नंदनमजीजनत् ॥१४५॥ राजाऽवदत् स कीदृक्षो, रूपेण वचसाऽपि च। अभयोऽप्यब्रवीत् स्वामिन्!, यादृशोऽहं स तादृशः॥१४६॥ शंकमानोऽवदद्राजा, ननु त्वमसि सोऽभयः?। स स्माह स्वामिपादा हि, मतिमंतो विदंति तत् ॥१४७॥ राजा तमात्मजं ज्ञात्वा, स्वाङ्कमारोप्य सस्वजे। अपृच्छच्च क्व ते माता?, सोऽशंसन्नगराद् बहिः ॥१४८॥ अभियानाय नंदायै,सामंतादीनथादिशत्। गंधहस्तिनमारुह्य, स्वयं चापि नृपोऽभ्यगात् ॥१४९॥ अभयेनाग्रतो गत्वा, नंदाऽऽत्मानमलंचिकीः। वारिताऽस्थात् स्वभावस्था, पतिव्रतोचितं ह्यदः ॥१५०॥ कृत्वाऽथ स्फारश्रृंगारं, राज्ञा दत्तं सुतान्विता। गंधसिंधुरमारूढा, सह पत्याऽविशत्पुरम् ॥१५१॥ प्रासादादि प्रदायास्या, नृपतिः प्रीतमानसः। पदं विश्राणयामास, सीताया इव राघवः ॥१५२॥ तथाऽभयकुमाराय, राज्यार्धं मंत्रिधुर्यताम्। सेनानाम्नीं स्वसुः पुत्रीं, सत्यवाक् श्रेणिको ददौ ॥१५३॥ ततोऽभयकुमारोऽपि, चतुर्बुद्धिमहानिधिः। दुःसाधान् साधयामास, धियैव वसुधाधवान् ॥१५४॥ सम्यग्नीतिलताकंदः, पितुर्भक्तोऽभयस्ततः। सप्तांगं सुस्थितं राज्यं, धीमानन्वशिषत् पुनः ॥१५५॥—वैशालीश्रीविशालापूरितश्चास्ति महीतले। तस्यां च चेटकश्चेटीकृताखिलनीपतिः ॥१५६॥ पृथग्राज्ञीभवास्तस्य, सप्तासन् वरपुत्रिकाः। सप्तांगस्यापि राज्यस्याधिष्ठात्र्य

इव देवताः ॥१५७॥ राजाऽन्योपयमत्यागान्न तु ताः पर्यणाययत्। मातृदत्तास्तु पंचैताः, परिणिन्युर्नृपा अमी ॥१५८॥ तत्र प्रभावतीं वीतभयेशोदायनो नृपः। पद्मावतीं तु चंपेशो, दधिवाहननामकः ॥१५९॥ कौशंबीशः शतानीको, मृगनेत्रां मृगावतीम्। शिवां चोज्जयिनीनाथश्चंडप्रद्योतभूपतिः ॥१६०॥ ईशः क्षत्रियकुंडस्य, ज्येष्ठाख्यां नंदिवर्धनः। सुज्येष्ठाचेल्लनानाम्न्यौ, कुमार्याविव तस्थतुः ॥१६१॥ अन्यदा तापसी वृद्धा, कन्यांतःपुरमेयुषी। शौचमूलं समाचख्यौ, धर्मं सा मूलमंहसः ॥१६२॥ सुज्येष्ठा प्राह हे मुग्धे!, मुग्धलोकप्रतारिके। धर्म्मः खलु दयामूलः, स च शौचात् कथं भवेत् ?॥१६३॥ भूर्जलं जलजा जीवास्त्रसा भूम्याश्रिता अपि। संख्यातीता विराध्यंते, स्नानाय भवतामपि ॥१६४॥ मृत्तिकोदकसंस्पर्शाच्छुध्यंति यदि जंतवः। कुलालः सकुटुंबोऽपि, तर्हि स्वर्गं व्रजिष्यति॥१६५॥ चेत् शुध्यंति बहिःस्नानादंतः पापमलीमसाः। तत् शुध्यंति ध्रुवं मत्स्यमकराद्या ह्रदादिषु॥१६६॥ मुग्धे! पंचाश्रवत्यागात्, पंचेंद्रियदमादपि। कषायविजयाद् धर्म्मस्तथा दंडत्रयोज्झनात् ॥१६७॥ इत्यादियुक्तियुक्ताभिर्भारतीभिर्निरुत्तराम्। सुज्येष्ठा तापसीं चक्रे, मौनव्रतपरामिव ॥१६८॥ दास्यादयो हसंत्यस्तां, मुखमर्कटिकादिभिः। गेहान्निःसारयंति स्म, भिक्षुकीं ग्रथिलामिव ॥१६९॥ सुज्येष्ठोपरि सा क्रुद्धा, दध्यौ दुर्धीरिमां ध्रुवम्। क्षेप्स्यामि पंडितंमन्यां, सपत्नीदुःखसागरे ॥१७०॥ आलिख्य चित्रपट्टे च, तद्रूपं श्रेणिकाय सा। उपनिन्ये स तां वीक्ष्यापृच्छत् केयं वराकृतिः ? ॥१७१॥ साऽऽख्यच्चेटकराजस्य, सुज्येष्ठानामिका सुता। इमा लक्ष्मीपतिर्लक्ष्मीमिवोद्वोढुं त्वमर्हसि ॥१७२॥ ततस्तां याचितुं प्रैषीद्वैशाल्यां श्रेणिको नरान्। सुज्येष्ठां याचितः पुंभिश्चेटकोऽप्येवमब्रवीत् ॥१७३॥ कथं वाहीकवंश्योऽयं, कन्यां हैहयवंशजाम्। स्वीकर्तुं श्रेणिको वांछेद् बको हंसीमिवामतिः ?॥१७४॥ न दास्यामि सुतां तस्मै, ततो व्याघुट्य तेऽभ्यधुः। श्रेणिकाय यथावृत्तं, श्रुत्वैतद् विषसाद सः ॥१७५॥ एतद् ज्ञात्वाऽभयोऽप्यूचे,

विषादं देव ! मा कृथाः । अचिरेणैव कालेन, करिष्ये वः समीहितम् ॥१७६॥ इत्युक्त्वा रूपमालिख्य, राज्ञोऽसौ चित्रपट्टके। वि-धाय वणिजो वेषं, वैशाल्यामगमत्ततः ॥१७७॥ तत्रापणे पणायंश्च, कन्यांतःपुरसन्निधौ। तद्दासीनामदात् पण्यं, समर्घं सुंदरं घनम् ॥१७८॥ तदा चानर्च चित्रस्थां, श्रेणिकार्चां स्रजादिभिः । तासां चाख्याद्यथाऽर्चामि, सदाऽमुं श्रेणिकं प्रभुम् ॥१७९॥ सुज्येष्ठायै तदाचख्युर्दास्यः साऽप्यन्यदाऽवदत्। अत्रानयत हे सख्यः !, मत्कृते चित्रपट्टकम् ॥१८०॥ चेट्यः कथंचिदानीय, कुमार्यास्तम-दर्शयन् । साऽथ चित्रं समालोक्य, श्रेणिकायौत्सुकायत॥१८१॥ दासीमुखाच्च तत् ज्ञात्वा, वणिगप्येवमभ्यधात्। श्रेणिकं दिवसेऽमुष्मि-नानेष्यामि सुरंगया ॥१८२॥ संकेतमिति संज्ञाप्य, सुरंगां च विधाय सः । एत्य राजगृहं शीघ्रं, श्रेणिकाय शशंस तत् ॥ १८३॥ सोऽथ नागसुतैः सर्व्वैः, रथस्थः सरथैः समम् । तमिश्रायां गजांसस्थश्चक्रीवागात् सुरंगया॥१८४॥ तं च भूनिर्गतं वीक्ष्य, सुरूपम-सुरेंद्रवत् । सुज्येष्ठा चित्रसादृश्यादुपलक्ष्याभ्यमोदत ॥१८५॥ श्रेणिकः स्माह सुज्येष्ठे !, क्षिप्रमारोह मद्रथम्। आरूढा हृदि पूर्वं तु, चित्रदृष्टाऽपि मानिनि ! ॥१८६॥ सुज्येष्ठां चेलणा प्रोचे, स्वसुः स्नेहात् त्वया समम्। समेष्यामि ततः सोचे, त्वमप्यारोह राड्रथम् ॥१८७॥ तथैव कृतवत्येषा, सुज्येज्येष्ठेऽतर्गृहस्य तु। विस्मृतां च समानेतुमगाद्रत्नकरंडिकाम्॥१८८॥ अथैवमभ्यधुर्नत्वा, नृपतिं नाग-नंदनाः । न स्थातुमुचितं नाथ !, सुचिरं वैरिवेश्मनि ॥१८९॥ ततोऽसौ प्रेरयामास, रथ्यानाशु सुरंगया। तत्रायाताऽथ सुज्येष्ठा, विवेद नृपतिं गतम् ॥१९०॥ वीक्षापन्नाऽथ पूच्चक्रे, सा यथा ह्रियते छलात्। चेल्लणा श्रेणिकेनैषा, व्याघ्रेणैव वरार्थिनी ॥१९१॥ संनह्यंतं निवार्याथ, चेटकं तस्य सैन्यराट्। वीरांगकोऽन्वधाविष्ठ, श्रेणिकं रथमास्थितः ॥१९२॥ क्षणाच्च मिलितो वीरोऽधिज्यीकृ-तशरासनः। द्वात्रिंशत्सुलसापुत्रानेकेनापीषुणाऽवधीत् ॥१९३॥ यावद् वीरांगको रथ्यान्, रथांश्चापाकरोत्पथः। तावद्राजा ययौ दूरं,

रथेनासह्यरंहसा ॥१९४॥ ततोऽसावर्धसिद्धार्थः, सेनानीर्विनिवृत्तवान्। भगिनीविप्रलब्धा तु, सुज्येष्ठैवं व्यचिंतयत् ॥१९५॥ धि-
ग्धिग्निपयवांछेयं,विषयाह्यति(याश्लि)विषा यतः। आदिमध्यावसानेषु,न कुत्रापि सुखावहाः॥१९६॥ उपभुक्तं सकृद्धन्याद्विषं हि विषयाः
पुनः। चिंतिता अपि जीवानां, हन्युर्जन्मशतान्यपि ॥१९७॥ औत्सुक्यं प्रथमं कुर्युर्मध्ये दीप्तादिकान् रसान्। अंते बीभत्सलज्जादीन्,
स्वास्थ्यं त्वेते कदापि न॥१९८॥ शब्दादिविषयासक्तो,जनः स्वार्थैकतत्परः। विश्वस्तं वत्सलं चापि, हन्यान् मां चेल्लणा यथा॥१९९॥
तदलं दुःखदैरेभिः, परायत्तैर्विनश्वरैः। स्वाधीनं सुस्थिरं धर्म्मं, ग्रहीष्यामि सुखास्पदम्॥२००॥ सुज्येष्ठा भावयित्वैवं,चंदनार्यापदां-
तिके। प्रव्रज्यां शिवसाम्राज्यदायिकामाददे सुधीः॥२०१॥—श्रेणिकोऽपि व्रजन्मार्गे,सादृश्याच्चेल्लणां प्रति। सुज्येष्ठे! वद धीश्रेष्ठे,भाषते
स मुहुर्मुहुः ॥२०२॥ साऽप्यवोचदहं स्वामिन् !, सुज्येष्ठायाः कनीयसी। चेल्लणेत्यथ सोऽप्यूचे, खंडस्थाने सिताऽभवत् ॥२०३॥
श्रेणिकः स्वपुरं गत्वा, तामुद्वाह्य प्रमोदतः। पट्टराज्ञीपदेऽकार्षीद्, दमयंतीं नलो यथा॥२०४॥ अथाभयकुमारेण,सहितः श्रेणिको
नृपः। सुलसानागयोर्गेहे, ययौ तद्बोधलेच्छया ॥२०५॥ तौ तु स्वसुतवृत्तांतं, ज्ञात्वाऽऽक्रंदनतत्परौ। अभयेन बभाषाते, भारत्या-
ऽतिगभीरया ॥२०६॥ भो भो विश्वस्थितिर्ह्येषा,यद् जातस्य ध्रुवं मृतिः। तद् विश्वविदितेऽत्रार्थे,किं शोकेन विवेकिनाम्?॥२०७॥
आकीटादासुरेन्द्राच्च,कृतांतस्य न कोऽप्यलम्। ततः किं क्रियते शोकः, स यत् स्वार्थविनाशकः ॥२०८॥ जलाग्निव्यालचौरारि-
रुजाद्यार्त्तेऽपि भूतले। यद् जीव्यते तदाश्चर्यं,निमेषमपि मानवैः ॥२०९॥ किंच यैः कर्म्मभिर्मृत्योरवस्कंदः पतेत् क्षणात्। यतितव्यं
तदुच्छित्त्यै, नतु शोच्यं विवेकिभिः ॥२१०॥ नागस्य सुलसायाश्च, कृत्वा संभाषणमिति। अभयः श्रेणिकश्चापि, निजं धाम समे-
यतुः॥२११॥ यथेष्टं श्रेणिकेनाथ, धारिणीप्रमुखास्ततः। बह्व्योऽपि हि सुरूपिण्यः, परिणिन्ये नृपात्मजाः॥२१२॥ अदाच्च चेल्लणा-

देव्याः, एकस्तंभविभूषितम्। दिव्योद्यानपरिक्षिप्तं, प्रासादं देवनिर्मितम् ॥२१३॥ ततोऽसौ बुभुजे भोगांस्तत्रस्थः समभेतया। वधीन् वरविमानस्थः, पुलोम्येव पुरंदरः ॥२१४॥ सोऽथ श्येनकजीवस्तु, व्यंतरत्वात् परिच्युतः। उदरे चेल्लणादेव्याः, पुत्रत्वेनोदपद्यत ॥२१५॥ निदानवशतस्तस्मिन्, गर्भे वृद्धिमुपेयुषि। पतिमांसादने देव्या, दोहदः समजायत ॥२१६॥ न शशाक समाख्यातुं, देवी कस्यापि तं पुनः। अपूर्णदोहदत्वेन, क्षीयते च क्षणे क्षणे ॥२१७॥ दृष्ट्वा कृशांगीं तां देवीं, प्रपच्छ श्रेणिकोऽन्यदा। क्षीयसे देवि! देहेनान्वहं क्षयरुजेव किम्? ॥२१८॥ मुमोचाश्रूणि साऽजस्रं, प्रत्यूचे नतु किंचन। ततो राज्ञा सनिर्बंधं, पृष्टा सा दोहदं जगौ ॥२१९॥ राजाऽऽख्यादभयायैतत्, सोऽपि तं तमसि न्यधात्। तदुपर्यन्यमांसं च, राज्ञीं तत्रानयत्ततः॥२२०॥ नृपस्याक्रोशतस्तस्याः, पश्यंत्या अभयस्ततः। अदात् तत्पिशितं छित्त्वा, छित्त्वा दोहदपूर्त्तये॥२२१॥ मन्यमाना महामांसमश्नंती चेल्लणाऽप्यथ। ध्यायंती मुमुदे गर्भं, विषसाद नृपं पुनः॥२२२॥ संपूर्णदोहदा सा तु, पतिभक्ताऽप्यचिंतयत्। दोहदाल्लक्ष्यते गर्भो, नूनमेष पितुर्दुर्हृद् ॥२२३॥ तदलं जीवितेनास्य, ततस्तीव्रागदान् पपौ। नापप्तत्तैरसौ किंतु, पापात्मा ववृधेऽधिकम् ॥२२४॥ कालेन सुषुवे सूनुं, तं चेट्याऽत्याजयच्च सा। अशोकवनिकां गत्वा, तं साऽशोकतलेऽत्यजत् ॥२२५॥ प्रत्यायांतीं नृपो वीक्ष्य, कुत्रागा इत्युवाच ताम्। साऽवोचच्चेल्लणादेव्याः, सुतं त्यक्तुमगामहम्॥२२६॥ राजाऽथ तत्र गत्वा तं, दृष्ट्वा चंद्रमिवोद्ज्ज्वलम्। पाणिभ्यां पुत्रमादाय, गत्वा देव्यंतिकेऽवदत्॥२२७॥ किमकार्षीः प्रिये! पापं, निष्ठुरं? सुकुलोद्भवे!। न कुंडं गोकुलं चापि, व्युत्सृजंत्यात्मजं स्त्रियः॥२२८॥ त्यक्ष्यस्याद्यमपत्यं चेत्, श्रेयांसन्यानि तन्न ते। तर्जयित्वेति तां राजा, स्वयं पुत्रमवर्धयत् ॥२२९॥ तस्य चैकांगुली छिन्ना, तदाऽशोकतरोस्तले। कुक्कुटेन तदर्त्याऽसावरोदीत् सकलां निशाम्॥२३०॥ पूयलिन्नां ततो राजा, मुखेऽक्षैप्सीत् तदंगुलीम्। मनाक् सुखासिकां

लेभे, दारकोऽपि मुखोद्भवाम् ॥२३१॥ अशोकचंद्र इत्याख्यामदात्तस्मै नृपो मुदा। व्यधुः कूणांगुलित्वेन, कूणिकाख्यां तु बालकाः ॥२३२॥ ततोऽष्टवार्षिकं स्नेहात्, कुमारं कूणिकं नृपः। अध्यापयत् कलाचार्याच्छिप्याद्याः सकलाः कलाः॥२३३॥ अथान्यौ चेल्लणादेव्याः, पुण्यवंतौ दिवश्च्युतौ। सुतौ हल्लविहल्लाख्यौ, जज्ञाते गुणशालिनौ ॥२३४॥ कल्पवर्त्तकृते गौडमोदकान् कूणिकाय सा। पुनर्हल्लविहल्लाभ्यां, प्राहिणोत् खंडमोदकान् ॥२३५॥ प्राग्जन्ममत्सरावेशविवशः कूणिको हृदः। तातः कारयते सर्वमिति दध्यौ विमूढधीः ॥२३६॥ संप्राप्तयौवनं तं च, महर्द्ध्या पर्यणाययत्। पद्मावत्यभिधां कन्यां, पद्माक्षीं नृपनंदनाम् ॥२३७॥ अन्यासामपि राज्ञीनां,श्रेणिकस्य महीपतेः। राज्यश्रीवासवेश्मानि,सूनवो बहवोऽभवन् ॥२३८॥—इतश्च श्रीमहावीरः,सर्वज्ञश्चरमो जिनः। सुरासुरनरैः सेव्यः, सर्वातिशयसंयुतः ॥२३९॥ सहितः साधुसिंहानां, चतुर्दशसहस्रकैः। षट्त्रिंशद्भिश्च साध्वीनां, सहस्रैः परिवारितः॥२४०॥ मज्जन्मुग्धं भवांभोधावुद्दिधीर्पुरिदं जगत्। ग्रामाकरपुराकीर्णां, विहरन्नन्यदा महीम् ॥२४१॥ बहिस्तन्नगरात्तुंगे, गिरौ वैभारनामनि। चैत्ये गुणशीलाभिख्ये,भगवान् समवासरत्॥२४२॥ चतुर्भिः कलापकं ॥ ज्ञात्वा श्रीवीरमायातं, तं नंतुं त्रिजगत्पतिम्। श्रेणिकः सपरीवारो, जगाम जगतीपतिः ॥२४३॥ विधिवत्तत्र वंदित्वा, यथास्थानमुपाविशत्। ततो भव्यावबोधाय, जगादैवं जगद्गुरुः ॥२४४॥ भो भो दुःखी भवारण्ये, पुण्यपाथेयवर्जितः। पांथवत् सत्पथः भ्रष्टो,बंभ्रमीत्यसुमांश्चिरम् ॥२४५॥ श्वभ्रेषु सहतेऽदभ्राः, कुंभीपाकादिका व्यथाः। तिर्यक्षु च्छेदवेधांकदाहदोहादिकाः पुनः ॥२४६॥ मनुष्येषु तु दौर्गत्यरोगशोकभयादिकाः। देवेष्वपि विषादेर्ष्यावियोगच्यवनादिकाः ॥२४७॥ सहतेऽत्र भवाटव्यां, जीवो दुःखपरंपराम्। अनंतान् पुद्गलावर्त्तान्निर्धर्म्मोऽटाट्यते पुनः ॥२४८॥ जैनो धर्म्मस्तदुच्छेत्ता, दाता स्वःशिवसंपदाम्। आत्मनीना जना लेनं, श्रयध्वं शक्तितस्ततः ॥२४९॥ श्रुत्वैनां देशनां

भर्तुर्भूपः सम्यक्त्वमाश्रयत्। अभयाद्याः पुनर्देशविरतिं प्रतिपेदिरे ॥२५०॥ नत्वा वीरं जगज्ज्येष्ठं, गुणश्रेष्ठान्मुनीनपि। आजगाम निजं धाम, श्रेणिकः सपरिच्छदः॥२५१॥ ज्ञानादित्यस्ततः स्थानाद्व्यहार्षीद् भगवानपि। भव्यपद्मप्रबोधाय, ग्रामाकरपुरादिषु॥२५२॥ सम्यग्दर्शनपूतात्मा, नृपतिः श्रेणिकोऽन्वहम्। त्रिसंध्यं पूजयामास, प्रतिमामार्हतीं मुदा ॥२५३॥ कारयित्वाऽथ सौवर्णान्, यवानष्टोत्तरं शतम्। स्वस्तिकं रचयामास, प्रत्यहं तत्पुरः स्वयम् ॥२५४॥–इतश्च पोतनपुरोद्याने नाम्नि मनोरमे। भगवान् समवासार्षीद्, वीरो विश्वैकवत्सलः ॥२५५॥ सोमचंद्रात्मजं तत्राग्रजं वल्कलचीरिणः। प्रसन्नचंद्रं प्रव्राज्य, जिनो राजगृहं ययौ ॥२५६॥ ततो नियुक्तकैः पुंभिः, द्रुतमेत्य नृपांतिकम्। अंतकातंकमुक्तस्य, वीरस्यागमनं जगे ॥२५७॥ जिनागमनमाकर्ण्य, केकीवांभोधरध्वनिम्। मुमुदे मेदिनीनाथः, श्रेणिकः शासनार्चकः॥२५८॥ ससंभ्रममथोत्थाय, रत्नसिंहासनान्नृपः। विमुच्य पादुके पञ्चथा-प्युत्तरासंगमादधे ॥२५९॥ गत्वा पदानि सप्ताष्टौ, जिनसंमुखमंजसा। पुरःस्थमिव तत्रस्थे, स्वमूर्ध्ना प्रणिपत्य तम्॥२६०॥ शरीरांतरसम्मांतमिव हर्षं बहिस्तनौ। बिभ्राणः पुलकव्याजात्तुष्टावेति महीपतिः ॥२६१॥ स्वयंभुवे महेशायाच्युताय परमात्मने। प्रद्योतनाय बुद्धाय, श्रीवीरायार्हते नमः॥२६२॥ वंदित्वेति जिनाधीशं, मगधेशो महामनाः। सिंहासनमथास्थायादिक्षत् कौटुंबिकानिति॥२६३॥ सबाह्याभ्यंतरं सर्वं, भो भो राजगृहं पुरम्। श्रीखंडघुसृणांभोभिः, प्रशांतीकृतभूतलम् ॥२६४॥ दशार्धवर्णपुष्पैश्च, सर्व्वत्र प्रकरीकृतम्। वैजयंतीयुतकेतुध्वजराजिविराजितम् ॥२६५॥ ऊर्ध्वीकृतोच्चमाणिक्यतोरणश्रेणिसुंदरम्। प्रासादद्वाःस्थमांगल्यकलशालिसमाकुलम्॥२६६॥ विचित्रोल्लोचसच्छोभं, सच्छोभमौक्तिकांकितम्। चित्रकं त्वग्दुकूलाद्यैः, शोभितं हट्टशोभया॥२६७॥ सुगंधधूपधूम्याभिर्घनोन्नतिविडंबकम्। स्थाने स्थाने समारब्धदिव्यसंगीतकान्वितम् ॥२६८॥ कुरुध्वं कारयध्वं च, सर्वमेतद् विशेषतः।

येन स्वस्य परस्यापि, भवमैत्री प्रभावना ॥२६९॥ षड्भिः कुलकं । इत्याज्ञां नृपतेस्तेऽपि, प्रतिपद्य मुदा क्षणात् । तत्सर्वं साधयामासुः, सुरेन्द्रस्येवाभियोगिकाः ॥२७०॥ राजा स्नातानुलिप्तोऽथ, कृतकौतुकमंगलः । संवीतदिव्यवासस्को, दिव्याभरणभूषितः ॥२७१॥ वंदिवृंदजयारावेष्वतुच्छेषूच्छलत्सु च । आरुरोह ततो गंधसिंधुरस्कंधमुद्धुरम् ॥२७२॥ युग्मं । मूर्ध्नि श्वेतातपत्रेण, ध्रियमाणेन भूपतिः । राजन् चूलास्थचैत्येन, सुमेरुरिव जंगमः ॥२७३॥ निशाकरकराकारैर्वीज्यमानश्च चामरैः । खपतत्सिंधुगंगायुग्हिमाद्रेरिव रूपभृत् । २७४॥ दिव्ययानाधिरूढाभिर्दिव्यालंकारचारुभिः । देवीभिरिव रम्याभिर्देवीभिः परिवारितः ॥२७५॥ महाराजघटाघंटाटंकारैर्गर्जगर्जितैः । नांदीतूर्यनिनादैश्च, पूरितांबरकंदरः ॥२७६॥ वल्गत्तुरंगसंघातैर्हेषानिर्घोषसंकुलैः । अर्काश्वस्पर्धयेवोच्चैरुत्पतद्भिर्वृतो भृशम्॥२७७॥ किंकिणीकंकणक्वाणै, रथानां केतुहस्तकैः। अनेकमूर्त्या नृत्यंत्या, कीर्त्तिनट्येव शोभितः॥२७८॥ पदातिभिर्महायोधैर्विविधायुधपाणिभिः। राजमानः पराजय्यैर्जयश्रीस्तंभसन्निभैः ॥२७९॥ एवं समग्रसामग्र्या,सर्व्वद्युत्याऽखिलश्रिया । भक्तिसारो जिनं नंतुं,भंभासारोऽचलन्नृपः॥२८०॥ धन्योऽयमेनं यत् सर्व्वाः, शिश्रियुः सर्व्वतः श्रियः । श्रेयांस्यनेन लब्धानि, रोचतेऽस्मै यतो जिनः॥२८१॥ अस्मात्प्रभावको नान्यः,कीर्त्तिश्चास्य सुधोज्ज्वला । अस्मिन्नेवेदृशी भक्तिर्दृश्यते शासनं प्रति ॥२८२॥ एवं प्रशंसतां बोधिहेतुतां प्राणिनां व्रजन् । निर्ययौ मध्यमध्येन, राजा राजगृहस्य तु॥२८३॥ चतुर्भिः कलापकं । अथ प्रसन्नचंद्रर्षिश्चिकीर्षुः कर्म्मणः क्षयम् । पृथुपृथ्वीशिलापृष्ठे, वैभारोपत्यकास्थिते ॥२८४॥ उत्क्षिप्तैकक्रमः सूर्याभिमुखश्च भुजद्वयः । समाहितमनास्तस्थौ, कायोत्सर्गेण निश्चलः ॥२८५॥ युग्मं ॥ नृपस्तेनाध्वना गच्छन्नादित्यातपतापतः । सर्वांगप्रक्षरत्स्वेदं, सनिर्झरमिवाचलम् ॥२८६॥ एकपादस्थितं स्थेष्टमेकपादमिवांघ्रिपम् । स्वर्गापवर्गमाक्रष्टुमिवोत्क्षिप्तभुजद्वयम् ॥२८७॥ दृग्युद्धमिव तन्वानं, पश्यंतं

सूर्यमंडलम्। प्रसन्नचंद्रराजर्षिं, वीक्ष्योपलक्षयन्नृपः ॥२८८॥ त्रिभिर्विशेषकं। उत्तीर्य हस्तिनः स्कंधात्तं नत्वा भक्तिनिर्भरः। शिरो धुन्वन् जगामाग्रे, तद्गुणग्रामरंजितः ॥२८९॥ दृष्ट्वा चंद्रमिवांभोधिश्छत्रादीन् श्रीमदर्हतः। उल्ललास भृशं राजा, श्रेणिकः परमार्हतः ॥२९०॥ नृराजो राजचिह्नानि, पंचाप्येतान्यथामुचत्। वाहनं मुकुटं छत्रं, कृपाणं चामरे अपि॥२९१॥ ततः समवसृत्यंतः, प्रविश्य जिननायकम्। तिस्रः प्रदक्षिणाः कृत्वा, वंदित्वा चास्तवीदिति॥२९२॥ श्रद्धया वर्धमानोऽपि,वर्धमानजिनेश्वर!। त्वदाज्ञामुपमातीतां,कथंकारमहे स्तुवे?॥२९३॥ कल्पद्रुमादतिक्रांता,त्वदाज्ञा देव! देहिनाम्। प्रसूते या फलैर्नित्यमिहामुत्राप्यचिंतितैः॥२९४॥ शारीरमानसासंख्यदुःखलक्षक्षयंकरी। कथं सुधासदृक्षा स्यात्त्वदाज्ञा शिवसौख्यदा?॥२९५॥ सदोद्योता गतस्नेहा,निश्चला च निरंजना। त्वदाज्ञा जगतामीश!, नव्यदीपायते नृणाम्॥२९६॥ नयसप्तशतीचक्रा,निःशल्या चैककाष्ठिका। त्वदाज्ञा दुर्गमोक्षाध्वन्यपूर्वस्यंदनायते॥२९७॥ त्वदाज्ञैकावली चेयं, ज्ञानादिवररत्निका। हृत्स्थयाऽपि यया जीवाः, निर्ग्रंथाः स्युस्तदद्भुतम्॥२९८॥ कर्म्मारिवीर श्रीवीर, त्वदाज्ञां ये तु कुर्वते। त्रिलोक्यपि करोत्याज्ञां, तेषां सौभाग्यशालिनाम् ॥२९९॥ देवाधिदेव देवेन्द्रवृंदवंद्यपदद्वय!। त्वदाज्ञा हृदि मे नित्यमस्तु मेरुरिव स्थिरा ॥३००॥ स्तुत्वेति विरते राज्ञि, विदधे विरताग्रणीः। देशनां भव्यजंतूनां, निष्कर्म्मा कर्म्मनाशनीम् ॥३०१॥ अनंतज्ञानदर्शनवीर्यानंदमयोऽप्ययम्। अनादिकर्म्मसंयोगाद्, दुःखी भ्रांतश्चिरं भवी ॥३०२॥ ज्ञानादित्रयसंयोगाद्, वियोगो ह्यनयोर्भवेत्। स्वर्णाश्मनोर्यथाऽनादियुक्तयोर्वह्नियोगतः॥३०३॥ तदिदानीमवेत्यैवं, श्रयध्वं तत्त्रयं जनाः!। लभध्वं शाश्वतं तस्मात्, तदनंतचतुष्टयम् ॥३०४॥ चमत्कृतः स्वचित्तेन, प्रभोर्देशनयाऽनया। भगवंतमथो नत्वा, पप्रच्छ श्रेणिको नृपः ॥३०५॥ यदा प्रसन्नचंद्रर्षिः, ववंदे मयका तदा। कालं कुर्यात्ततः कां स, गतिमासादयेद् विभो! ॥३०६॥ स्वाम्यूचे सप्तमीं

पृथ्वीं,यायाद् दध्यौ ततो नृपः। अत्युत्कृष्टतपस्कस्याप्यस्य केयं गतिर्मुनेः?॥३०७॥ क्षणं स्थित्वा पुनः पृष्टे,नृपेण प्रभुरभ्यधात्। याति सर्वार्थसिद्धिं स, विपद्येताधुना यदि ॥३०८॥ विस्मितो नृपतिर्नत्वा, पुनः पप्रच्छ सादरम्। स्वामिन्! आख्याहि को हेतुः,यदियं व्याकृतिर्द्विधा ?॥३०९॥ स्वाम्याख्यत्तव सैन्यस्याग्रस्थौ सुमुखदुर्मुखौ। मर्त्यौ तमृषिमैक्षेतां, तत्रेदं सुमुखोऽभ्यधात् ॥३१०॥ क्रमेणैकेन कस्तिष्ठेत् ?, कश्चैक्षेतार्कमंडलम् ?। क्षणार्हमपि तेनायमहो दुष्करकारकः ॥३११॥ दुर्मुखोऽथ स्वभावेन, दुर्मुखः सुमुखं जगौ। राजा प्रसन्नचंद्रोऽयमद्रष्टव्यमुखः खलु ॥३१२॥ प्रवित्रजिषुणा येन, स्वराज्ये योजितः शिशुः। महनसि नृशंसेन, न्यासितस्तर्णको यथा ॥३१३॥ स्वराज्याच्च्यावितोऽमात्यैः, वातैरिव नगाच्छदम्। विध्वंसेऽवरोधश्च, शून्यं दुग्धमिवौतुभिः॥३१४॥ इत्याकर्ण्य स राजर्षिः, स्वपुत्रस्य पराभवम्। देध्मीयमानः क्रोधेन, दध्यौ मोहबलार्दितः॥३१५॥ धीसखानधमान् धिग् धिक्, कृतघ्नान् सुदुराशयान्। पराबभूवे यैर्बालो, दुर्बलो बालिशैर्मम॥३१६॥ ध्यायन्नेवं भृशं साक्षादिव वीक्षांबभूव तान्। मनसैव हि संनह्य, युयुधे संयतीव तैः॥३१७॥ हन्यमाने त्वमानौघे, कुंताकुंति शराशरि। त्वमागास्तत्र तं नंतुं,स्तुत्वाऽगात् पुरतः परम्॥३१८॥ न चाज्ञायि तदा तेन,त्वमायातोऽपि भूपते!। चेतनस्य हि चैतन्यमनु चित्तं महाचलम्॥३१९॥ शरारुः कृष्णलेश्यावान्, रौद्रध्यानपरश्च सः। महातमःप्रभायोग्यस्तदाऽवर्तिष्ट दुष्टधीः॥३२०॥ त्वयि नत्वाऽऽगते त्वत्र,युध्यमानस्तथैव सः। मनसैव बहून् हत्वा,निष्ठितास्त्रोऽभवत् क्षणात्॥३२१॥ शेषान्निहंतुमावेशात्, शिरस्त्रायाक्षिपत्करम्। अशिरोजं स्पृशन् शीर्षमस्मार्षीत् स पुनर्व्रतम्॥३२२॥ निंदित्वा बहुधाऽऽत्मानं,स्थापयित्वा पुनर्व्रते। महामोहादिदंभोलिं,धर्मध्यानं दधार सः॥३२३॥ तेन सर्वार्थसिद्धार्हः,सोऽभूत् तस्यामथो दिशि। दृष्ट्वा राद् सुरसंपातं, प्रपच्छ किमिदं? प्रभो! ॥३२४॥ प्रभुः प्राह समुत्पेदेऽमुष्य संप्रति केवलम्। ततोऽस्य केवलज्ञानमहिमानं व्यधुः सुरा

॥३२५॥ राजा राजर्षिवृत्तांतैर्नितरां रंजितो जगौ। भगवन्! केवलज्ञानं,कस्मिन् व्युच्छेदमेष्यति ?॥३२६॥ विद्युन्माली तदा देवश्चतुर्देवीसमावृतः। आयातोऽस्ति जिनं नंतुं,महर्द्धिर्ब्रह्मलोकतः॥३२७॥ देवोऽयं चरमो भावी,केवलीति जिनोदिते। राज्ञोचे केवलज्ञानं,कथं देवेषु जायते ?॥३२८॥ भगवानभ्यधादेष,सप्तमेऽह्नि दिवश्च्युतः। त्वत्पुरे भविता पुत्रो,धारिण्यूषभदत्तयोः॥३२९॥जंबूकुमार इत्याख्यो,भावी चरमकेवली। नृपोऽपृच्छत् पुनः कस्माद्,द्युतिमांश्च्यवनेऽप्ययम् ? ॥३३०॥ जगाद भगवानस्य, भवदेवादिकान् भवान्। शिवजन्मतपोलक्ष्म्या,कांतिस्तेनेदृशी शुभा॥३३१॥—अत्रांतरे गलत्कुष्ठी,कश्चिन्नत्वा जिनांतिके। निपद्य स्वांगपूयेन,लिलेप भगवत्क्रमौ ॥३३२॥ तं दृष्ट्वा श्रेणिको दध्यौ, हन्म्येनं पापकारिणम्। यद्वा न युक्तमत्रेदं, हनिष्याम्यत उत्थितम् ॥३३३॥ वीरेणाथ क्षुते तेन, कुष्ठिनोचे म्रियस्व भोः। राज्ञा तु जीव जीव्यास्त्वं, मृषीष्ठा वाऽभयेन तु ॥३३४॥ कालसौकरिकेणाथो, मा जीवीर्मा म्रियस्व वा। श्रुत्वा स्वामिन् म्रियस्वेति, चुकोप श्रेणिकोऽधिकम् ॥३३५॥ भटान् भ्रूसंज्ञयाऽऽदिक्षल्लातैनं निर्गतं बहिः। जगद्बंधोर्जिनस्यैवं, यः पराशातनापरः ॥३३६॥ अथ कुष्ठी जिनं नत्वा, चचाल लुलितालकः। योधास्तमन्वधावंत, सावधाना उदायुधाः ॥३३७॥ देवरूपमयं कृत्वोत्पपात गगनाध्वना। सत्रपाः पत्तयस्तेऽपि, व्यावृत्त्याख्यन्नृपाय तत् ॥३३८॥ किमेतदिति संभ्रांतः, प्रणिपत्य महीपतिः। प्रभुं पप्रच्छ विश्वेश !, कुष्ठी कोऽसौ ? निवेद्यताम् ॥३३९॥ भगवानप्युवाचैवं, वत्सदेशेऽस्ति पूर्वरा। कौशांबीति नृपस्तस्यां, शतानीको महाबलः ॥३४०॥ तत्र सेडुवको नाम, द्विजो दारिद्र्यविद्रुतः। सोऽन्तर्वत्न्याऽन्यदा पत्न्या, प्रोचेऽर्पय घृतादिकम् ॥३४१॥ तेनोचे नास्ति मे किंचित्, तद्विज्ञानं वचस्विनि !। येनानुरंजितो दद्यादाता घृतगुडादिकम्॥३४२॥ तयोक्तं भज राजानं, स दद्याद्येन संपदम्। सिषेवे स ततो भूपं, नित्यं पुष्पफलादिभिः ॥३४३॥ जगदे सोऽन्यदा राज्ञा, किं ते विप्र ! प्रदी-

यताम् ?। प्रार्थयिष्ये प्रियां पृष्ट्वेत्याख्याद् विप्रोऽपि पार्थिवम् ॥३४४॥ ततोऽसौ स्वगृहे गत्वेत्यूचे मेऽद्य महीपतिः। परितुष्टः प्रदत्ते तत्, कमर्थं प्रार्थये प्रिये ?॥३४५॥ मा प्राग्ग्रासने भुक्तिं, दीनारं दक्षिणाकृते। याचस्व भूपतिं भद्रोत्सारकं च दिने दिने ॥३४६॥ गत्वा तद्याचितं तेन,राज्ञाऽपि तत् प्रतिश्रुतम्। उदंकः पतितोऽप्यब्धौ, बिभर्त्ति स्वोचितं जलम् ॥३४७॥ प्रत्यहं तस्य तत्सर्वं, कुर्वंतं वीक्ष्य भूपतिम्। सामंताद्यास्ततो दध्युः, पूज्योऽयं राजवल्लभः॥३४८॥ ततोऽभोज्यत तैर्भीतैर्दक्षिणां ग्राह्यते स सः। वांत्वा वांत्वा द्विजो लोभादबोभोजीद् गृहे गृहे॥३४९॥ ववृधे स्वल्पकालेन,ततः सेडुबको द्विजः। ऋद्ध्या महत्या पुत्रादिसंतत्या च प्रभूतया ॥३५०॥ रसेषूर्ध्वमथो यात्सु, तस्याजायत कुष्ठरुक्। दुःसाध्योऽभूच्च स व्याधिर्वैरीवोपेक्षितः क्रमात् ॥३५१॥ शतानीकस्य भूपस्य, तथैवाग्रासनासिनम्। तं गलत्कुष्ठिनं वीक्ष्यामात्या भूपं व्यजिज्ञपन् ॥३५२॥ स्वामिन्नस्य पदे कोऽपि, पुत्रादिः स्थाप्यतां ननु। संक्रांतिर्जायते व्याधेर्येनैकत्रासनादिना ॥३५३॥ एवमस्त्विवति राज्ञोक्ते, विप्रः प्रोक्तः स मंत्रिभिः। भोक्ष्यतेऽत्र सुतस्ते तु, तिष्ठेस्त्वं स्वीयवेश्मनि ॥३५४॥ रोगेऽतिप्रसृते तस्य, तत्पुत्रैस्त्रपया ततः। कृत्वा कुटीरकं गेहाद्, बहिस्तत्र स आस्यत ॥३५५॥ तस्य तत्र स्थितस्यादुर्वारं वारेण तत्स्नुषाः। दारुपात्रे सुदूरस्थाः, श्वपाकस्येव भोजनम् ॥३५६॥ सोऽथ दध्यौ सुतादीनां, कुपितोऽवज्ञया तया। मत्तः श्रियैव मत्तानां,दर्शयाम्यथ तत्फलम्॥३५७॥ ध्यात्वेत्यूचे स तान् मोक्ष्ये,प्राणान् किंतु मुमुर्षुणा। मंत्रपूतः पशुर्देयः, स्वेभ्य एष कुलक्रमः ॥३५८॥ मुदितैस्तैः पशुः क्षिप्रं, तस्यार्प्यत ततोऽङ्गकात्। उद्वर्त्योद्वर्त्य तद्भक्ष्ये, चिक्षेपोद्वर्त्तनीर्द्विजः ॥३५९॥ तद्भक्षणादसौ जज्ञेऽचिरेणाजोऽपि कुष्ठिकः। हत्वा तमन्यदा सोऽदात्,स्वेभ्यस्तं तेऽप्यभुंजत ॥३६०॥ तीर्थे स्वार्थाय गच्छामीत्यापृच्छ्य तनयानसौ। शरण्यमिव मन्वानोऽरण्यानीमुन्मुखोऽगमत् ॥३६१॥ भ्राम्यन्नुदन्यया पश्यन्नदं नानाद्रुमैर्वृतम्।

पत्रादिपाकसंपर्कात्, क्वाथवत्तत्पयः पपौ॥३६२॥ तृषार्त्तो वैद्यवाचेव,सोऽपादंभो यथा यथा । तथा तथा विरेकोऽभूदस्योग्रक्रमिभिः समम्॥३६३॥ स नीरुक् तेन संवृत्तो, व्यावृत्त्यागात् पुरीं निजाम् । पौरैः पृष्टोऽब्रवीच्चाहं,नीरुक् देवतया कृतः॥३६४॥ गृहे गतः स्वपुत्रादीन्, मक्षिकाकोटिवेष्टितान् । निकृष्टकुष्ठनष्टांगान्,दृष्ट्वाऽभाषिष्ट दुष्टधीः॥३६५॥ पापिष्ठाः सुष्ठु दृष्टं भो,मदवज्ञा फलेग्रहिः। फलमेतत् ततः पुत्रास्तमूचुः किं त्वया कृतम् ?॥३६६॥ स साहान्यस्य कस्येदृक्,शक्तिस्तस्मै ततोऽशपत् । लोकः सर्वोऽपि सोऽथागाद्, राजन्नत्र पुरे क्रमात् ॥३६७॥ वृत्तिं द्वारं स शिश्राय, द्वारपालं निराश्रयः । द्वाःस्थोऽथागात् ममानंतुं,कृत्वा तु द्वाररक्षकम्॥३६८॥ द्वारस्थो द्वारदुर्ग्गाणां, वलिः सेडुबकोऽधिकम् । चखाद ग्रीष्मसंतापात्,तृषा तस्याभवद् भृशम्॥३६९॥ द्वारपालभयाद् द्वारं, नात्याक्षीत् तृषितोऽप्यसौ । धन्यान् वारिचरान् जीवान्, मन्यमानो व्यपद्यत ॥३७०॥ सोऽत्रैव नगरद्वारवाप्यामजनि दर्दुरः । भूयोऽत्र समवासार्ष्मो, विहरंतोऽन्यदा नृप ! ॥३७१॥ असदागमनं श्रुत्वा, भेकोऽम्भोहारिणीमुखात् । ऊहापोहं वितन्वानो, जातिस्मरणमाप सः ॥३७२॥ अचिंतयत् स भेकः प्राक्, द्वारे द्वाःस्थो विमुच्य माम् । ययौ यं वंदितुं वीरं, स आगाद् भगवानिह ॥३७३॥ तं नत्वा तद्गिरः श्रुत्वा, ग्रहीष्ये जन्मनः फलम् । ततो मां वंदितुं भक्त्योत्प्लुत्योत्प्लुत्य चचाल सः ॥३७४॥ पथ्यागच्छंस्त्वदश्वेन, खुरेणाक्रम्य मारितः । दर्दुरांकेषु देवेषु, महर्द्धिस्त्रिदशोऽभवत् ॥३७५॥ बिडौजसाऽन्यदा राजन्नाचचक्षे स्वपर्षदि । श्रेणिको नैव चाल्येत, जिनभक्तेः सुरैरपि ॥३७६॥ तदश्रद्धालुस्तत्रागात्,स देवः कुष्ठिरूपभृत् । गोशीर्षेण ममासिंचच्चरणौ रसिका न सा ॥३७७॥ राज्ञा पृष्टो म्रियस्वेत्याद्यर्थं प्रभुरथावदत् । अर्हन्मृत्वा शिवं गच्छ, म्रियस्वेति शुभं ह्यदः ॥३७८॥ त्वं च जीवन् सुखेनासि, मृतस्तु नरकं गमी । जीवन् सुखी मृतः स्वर्गं, गमीत्युक्तो द्विधाऽभयः ॥३७९॥ कालशौकरिकस्त्वेष, जीवन् पापपरायणः । मृतः श्वभ्रं

गमी तेन, द्विधाऽपि प्रतिषेधितः॥३८०॥ मृतस्त्वं नरके याता, सर्वज्ञोक्तमिदं वचः। आकर्ण्य कर्णकटुकं, बभाषे भूपतिः प्रभुम् ॥३८१॥ भवत्सु विश्वविश्वस्य, शिवतातिषु सत्स्वपि। स्वामिन्नस्वामिकस्येव, कथं मे गतिरीदृशी ? ॥३८२॥ प्रभुः प्राह दृढं बद्धं, पुराऽऽयुर्नरके त्वया। अस्माभिरपि तत्कर्म्म,नान्यथा कर्तुमीश्यते॥३८३॥ किंतु तस्मात् समुद्धृत्य, भाविन्यामर्हतामिह। चतुर्विंशतिकायां त्वं, प्रथमस्तीर्थनायकः ॥३८४॥ पद्मनाभाभिधस्तुल्यो, मानवर्णादिना मम। भावी भवांतकृद्राजन् !, विषादं तेन मा कृथाः ॥३८५॥ युग्मं ॥ श्रुत्वेति श्रुतिपीयूषपूरकल्पं ततोऽभवत्। हर्षप्रकर्षादुत्फुल्लपंकजाक्षः क्षितीश्वरः ॥३८६॥ प्रभुं प्रणम्य भूयोऽपि, पप्रच्छ स्वच्छधीरसौ। उपायः कश्चिदस्तीश !, न यायां येन तां गतिम् ॥३८७॥ स्वाम्यूचे कपिला भिक्षां, साधुभ्यो दाप्यते त्वया। त्याज्यते शौनिकोऽयं चेच्छूना श्वभ्रे गतिर्न ते॥३८८॥ इत्यस्तशंसयो वीरं, प्रणम्य स्वपुरं प्रति। प्राचालीदचलानाथो, राजन् राज्यश्रिया तया॥३८९॥ दर्दुरांकः स देवोऽथ,विशामीशं परीक्षितुम्। सम्यक्त्वं निश्चलं नेति,विचक्रे विक्रियामिमाम्॥३९०॥आनायेन मुनिर्मीनानाकर्षन्नृपतेर्नदात्। तेनादर्शि यथाऽन्यस्य, पृथग् धर्मान्मनो भवेत् ॥३९१॥ नृपस्तु निश्चलो धर्म्मे, तं निवार्य पुरे ययौ। आसन्नप्रसवा साध्वी,पुनर्देवेन दर्शिता॥३९२॥ संगोप्यैनां स्वयं राजाऽरक्षत् शासनलाघवम्। त्रिलोक्याऽपि न चाल्योऽयं, नाकिनेति सुनिश्चितम् ॥३९३॥ प्रत्यक्षीभूय तं प्राह, सुमनाः सुमना इति । शक्रोऽशंसत् सदःस्थोऽनुश्रेणिकं शुद्धदृष्टयः ॥३९४॥ स्थिरभक्तिस्तथैवासि, सम्यक् सर्वज्ञशासने। इत्युक्त्वा गोलकौ हारं, दत्त्वा देवो दिवं ययौ ॥३९५॥ अयमेवार्थः सविशेषो निशीथेऽप्युक्तः, तथाहि–रायगिहे सेणिओ राया, तस्स देविंदो संमं सम्मत्तं पसंसइ, इक्को देवो असद्दहंतो नगरबाहिं सेणियस्स पुरओ चेल्लगरूवेणं अणिमेसे गिण्हइ,तं निवारेइ,पुणो वाहडियसंजइवेसेण पुरओ ठिओ,तं अप्पसारिअं नेऊण उव्वरए पसे(च्छाइ)ऊण धरिया,

तच्छेव निकेइया, संजइसव्वपरिकम्माणि करेइ, मा उड्डाहो भविस्सइ, सो य गोमडयसरिसगंधं विउव्वइ, तहावि न विपरिणामइ, देवो तुट्ठो, दिव्वं देविड्ढिं दाइत्ता उववूहइ"त्ति॥ गृहे गत्वा ददौ हारं, चेल्लणायै नृपोऽथ तम्। नंदायै गोलकौ ताभ्यां, निर्ययौ कुंडलांशुकम्॥३९६॥ राजाऽथ कपिलामूचे, साधुस्त्वं प्रतिलंभय। तुभ्यं रामीप्सितं द्रव्यं, निग्रहीष्येऽन्यथा ध्रुवम् ॥३९७॥ साऽवोचद्यदि कुर्व्वीथा, मां सर्वस्वर्णदेहिकाम्। तिलशः खंडयेर्वाऽदः, करिष्ये न कथंचन ॥३९८॥ कालशौकरिकोऽप्येवमुक्तः पशून् न चामुचत्। राज्ञा सोऽक्षेपि साक्षेपं, निर्जलेऽंधौ जडाशयः ॥३९९॥ तत्र पंचशतीं कृत्वा, सोऽवधीन् मृन्मयान् महान्। रज्जुबद्धघटीवासौ, दिनमेकं ततो धृतः ॥४००॥ द्वितीयेऽह्नि नृपो गत्वा, प्रभुं नत्वा व्यजिज्ञपत्। शूनां स शौनिकः कल्पे, व्यमोचि ? भगवन् ! मया ॥४०१॥ स्वाम्युवाचांतरालस्थः, सोऽवधीन् मनसाऽप्यमून्। अवश्यं भाविनो भावा, न भवंत्यन्यथा नृप ! ॥४०२॥ प्रभुं नत्वा स्ववेश्मागादनेकाः शासनोन्नतीः। अकार्षीत् सुचिरं राजा, व्यहार्षीत् प्रभुरन्यतः॥४०३॥ शौनिकेनान्वहं तेन, महपंचशतीं घ्नता। सप्तमपृथिवीयोग्यं, कर्मोपार्जि यदुत्कटम् ॥४०४॥ उपमृत्यु तदायातमसंमादिव संमुखम्। तेन तस्य रुजोऽभूवन्, भूयस्यो युगपत्तनौ॥४०५॥ स सर्वांगीणयाऽऽक्रांतः,क्षुत्तृषाऽऽर्त्तोऽपि पीडया। नाश्नन्नपाच्च दीनास्योऽरारट्यत दिवानिशम् ॥४०६॥हा मातर्म्रियते तात !, हाहेत्यादि सुभैरवम्। आचक्रन्द यथाऽन्येऽपि, श्रुत्वाऽऽक्रंदान् भयार्दिताः॥४०७॥ सोऽथ तूलीसितामाल्यपंचालीवेणुमुख्यजे। रतिं कुत्रापि न प्राप, विषयैः सुंदरैरपि॥४०८॥ तत्पुत्रः सुलसस्तस्य, प्रतिकारं यथा यथा। व्यधादथ व्यथाऽत्यर्थं, वर्धते स तथा तथा ॥४०९॥ एतत्तेनातिभीतेन, भाविभद्रेण भाषितम्। अभयस्य स्फुरत्प्रौढमनीषोन्मेषशालिनः ॥४१०॥ अभयोऽप्यभ्यधाद् भद्र !, त्वत्पिता सप्तमावनिम्। यास्यत्यवश्यं तल्लेश्या, पश्य तस्येयमागता ॥४११॥ प्रतीपान्विषया-

नस्य, कुर्यास्त्वं सुखहेतवे। तथा कृतेऽथ तेनासौ, मनाक् मेने सुखासिकाम् ॥४१२॥ अहो अंहःसमूहस्य, कीदृशं हंत दृश्यते। विजृंभितं भवेऽत्रापि,सुलसो ध्यायतीत्यथ॥४१३॥ कालसौकरिको मृत्वा, सप्तम्यां नरकावनौ। नारकः सोऽप्रतिष्ठानेऽजायतोत्कृष्टदुःखभाक् ॥४१४॥ सुलसश्चान्यदा प्रोचे,स्वजनैर्जीविकाकृते। त्वयाऽधिष्ठीयतां मंक्षु, क्रमायातं पितुः पदम्॥४१५॥ सोऽवादीन् न ग्रहीष्येऽदः, पदमत्युग्रपापकृत्। चक्षुष्मान् जीविताकांक्षी, कोऽपि कूपे पतेत् किमु ?॥४१६॥ मम पित्राऽनुभूतं यद्विस्मृतं तद् द्रुतं ननु। दृष्टैतदपि यत् पापाद्, युष्माभिर्न विरम्यते ॥४१७॥ खाद्यखादकतैवात्र, न पापमिति तेऽभ्यधुः। सुलसः स्माह तन्मृत्योर्विभीयेत किमात्मभिः?॥४१८॥यथाऽऽत्मनः प्रियाः प्राणास्तथाऽन्यस्य विदन्निति। आत्मनीनो जनो हन्यात्,कथं जीवान् सुखप्रियान् ?॥४१९॥ स्वार्थैकनिष्ठास्ते प्रोचुर्यत् स्यात् ते पापमत्र तत्। वयमेव ग्रहीष्यामः, संविभज्य पृथक् पृथक्॥४२०॥ किंचैकमहिषस्कंधं,छिंद्यास्त्वं शितपर्शुना। छेत्स्यामो वयमन्येषां,तत्तेऽंहोऽपि न तादृशम्॥४२१॥ सुलसोऽपि निजान् बोद्धुं, बुद्धिधाम निजक्रमम्। अकुंठेन कुठारेण, निजघान सुनिष्ठुरम्॥४२२॥ क्षणात्तस्य क्षते तत्र,व्यथाऽत्यर्थमभूदथ। सोऽवोचत्तान् विभज्येमां, गृह्णीत स्नेहलालसाः ॥४२३॥ ऊचुस्ते शक्यते तात!, जातु लातुं प्रियैरपि। पीडाऽल्पाऽपि परस्यांगे, किं कस्यापि हि कोविद! ॥४२४॥सुलसस्तानुवाचैवं,यूयं जानीथ यद्यदः। सुतरां तन्न शक्येत,ग्रहीतुं कस्यचिद् व्यथा॥४२५॥ देही दोदूयमानोऽंगे, दर्भेणापि हि दारितः। तत् कथं शस्यते शस्त्रैर्भवद्भिर्भीरुको भवी॥४२६॥ एकश्चोत्पद्यते प्राणी, विपद्यतैक एव हि। एकः पुण्यात् स्वरेत्येकः,पतेत् पापात्तु दुर्गतिम्॥४२७॥ अनित्यं सर्वजीवानां,यौवनं जीवितं धनम्। ज्ञात्वाऽर्हद्धर्म्म एवेह, कार्यः शाश्वतसौख्यदः॥४२८॥ सुलसः स्वजनानेवमनुशिष्य विमृश्यकृत्। भूयो भूयोऽभयाभ्यर्णे, धर्म्मं शुश्राव शुद्धधीः ॥४२९॥ सम्यक् सम्यक्त्वपूतात्मा, दधार गृह-

मेधिजाम् । धन्यंमन्यो दृढधर्म्मा, कर्म्ममर्म्मप्रमर्द्दनः॥४३०॥ कुलायातामपि त्यक्त्वा, हिंसां रौद्ररुजामिव । सुलसः सात्त्विकश्रेष्ठो, विपद्य त्रिदिवं ययौ ॥४३१॥—उद्याने समवासार्षीत्, पुरे राजगृहेऽन्यदा । मुनिपंचशतीयुक्तः, सुधर्म्मा गणभृद्वरः ॥४३२॥ वंदितुं तत्पदद्वंद्वं, सर्वर्द्ध्या श्रेणिको नृपः । शासनोत्सर्पणामिच्छन्नगच्छत् सपरिच्छदः॥४३३॥ नानायानसमारूढस्तथाऽन्योऽपि पुरीजनः । भक्तिसंभारसंजातरोमांचोच्छ्वसितांगकः ॥४३४॥ एवं प्रभावनां प्रेक्ष्य, तत्रैकः काष्ठभारिकः। गत्वा तत्र गुरुं नत्वाऽश्रौषीद् धर्म्ममिमं यथा ॥४३५॥ जंतुघातो मृषास्तेयमब्रह्म च परिग्रहः । भो भो भव्या विमुच्यंतां, पंचैते पापहेतवः ॥४३६॥ इत्याकर्ण्य नरेंद्राद्या, पर्षन्नत्वा गृहेऽगमत् । द्रमकः स तु तत्रैव, स्वार्थार्थी तस्थिवान् स्थिरः॥४३७॥ गुरुस्तमूचे चित्तज्ञश्चिंतितं ब्रूहि सोऽब्रवीद् । जानामि यदि वः पादान्, वरिवस्यामि सर्व्वदा॥४३८॥ ततः प्रव्राज्य तं सद्यो, गुरवः कृतयोगिनः । अर्प्पयामासुराचारं, शिक्षयामासुराशु ते ॥४३९॥ तं गीतार्थयुतं भिक्षाचर्यायामन्यदा गतम् । प्रागवस्थाविदः पौराः, प्रेक्ष्य प्रोचुरहंयवः ॥४४०॥ अहो महर्धेस्त्यक्ताऽयं, महासत्त्वो महामुनिः । इति वक्रोक्तितः खिड्गैरुपाहस्यत सोऽन्वहम् ॥४४१॥ ततोऽसौ शैक्षकत्वाच्च, परीषहमसासहिः। सुधर्म्मस्वामिना प्रोचेऽनूचानेन वचस्विना॥४४२॥ संयमे किं समाधानमस्ति ते सुष्ठु ? सोऽभ्यधात् । अस्ति युष्मत्प्रसादात्तु, विहारोऽन्यत्र चेद् भवेत्॥४४३॥ विधास्यते समाधानं, वत्सेत्युक्त्वा गुरुस्ततः । अभयस्यागतस्याख्याद्विहारो नो भविष्यति ॥४४४॥ अभयः साह नः कस्मादकस्माद् द्रुतमीदृशः । अप्रसादोऽथ तेऽत्रोचुर्मुनेरस्य परीषहः॥४४५॥ अभयोऽप्यभ्यधादेकं, दिवसं स्थीयतां प्रभो ! । निवर्त्तेत न चेदेष, न स्थातव्यं ततः परम्॥४४६॥ एवमस्त्विति सूर्युक्तोऽभयोऽथैत्य नृपांगणे। रत्नकोटित्रयीं कृष्ट्वा, राशित्रयमकारयत् ॥४४७॥ तुष्टो राजा ददात्युच्चै रत्नकोटित्रयीं जनाः!। गृह्णीतैनां यथेष्टं तु, पटहेनेत्यघोषयत् ॥४४८॥ ततोऽमिलद् द्रुतं लोको,

लोलुभः सोऽभयेन तु । बभापे गृह्यतामेषा, रत्नकोटित्रयी मुधा ॥४४९॥ युष्माभिः स्वगृहे गत्वाऽनया किंतु गृहीतया। यावज्जीवं विमोक्तव्यं, जलमग्निः स्त्रियस्तथा ॥४५०॥ इत्याकर्ण्य जनास्तूर्णमुत्कर्णास्तद्जिघृक्षवः। विभ्यतो निश्चलास्तस्थुः, सिंहनादं मृगा इव ॥४५१॥ अभयोऽप्यभ्यधात् कस्माद्, विलंबस्तेऽप्यदोऽवदन्। लोकोत्तरमिदं लोकः, किं कश्चित्कर्तुमीश्वरः ?॥४५२॥ सोऽवदन् मुनिना तेन, त्रीण्यप्येतानि तत्यजे। तत् कुतो हसतैवं तमतिदुष्करकारकम् ॥४५३॥ न जानीमो वयं स्वामिंस्तत्सर्वैः सत्त्वमीदृशम्। तमृपिं मर्पयिष्यामस्तदिदानीं महामते !॥४५४॥ अभयेन समं गत्वा, श्रीमंतस्ते प्रणम्य तम्। महर्षिं क्षमयामासुः,स्वापराधं मुहुर्मुहुः ॥४५५॥–सभासीनोऽन्यदा राजा,जगादास्मिन् पुरे जनाः !। सांप्रतं सर्वपण्येभ्यः, समर्घं किमु लभ्यते ? ॥४५६॥ ततः समस्तसामंतमंत्रिमुख्या बभापिरे। समर्घं जांगलं देवेत्यभयोऽस्थाच्च मौनभृत् ॥४५७॥ दक्षः क्षितिपतिः प्रोचेऽभय ! त्वं किं न भापसे ?। सम्यग्विचिंत्य वक्ष्येऽहमित्युवाचाभयः सुधीः॥४५८॥ अंतरंतःपुरस्याथ, द्वितीयेऽह्न्यभयो नृपम्। प्रच्छन्नं स्थापयामास, प्रख्याप्यापाटवं तनोः ॥४५९॥ चिकित्सा क्रियतेऽस्यार्थं, प्रकाशयेति ततोऽभयः। शिक्षयित्वा नरं प्रैषीद्, वेश्मन्येकस्य मंत्रिणः॥४६०॥ तेनापि कृतसन्मानः, स राजपुरुषोऽवदत्। वरमंत्रिन् ! सुवैद्योक्तभैषज्यार्थमिहागमम्॥४६१॥ मंत्र्यप्यूचे समादेशो, दीयतामथ सोऽवदत्। स्वकालेयकमांसस्य, यवमात्रं समर्प्पय ॥४६२॥ इत्याकर्ण्य वचो भीष्मं, स मंत्री मृत्युभीलुकः। कृतांजलिपुटः प्रोचे, रक्ष मां राजवल्लभ !॥४६३॥ गृहाण भूयसीः स्वर्णकोटीर्जीवितदायक !। किं चान्येऽपि च तिष्ठंति,सामंतसचिवादयः ॥४६४॥ सोऽपि तस्योपरोधेन, वचो मेनेऽग्रहीच्च ताः। एवमन्यान्यसामंतमंत्रिभ्यः स्वर्णमाददे ॥४६५॥ मेलयित्वा बहु स्वर्णमार्प्पयत् सोऽभयाय तत्। पुंजीचकार तत् सर्वं, सोऽपि राजगृहांगणे ॥४६६॥ द्वितीयदिवसेऽकस्मात्,किल कल्योऽभवन्नृपः। निष-

साद यथास्थाने, मंगल्यानि च जज्ञिरे ॥४६७॥ स्वर्णराशिमथोत्तुंगं, मेरोः शृंगमिवामलम्। वीक्ष्य क्षोणीपतिः प्रोचेऽभयं किमिद-मीक्ष्यते ?॥४६८॥ विस्फुरत्कांतदंतांशुश्रेणिः श्रेणिकसूर्जगौ। ननु कैलाशशैलोऽयं, मांगल्यार्थमिहागमत् ॥४६९॥ राजा जगाद किं कोऽपि, त्वयाऽलुट्यत पत्तने ?। अभयः स्माह सर्वत्र, देव! सम्यग् निरूप्यताम् ॥४७०॥ नृपोऽप्युवाच पर्याप्तं, वक्रोक्त्या सुनृतं वद। सोऽप्याख्यात्पिशितं स्वामिन्!, समर्घमिति मन्यताम्॥४७१॥ किं किमेतत् नृपेणोक्ते, सोऽपि सर्वं निवेद्य तत्। ऊचे यतस्त-तस्तेन, नोच्यते तात! धीमता॥४७२॥ सामंतादींस्ततः प्रोचेऽभयो भूताभयप्रदः। आकर्णयत तत्रार्थे,सकर्ण्याः! खलु निर्णयम् ॥४७३॥ प्राणैः समं यथा मेदं, जानतोऽप्यात्मनः किल। स्वप्राणा दुस्त्यजास्तद्वदन्यस्य सुतरां पुनः॥४७४॥ तद् भो अतिमहार्घे हि, स्वमांसं त्रिजगत्यपि। तेऽप्यूचुः सत्यमेवैतद्वचस्ते धीनिधेऽभय!॥४७५॥ एवं प्रभावयन्नर्हच्छासनं चंडशासनः। श्रेणिकोऽभय-संयुक्तश्चिरं साम्राज्यमन्वशात् ॥४७६॥–अभयं श्रेणिकोऽन्येद्युः, प्रोचे राज्यं त्वमाश्रय। श्रीवीरचरणांभोजं, श्रयिष्येऽहं द्विरेफ-वत् ॥४७७॥ पितृभक्तो भवाद् भीरुर्भाविभद्रोऽभयोऽभ्यधात्। यदादिशथ तत् साधु, प्रतीक्षस्व क्षणं पुनः ॥४७८॥ प्रव्रजिष्यंति राजानस्त्यक्त्वा राज्यं कियच्चिरम्। अभयः संदिदेहैवं, शुद्धात्मबुद्धिसेवधिः ॥४७९॥ इतश्च श्रीमहावीरः, प्रव्राज्योदायनं नृपः। मरुमंडलतस्तत्राभ्यागत्य समवासरत् ॥४८०॥ दिष्ट्याऽद्य भगवानागात्, संशयोच्छेदहेतवे। ममैव केवलस्यायमिति हृष्टोऽभय-स्ततः ॥४८१॥ तत्र गत्वाऽऽशु वंदित्वा, पप्रच्छ परमेश्वरम्। राजर्षिः कोऽतिमोऽथाख्यत्,स्वामी नृपमुदायनम् ॥४८२॥ भगवंतं ततो नत्वाऽभ्येत्य श्रेणिकसन्निधौ। प्रोचे प्रणम्य पर्याप्तं,मम राज्येन सर्वथा॥४८३॥ तात! नाम्नाऽभयोऽहं तु,सभयः स्वामिवाक्यतः। यदि राजा ततो नर्षिरित्याचख्यौ जगद्गुरुः ॥४८४॥ तात! त्वदंगजस्यापि, शिरःस्थे त्रिजगत्पतौ। प्रव्रज्या यदि मे न स्यात्,

जांगलः
समर्घता

मत्तः कोऽन्योऽधमस्ततः ?॥४८५॥ तदलं मम राज्येन, व्रतविघ्नकृता ततः। राजोचे मामनापृच्छय, प्रव्राजीर्मा कदापि हि ॥४८६॥ मेने तदा पितुर्वाक्यं, प्रविव्रजिषुरप्यसौ। उत्सुका अपि धीमंतो, गुर्वाज्ञां खंडयंति न ॥४८७॥ शीतर्त्तावन्यदा राजाऽपराह्णे चेल्लणायुतः। कर्म्मारिवीरं श्रीवीरं, वंदितुं विधिवद्ययौ ॥४८८॥ वंदित्वा श्रीमदर्हंतं, वलितौ तौ तु दंपती। जलोपांते ददृशतुः, श्रमणं प्रतिमास्थितम् ॥४८९॥ अप्रावृतं च तं शीतपरीषहसहं मुनिम्। तौ दंपती ववंदाते, सपद्युत्तीर्य वाहनात् ॥४९०॥ तं क्षमाश्रमणं भक्त्या, सह पत्न्या महीपतिः। वंदित्वा स्वं ययौ गेहं, पुण्यवार्ता प्रपञ्चयन् ॥४९१॥ निर्दग्धागुरुकर्पूरधूपे भूमिपतिर्निशि। आगारेऽवसदानंदप्रदे चेल्लणया सह ॥४९२॥ निद्रायां चेल्लणादेव्याः, प्रच्छदात् पाणिपल्लवः। बहिर्बभूव शीतर्त्तौ, जजागाराशु चेल्लणा ॥४९३॥ तदा चाप्रावृतांगं तं, महर्षिं प्रतिमास्थितम्। स्मृत्वोवाचेदृशे शीते स कथं हा भविष्यति ? ॥४९४॥ साऽऽससाद पुनर्निद्रां, तथैव सरलाशया। प्रबुद्धस्तद् वचः श्रुत्वा, चिंतयामास भूपतिः ॥४९५॥ नूनमस्य मनस्यन्यो, यदेवमनुशोचति। एवमीर्ष्याकुलस्यास्य, सा रात्रिर्जाग्रतो ययौ ॥४९६॥ अंतरंतःपुरं गंतुं, प्रातरादिश्य चेल्लणाम्। आहूयाभयमित्यूचे, श्रेणिकस्तीव्रशासनः ॥४९७॥ ज्ञातमंतःपुरं रेऽद्य, दुराचारेण दूषितम्। तत् सर्वं ज्वाल्यतां मा भूर्मातृमोहाद्दनीदृशः ॥४९८॥ इत्यादिश्याभयं राजा, स्वामिनं वंदितुं ययौ। अभयो मंत्रयांचक्रे, मनीषी मनसा सह ॥४९९॥ सतीमतल्लिकाः सर्वा, मातरो मे स्वभावतः। तास्वहं सर्वदा भक्तस्ताताज्ञा पुनरीदृशी ॥५००॥ तदापि चित्रमुत्पाद्य, कालक्षेपः करिष्यते। मन्ये मत्कार्यसिद्धिश्च, प्रस्तावेऽत्र भवेद्यदि ॥५०१॥ जीर्णां करिकुटीमंतःपुरपार्श्वेऽभयस्ततः। ज्वालयामास निर्दग्धः, शुद्धांत इति घोषयन् ॥५०२॥ इतश्च श्रेणिकोऽपृच्छत्, समये परमेश्वरम्। एकपत्नी किमनेकपत्नी वा चेल्लणा प्रभो ! ॥५०३॥ स्वाम्याख्यद् धर्म्मपत्नीयमेकपत्नी महासती। मा शंकिष्ठा-

चेल्लणांत-पुरदाहात्ता

स्त्वमस्यास्तद्, वचस्तत्साधुगोचरम् ॥५०४॥ इदं च श्रेणिकः श्रुत्वा, पश्चात्तापमुपागतः। सपदि स्वामिनं नत्वा, प्रतस्थे स पुरं प्रति ॥५०५॥ तथा प्रदीपनं कृत्वाऽभ्यायांतं चाभयं नृपः। अपृच्छदसदादेशो, भवता किमनुष्ठितः ?॥५०६॥ अभयोऽप्यभ्यधाद् भीत, इव नत्वा कृतांजलिः। स्वाम्यादेशोऽपरस्यापि, प्रमाणं किं पुनर्मम॥५०७॥ राजा प्रोवाच रे पाप!, दग्ध्वा मातृजनं निजम्। जीवसि त्वं किमद्यापि ?, किं नापप्तः प्रदीपने ?॥५०८॥ स स्माह समयं ज्ञात्वा, यद्येवं देव! देहि मे। आदेशं यद्विशाम्यद्य, भावाग्नौ दुःखदाहके ॥५०९॥ एवमस्त्विति राज्ञोक्ते, स वृत्तांतमचीकथत्। हृष्टो राजाऽस्य सत्यागूश्चक्रे निष्क्रमणोत्सवम् ॥५१०॥ ततः श्रीवीरपादांते, नांदेयो नंदया सह। प्रव्रज्यां परिजग्राह, सुधीः स्वार्थाय सत्वरः ॥५११॥ अधीत्यैकादशांगानि, पालयित्वा चिरं व्रतम्। विपद्य विजये जज्ञे, देवोऽनुत्तरनामके॥५१२॥ ततश्च्युत्वा विदेहेषूत्पद्य दीक्षां ग्रहीष्यति। केवलज्ञानमासाद्य, स सिद्धिपदमेष्यति ॥५१३॥ श्रेणिकस्तु निजं राज्यं, शून्यं मेने विनाऽभयात्। देवराजो दिवो राज्यमिव वाचस्पतिं विना ॥५१४॥ सुमंगलभवे श्येनमुनिपारणभंजकं। द्वेपीव च्छिद्रमासाद्य, ढुढौके कर्म्म तस्य तत् ॥५१५॥ कालाद्यैर्दशभिः सार्धं, मंत्रयित्वा विमातृजैः। कूणिकः श्रेणिकं गुप्तौ, चिक्षेप प्राग्निदानतः ॥५१६॥ ततो राज्यमधिष्ठाय, चर्म्मयष्ट्या स निष्ठुरान्। प्रहारानन्वहं दुष्टः, पितुः पंच शतान्यदात् ॥५१७॥ अन्नपाननिरोधं च, कारयामास यामिकैः। तस्यांतरायिकं कर्म्म, सारयन्निव विस्मृतम् ॥५१८॥ श्रेणिको यामिकानूचे, क्रूरात्मा कूणिकोऽधिकम्। रौद्रमूर्त्तिर्यदाऽभ्येति, तदा शंसेत मे द्रुतम्॥५१९॥ शतायुसुरया केशानार्द्रयित्वाऽथ चेल्लणा। मापपिंडीं तदंतस्थां, कृत्वा गत्वा नृपांतिके ॥५२०॥ अभोजयन्नृपं मापान्, धावित्वा कबरीपयः। अपाययच्च येन स्यात्, घातान् सोढुं क्षमस्तकान् ॥५२१॥ कूणिकस्य नरेन्द्रस्य, भुंजानस्यान्यदा मुदा। देवीपद्मावतीजात, उदायीनामनंदनः ॥५२२॥ अंकस्थोऽ-

मूत्रयत् स्थाले, त्यक्त्वाऽन्नं मूत्रमिश्रितम्। तथैव बुभुजे राजाऽपश्यन् मातृमुखं मुहुः॥५२३॥ बभाषेऽम्बां च विश्वेऽस्मिन्नान्यस्यापि हि कस्यचित्। प्रियः पुत्रो ममेवास्ति, ततस्तं चेल्लणाऽब्रवीत् ॥५२४॥ रे रे मर्त्यब्रुवोऽसि त्वं, किमेवं स्वं प्रशंससि ?। पितुः प्रियो यथाऽभूस्त्वं, तादृगन्यो न कस्यचित् ॥५२५॥ यः स्वास्ये शैशवेऽक्षैप्सीत्, पूयक्लिन्नां तवांगुलिम्। पितुस्तस्य कृतघ्नेन,सुप्रत्युपकृतं त्वया ॥५२६॥ श्रुत्वा मातृमुखादात्मोत्पत्तिं मातृमुखोऽथ सः। स्वं निंदन्नभ्युदस्थाद् द्राक्, मुमुक्षुः पितरं निजम् ॥५२७॥ दधावे रंहसोद्यम्य, लोहदंडं कृतांतवत्। आक्रष्टुं श्रेणिकं गुप्तेर्भंक्त्वा तत्काष्ठपंजरम् ॥५२८॥ प्रेक्ष्य प्राहरिकैर्मंक्षु, शशंसे श्रेणिकाय सः। विद्युद्दंड इवासह्यः, स्वामिन्नायाति ते सुतः ॥५२९॥ मारयिष्यति मामेव, दुरात्मा कृतघ्ना(हा)ग्रणीः। विडंब्येति नृपो ध्यात्वा, प्राशीत्तालपुटं विषम् ॥५३०॥ प्राग्बद्धायुष्कतायोगाद्विपद्य श्रेणिकस्ततः। प्रथमप्रस्तटे रत्नप्रभायां नारकोऽभवत् ॥५३१॥ परासुं श्रेणिकं प्रेक्ष्य, तत्रायातोऽथ कूणिकः। आक्रंदन् कारयामास,श्रेणिकस्यौर्ध्वदेहिकम् ॥५३२॥ मंत्रिभिर्विप्रलब्धोऽथ,सशोकः कूणिको नृपः। पिंडपातादिकार्येषु, पितृतृप्त्यै प्रवर्तितः॥५३३॥ निवेश्य सोऽन्यदा चंपां,त्रिखंडेशोऽन्यदा विभुम्। पप्रच्छाविरतश्चक्री, मृत्वा-क्वेति ? प्रभुर्जगौ ॥५३४॥ सप्तमे नरके सोऽथ, प्रोचे क्वाहं गमी विभुः ?। षष्ठे इत्यवदद्यत्त्वं, न चतुर्दशरत्नभृत् ॥५३५॥ सोऽथ कूटानि रत्नानि, कृत्वा वैताढ्यमासदत्। तमिस्रे स हतः षष्ठं, नरकं कूणिकोऽगमत् ॥५३६॥ उदायीनृपतिर्जज्ञे, ततः, कूणिकराट्-सुतः। चंपापुर्यां प्रचंडाज्ञस्त्रिखंडभरताधिपः ॥५३७॥ सोऽन्यदा पाटलीपुत्रं, कृत्वा तत्र कृतस्थितिः। जिनधर्म्मोद्यतः प्राज्यं, साम्राज्यं सुचिरं व्यधात् ॥५३८॥ श्रीवीरं पुर्यपापायां, निर्वाणसमयेऽन्यदा। मंडलेशः पुण्यपालो,नत्वाऽप्राक्षीदिदं यथा ॥५३९॥ प्रश्नश्चायं यथाऽभाणि, प्रभुश्रीहेमसूरिभिः। तथैव लिख्यतेऽस्माभिस्तद्वचः कस्य नो मतम् ? ॥५४०॥ स्वामिन् ! स्वप्ना मयाऽ-

श्रेणिकमरणं कौणिक-गतिः

द्याष्टौ, दृष्टास्तत्र गजः१ कपिः२ । क्षीरद्रुः३ काक४ सिंहा५ ब्ज६ बीज७ कुंभा इमे क्रमात् ॥५४१॥ तथाऽऽख्याहि फलं तेषां, भीतोऽस्मि भगवन्नहम् । इति पृष्टो जगन्नाथो,व्याचकारेति तत्फलम् ॥५४२॥ विवेकवंतो भूत्वाऽपि,हस्तितुल्या अतः परम् । वत्स्यंति श्रावका लुब्धाः, क्षणकार्धिसुखे गृहे ॥५४३॥ न दौस्थ्येऽन्यस्वचक्रे वा, प्रव्रजिष्यंत्युपस्थिते । आत्तामपि परिव्रज्यां, त्यक्ष्यंति च कुसंगतः ॥५४४॥ विरलाः पालयिष्यंति, कुसंगेऽपि व्रतं खलु । इदं गजस्वप्नफलं, कपिस्वप्नफलं त्वदः ॥५४५॥ प्रायः कपिसमा लोलपरिणामाल्पसत्त्वकाः । आचार्यमुख्या गच्छस्थाः, प्रमादं गामिनो व्रते ॥५४६॥ ते विपर्यासयिष्यंति, धर्म्मस्थानितरानपि । भाविनो विरला एव, धर्म्मोद्योगपराः पुनः ॥५४७॥ धर्म्मश्लथेषु ये शिक्षां, प्रदास्यन्त्यप्रमादिनः। ते तैरुपहसिष्यन्ते, ग्राम्यैर्ग्रामस्थपौरवत् ॥५४८॥ इत्थं प्रवचनावज्ञाऽतः परं हि भविष्यति । प्लवंगमस्वप्नफलमिदं जानीहि पार्थिव !॥५४९॥ क्षीरद्रुतुल्याः सुक्षेत्रे, दातारः शासनार्चकाः। श्रावकास्ते तु रोत्स्यन्ते, लिङ्गिभिर्वञ्चनापरैः॥५५०॥ तेषां च प्रतिभास्यंति, सिंहसत्त्वभृतोऽपि हि। महर्षयः सारमेया, इवासारमतिस्पृशाम्॥५५१॥ आदास्यंते सुविहितविहारक्षेत्रपद्धतिम् । लिङ्गिनो बब्बूलरामाः,क्षीरद्रुफलमीदृशम् ॥५५२॥ ततोऽन्यगच्छिकैः सूरिप्रभुधृष्टस्वभावा मुनयः, प्रायो धर्मार्थिनोऽपि हि। रंस्यन्ते नहि गच्छेषु, दीर्घिकांभःस्विव ढिकाः ॥५५३॥ ततोऽन्यगच्छिकैः सूरिप्रभु- ख्यैर्वंचनापरैः । मृगतृष्णानिभैः सार्धं, चलिष्यन्ति जडाशयाः॥५५४॥ न युक्तमेभिर्गमनमिति तत्रोपदेशकान् । बाधयिष्यन्ते नितांतं, काकस्वप्नफलं ह्यदः॥५५५॥ सिंहतुल्यं जिनमतं, जातिस्मृत्यादिसुस्थितम् । विपत्स्यतेऽस्मिन् भरतावनौ धर्मज्ञवर्जिते ॥५५६॥ न कुतीर्थिकतिर्यचोऽभिभविष्यंति जातुचित् । स्रोत्पन्नकृमिवत् किंतु, लिंगिनोऽशुद्धबुद्धयः ॥५५७॥ लिंगिनोऽपि प्राक् प्रभावाच्,छ्वापदाभैः कुतीर्थिकैः । न जात्वभिभविष्यंति,सिंहस्वप्नफलं ह्यदः॥५५८॥ अब्जाकरेष्वंबुजानि,सुगंधानीव देहिनः। धर्म्मिका

न भविष्यंति,संजाताः सुकुलेष्वपि॥५५९॥ अपि धर्म्मपरा भूत्वा,भविष्यंति कुसंगतः। ग्रामावकरकोत्पन्नगर्द्दभाब्जवदन्यथा॥५६०॥ कुदेशे कुकुले जाता, धर्म्मस्था अपि भाविनः। हीना इत्यनुपादेयाः, पद्मस्वप्नफलं ह्यदः॥५६१॥ यथा फलायाबीजानि, कर्षुर्वुद्ध्वो परे वपेत्। तथा वप्स्यंत्यकल्प्यानि, कुपात्रे कल्प्यबुद्धितः॥५६२॥ यद्वा घुणाक्षरन्यायाद्यथा कोऽपि कृषीवलः। अबीजांतर्गतं बीजं, वपेत् क्षेत्रे निराशयः ॥५६३॥ अकल्प्यांतर्ग्गतं कल्प्यमज्ञाताः श्रावकास्तथा। पात्रे दानं करिष्यंति, बीजस्वप्नफलं ह्यदः ॥५६४॥ क्षमादिगुणपद्मांकाः, सुचरित्रांबुपूरिताः। रहःस्था भाविनः कुंभा, इव स्तोका महर्षयः॥५६५॥ श्लथाचारचरित्राश्च,कलशा मलिना इव। यत्र तत्र भविष्यंति, बहवो लिंगिनः पुनः ॥५६६॥ समत्सराः करिष्यंति, कलहं ते महर्षिभिः। उभयेषामपि तेषां, साम्यं लोके भविष्यति ॥५६७॥ गीतार्था लिंगिनश्च स्युः, साम्येन व्यवहारिणः। जनेन ग्रथिलेनेवाग्रथिलोऽभूद्यथा नृपः॥५६८॥ तथा हि पृथिवीपुर्यां, पूर्णो नाम महीपतिः। सुबुद्धिस्तस्य चामात्यो, निधानं बुद्धिसंपदः ॥५६९॥ कालं तेनागमिष्यंतं, पृष्टोऽन्येद्युः सुबुद्धिना। लोकदेवाभिधोऽनेन, नैमित्तिकवरोऽवदत् ॥५७०॥ मासादनंतरं मेघो, वर्षिता तद्जलं पुनः। यः पास्यति स सर्वोऽपि, ग्रहग्रस्तो भविष्यति ॥५७१॥ कियत्यपि गते काले, सुवृष्टिश्च भविष्यति। पुनः सज्ञा भविष्यंति, तत्पयःपानतो जनाः ॥५७२॥ राज्ञो मंत्री तदाचख्यौ, राजाऽप्यानकताडनात्। आख्यापयद् जने वारिसंग्रहार्थमथादिशत् ॥५७३॥ लोकोऽपि हि तथा चक्रे, ववर्षोक्तेऽह्नि चांबुदः। कियत्यपि गते काले, संग्रहीतांबु निष्ठितम् ॥५७४॥ अक्षीणसंग्रहांभस्कौ, राजामात्यौ तु तौ विना। नवांबु लोकाः सामंतप्रमुखाश्च पपुस्ततः ॥५७५॥ तत्पानाद् ग्रथिलाः सर्वे, ननृतुर्जहसुर्जगुः। स्वैरं चिचेष्टिरेऽन्यच्च, विना तौ राजमंत्रिणौ ॥५७६॥ जनाः सर्वे सामंताद्या, ननृतुर्जहसुर्जगुः। स्वैरं चिचेष्टिरेऽन्यच्च, विना तौ राजमंत्रिणौ ॥५७७॥ राजामात्यैर्विसदृशौ,

सामंताद्या निरीक्ष्य तौ। मंत्रयांचक्रिरे नूनं, ग्रथिलौ राजमंत्रिणौ ॥५७८॥ असद्विलक्षणाचाराविमकावपसार्य तत्। अपरौ स्थापयिष्यामः, स्वोचितौ राजमंत्रिणौ ॥५७९॥ मंत्री ज्ञात्वेति तन्मंत्रं, नृपायाख्यान्नृपोऽवदत्। आत्मरक्षा कथं कार्या, तेभ्यो वृंदं हि राजवत् ॥५८०॥ मंत्र्यूचे ग्रथिलीभूय, स्थातव्यं ग्रथिलैः सह। त्राणोपायो न कोऽप्यन्य, इदं हि समयोचितम् ॥५८१॥ कृत्रिमग्रथिलीभूय, ततस्तौ राजमंत्रिणौ। तेषां मध्ये ववृताते, रक्षंतौ निजसंपदम् ॥५८२॥ ततः सुसमये जाते, शुभवृष्टौ नवोदके। पीते सर्वेऽभवन् स्वस्था, मूलप्रकृतिधारिणः ॥५८३॥ एवं च दुष्षमाकाले, गीतार्था लिंगिभिः सह। सदृशीभूय वर्त्स्यंति, भाविस्वसमयेच्छवः ॥५८४॥ इति श्रुत्वा स्वप्नफलं, पुण्यपालो महामनाः। प्रबुद्धः प्राव्रजत्तत्र, क्रमान् मोक्षमियाय च॥५८५॥ अथेन्द्रभूतिः श्रीवीरं, नत्वाऽप्राक्षीत् कृतांजलिः। एष्यत्कालस्वरूपं तु, शलाकापुरुषान्वितम् ॥५८६॥ स्वाम्युवाच गतैः पक्षैर्नवत्या मम निर्वृतेः। प्रवर्त्स्यति तथैकोनैः, पंचमो दुष्षमारकः ॥५८७॥ तथांते केवलं भावि, मन्निर्वाणाच्च गौतमे। द्वादशाब्दास्ततोऽप्यष्टौ, वत्सराणि सुधर्म्मणः ॥५८८॥ भावी तस्य विनेयस्तु, जंबुश्चरमकेवली। वत्सराणि चतुश्चत्वारिंशतं सर्वविन्नभूत्॥५८९॥ व्युच्छेत्स्यंत्यत्र चैतानि, दश स्थानानि तद्यथा। आहारकपुलाकाख्ये,द्वे लब्धी परमावधिः॥५९०॥ क्षपकोपशमश्रेण्यौ, मनःपर्यवकेवलौ। संयमत्रिकमंत्यं च, जिनकल्पमहोदयौ ॥५९१॥ भाविनः षट् प्रभवाद्याः, श्रुतकेवलिनः क्रमात्। अत्र चांत्या चतुष्पुर्व्वी, स्थूलभद्रेऽतमेष्यति॥५९२॥ महाप्राणं च संस्थानमाद्यसंहननं तथा। मम मोक्षाद् गते वर्षशते सप्ततिसंयुते ॥५९३॥ महागिरिसुहस्त्याद्या, भूरयः सूरयस्ततः। गणभृद्वज्रपर्यंता, भाविनो दशपूर्विणः॥५९४॥ दशपूर्व्या व्यवच्छेदस्तुर्यसंहननस्य च। षोडशाब्दोनषड्वर्षशत्या तत्र भविष्यति॥५९५॥ दशवर्षशतांतेऽतो, भावी पूर्वगतस्य तु। क्रमादेकादशांग्याश्च,समं छेदश्रुतेन तु॥५९६॥ पंचमासोत्तरे-

ऽप्यष्टाविंशत्यब्दयुतेषु च । मम मोक्षाद् गतेष्वब्दशतेष्वेकोनविंशतौ॥५९७॥ भावी म्लेच्छकुले राजा, विष्टौ चैत्राष्टमीदिने । त्रिनामा पाटलीपुत्रे, कल्की रुद्रश्चतुर्मुखः ॥५९८॥ मथुरापुरि कृष्णस्य, तदा देवकुलं महत् । अकस्मात् पवनोद्धूतं, जीर्णद्रुवत् पतिष्यति ॥५९९॥ दुर्भिक्षडमरावृष्टिचौरेतिभयविह्वलाः । भविष्यंति जनास्तस्मिन्, नृपे क्रूरतराशये ॥६००॥ कौमारेऽष्टादशाब्दानि, तावंत्येव च दिग्जये । ततो निष्कंटकं राज्यं, कल्किनो हि भविष्यति ॥६०१॥ नंदस्य सोऽन्यदा स्तूपान्, पंच प्रेक्ष्यातिलोलुपः। खानयित्वा च तान् सर्वान्, भूरि स्वर्णं ग्रहीष्यति ॥६०२॥ धनाय यावत् सर्वस्मिन्, खन्यमानेऽथ तत्पुरे । गौः पाषाणमयी दैवादुत्थास्यति चतुष्पथे ॥६०३॥ घट्टयिष्यति सा साधून्, व्रजतस्तेन वर्त्मना । जलोपसर्गमासन्नं, ज्ञास्यंति स्थविरास्ततः ॥६०४॥ ज्ञात्वेति केचिदन्यत्र, विहरिष्यंति साधवः। स्थास्यंत्यन्ये तु तत्रैव, पानान्नादिषु गृध्नवः ॥६०५॥ सर्वे पाखंडिनोऽन्येद्युः, कल्किना याचिताः करम् । ददुर्यथार्थितं तस्मै, ते यस्मात् सपरिग्रहाः ॥६०६॥ साधवोऽप्यर्थितास्तेनाभ्यधुर्धर्म्मधना वयम् । धर्म्मलाभं विना राजन् !, दद्मः किं तेऽन्यदुत्तमम् ? ॥६०७॥ पुराणेषूदितं किंच, पालयन् व्रतपालकान् । साधूंस्तत्पुण्यषष्ठांशभाजनं भूपतिर्भवेत् ॥६०८॥ दुष्कर्म्मणस्तदस्मात् त्वं, विरम क्षेममर्दनात् । एवमुक्तेऽपि तैरेष, भावी भृकुटिभीषणः ॥६०९॥ पूर्देवता ततोऽवक्ष्यत्, रे रे किं त्वं मुमूर्षसि ? । कल्किन्नकिंचनान् पूज्यान्, यदेवं याचसे यतीन् ॥६१०॥ भीतस्ततो मुनीनेष, क्षमयित्वा विमोक्ष्यति । अथोत्पाता भविष्यंति, नगरक्षयसूचकाः ॥६११॥ तत्र सप्तदशाहानि, वर्षिष्यति घनस्ततः । उद्धृत्य तत्पुरं गंगाप्रवाहः प्लावयिष्यति ॥६१२॥ तत्र प्रातिपदः सूरिः, संघलोकोऽपि कोऽपि च । स्थाने स्थास्यति कल्की च, पुरलोकोऽपि कश्चन ॥६१३॥ निवृत्ते च पयःपूरे, करिष्यति नवं पुरम् । नंदद्रव्येण तेनोच्चैः, कल्की केतुरिवोत्कटः ॥६१४॥ भविष्यंति जिनौकांसि, चरिष्यंति

महर्षयः। सुभिक्षं भावि पंचाशद्वत्सराणि निरंतरं ॥६१५॥ अथासन्नमृतिः कल्की, लिंगानि त्याजयिष्यति। सपत्राकृतिपात्रं च, करिष्यति कुलिंगिनः ॥६१६॥ क्षिप्त्वा प्रातिपदाचार्यं, ससंघं वृषवाटके। मार्गयिष्यति भिक्षायाः, षष्ठभागं स दुष्टधीः ॥६१७॥ संघः शक्रं समाराद्धुं, कायोत्सर्गं विधास्यति। कृतविप्राकृतिः क्षिप्रं, ततः सोऽत्रैत्य वक्ष्यति॥६१८॥ कल्किन्नरौत्सीः किं साधून्, कल्कपंकाकलंकितान्? । स वक्ष्यति न मे रांति, भिक्षाषष्ठांशमप्यमी॥६१९॥ शक्रो भाषिष्यते नैते, किंचिद्दास्यंति निर्ममाः। तन्मुंचामून् द्रुतं नत्वा, भाव्यनर्थस्तु तेऽन्यथा ॥६२०॥ जल्पिष्यत्यथ जल्पाकः, कल्की कुप्यन्नरे भटाः!। अपसारयत क्षिप्रं, विप्रं धृत्वा गले दृढम्॥६२१॥ ततः शक्रोऽपि सक्रोधः, कल्किनं कल्कमंदिरम्। चपेटामुत्कटां दत्त्वा, द्राग् भस्मसात् करिष्यति॥६२२॥ आयुः संपूर्य राजाऽसौ, षडशीतिसमास्ततः। भविष्यति दुरंतायां, नारको नरकावनौ ॥६२३॥ दत्ताख्यं कल्किनः पुत्रं, विधाय परमार्हतम्। स्थापयित्वा च तद्राज्ये, संघं नत्वा गमी हरिः ॥६२४॥ दत्तो धर्म्मैकचित्तोऽथ, पितुः पापफलं स्मरन्। करिष्यति महीमेनां, जिनायतनमंडिताम् ॥६२५॥ जितशत्रुयथाख्यातस्तत्पुत्रो भविता नृपः। तस्यापि चौघघोषाख्यो, जिनसाधुकृतार्चनः ॥६२६॥ भविताऽन्यान्यभूपानां, यावद् विमलवाहनः। भविता दुष्षमारांते, तावद् धर्म्मश्च संततम् ॥६२७॥ इदं च भरतक्षेत्र-मर्हत्काले पुराऽभवत्। ग्रामारामपुराकीर्णं, श्रिया स्वर्लोकसन्निभम् ॥६२८॥ ग्रामा नगरवद्रम्याः, स्वःपुराणीव तानि तु। कुटुंबिनो नृपौपम्या, नृपास्तु धनदोपमाः॥६२९॥ आचार्याश्चंद्रमस्तुल्याः, पितरो देवतानिभाः। जननीजनकश्वश्रूश्वशुरा जनका इव॥६३०॥ सत्यशौचार्जवक्षांतिविनयादिगुणान्वितः। सुशीलः सुकुलीनश्च, राजन्वांश्च जनस्तदा ॥६३१॥ कालो यथा यथा गामी, दुष्षमायामतः परम्। निर्धर्म्मस्त्यक्तमर्यादो, भावी लोकस्तदा तदा ॥ ६३२ ॥ मिथ्यात्वमोहितमतिर्दयादाक्षिण्यवर्जितः। अविनीतो

जनः क्रूरः, कृतघ्नश्च भविष्यति ॥६३३॥ ग्रामाः पितृवनप्रायाः, पुराणि प्रेतलोकवत् । कुटुंबिनोऽतिभृत्याश्च, कृतांतप्रतिमा नृपाः ॥६३४॥ लुब्धा लास्यंति निष्पीड्य, द्रव्यमेते नियोगिनः । तेऽपि लोकांस्ततो भावी, तिमिंतिमिंगिलक्रमः ॥६३५॥ चौराश्चौर्येण लुट्यंति, भूम्या भूमिभुजः करैः । देशांश्चांदोलयिष्यंति, वातोद्धूतवहित्रवत्॥६३६॥ पितॄन् देवान् गुरूंश्चापि, मानयिष्यंति मानवाः। न प्रत्यक्षीभविष्यंति, देवा देव्यो यथा तथा ॥६३७॥ मनोवाक्कायकौटिल्यात्, स्नुषाः स्युः सर्प्पिणीसमाः। कालरात्रिसमाः श्वश्रूस्ताः प्रति क्रूरकर्म्मभिः ॥६३८॥ विलासैर्हसनैर्वेषैः, कटाक्षैर्वक्रभाषणैः । गणिका इव निर्लज्जा, भविष्यंति कुलस्त्रियः ॥६३९॥ विरोधो भविता भूयान्, जने स्वार्थैकतत्परे । धर्म्मकर्म्मप्रमादश्च, बहुजीवाकुला च भूः ॥६४०॥ कूटक्रयतुलामानैर्जनो विश्वस्तघातकः । धर्म्मोऽपि भविता शौचमविश्वासः सुहृत्स्वपि ॥६४१॥ अकाले वर्षिता काले, न वार्षिष्यति वारिदः । सज्जना भाविनो दुःस्था, दुर्ज्जनाः सुस्थिताः पुनः॥६४२॥ ज्ञानश्रद्धानविज्ञानध्यानधर्म्मधनायुषाम् । मणिमंत्रौषधादीनां, फलपुष्परसौजसाम्॥६४३॥ गात्रोच्चत्वस्य रूपस्य, क्रमाद्धानिर्भविष्यति । अन्येषामपि भावानां, शुभानां पंचमे ह्यरे ॥६४४॥ षष्ठेऽधिकतरा त्वेवं, ज्ञात्वा यो धर्म्मकर्म्मणि । समुद्यंस्यति तस्यैव, सफलं जन्म जीवितम् ॥६४५॥ सुधर्म्माद्या भविष्यंत्याचार्या दुष्प्रसहांतिमाः । युगप्रधानताभाजो, द्वौ सहस्रौ चतुर्युतौ ॥६४६॥ सूरिर्दुष्प्रसहो नाम, फल्गुश्रीश्च प्रवर्त्तिनी । श्रावको नायलाभिख्यः, सत्यश्रीश्राविका तथा ॥६४७॥ संघोऽयं भरते भावी, राजा विमलवाहनः। धीसखः सुमुखश्चांत्योऽवसर्प्पिण्यां हि गौतमः ॥६४८॥ तदारतस्तु यः कश्चिद्, धर्म्मो नास्तीति वक्ष्यति। संघेन गुणसंघेन, स कार्यः संघतो बहिः ॥६४९॥ सोऽथ दुष्प्रसहः स्वर्गात्, च्युतो द्वादशवार्षिकः। प्रव्रजिष्यति तस्याष्टौ, समास्तु भविता व्रतम् ॥६५०॥ नंदीमावश्यकं चानुयोगद्वाराण्यसौ तथा । दशवैकालिकं जीतकल्पं चाध्येष्यते

सुधीः ॥६५१॥ स चतुर्दशपूर्व्वीव, तीर्थस्यास्य प्रवर्त्तकः। शक्रेणार्च्चिष्यतेऽभीक्ष्णं, लोकपालैश्च भक्तितः ॥६५२॥ हस्तद्वयोच्छ्रितं गात्रमायुर्विंशतिवत्सरी। तपश्च षष्ठमुत्कृष्टं, संघस्यास्य भविष्यति ॥६५३॥ दुष्षमांते स आचार्यो, विपद्याष्टमभक्तभृत्। सौधर्म्मे त्रिदशो भावी, विमाने सागराभिधे ॥६५४॥ च्युत्वा तस्मादसौ प्राप्य, भरतेऽत्र मनुष्यताम्। चारित्रं निरतीचारमाचर्य शिवमेष्यति ॥६५५॥धर्म्मस्याद्ये यमे छेदस्तत्राचार्ये दिवंगते। राजधर्म्मस्य मध्याह्ने, पराह्णेऽग्नेर्भविष्यति ॥६५६॥ इत्युक्ता दुष्षमा वर्षसहस्राण्येकविंशतिः। श्रूयतां गौतमेदानीं, तावत्येवातिदुष्षमा ॥६५७॥ नष्टे धर्म्मादिके भावी, हाहाभूतो भयानकः। कालः षष्ठारके मातृपुत्रादिस्थितिवर्जितः ॥६५८॥ वास्यंति वायवोऽनिष्टाः, परुषाः पांशुवर्षिणः। दिवानिशं दिशो धूमायिष्यंते भीषणात्मिकाः ॥६५९॥ अतिशीतं शशी स्रक्ष्यत्यादित्याश्चातितप्स्यति। शीतवातातपक्रांतो ,जनोऽतिक्लेशमाप्स्यति ॥६६०॥ वर्षिष्यंते तदाऽत्यर्थं, क्षाराम्लाख्या घनाघनाः। विषाग्निविद्युदाख्याश्च, स्वस्वनामानुसारि कम्॥६६१॥ येन स्पृष्टेन पीतेन,जनानां भाविनो घनाः। शिरोऽर्त्तिश्वासशूलार्शःकासश्वासादयो गदाः ॥६६२॥ तृणगुल्मलतादीनां, भविष्यति ततः क्षयः। नृतिर्यंचो भविष्यंति, तथा सर्वेऽपि दुःखिताः ॥६६३॥ वैताढ्यर्षभकूटाद्री, गंगासिंधू च निम्नगे। मुक्त्वाऽन्यद् गिरिगर्त्तादि, भविष्यति समं समम्॥६६४॥ भस्मरूपा तदा भूमिर्मुर्मुरांगारसन्निभा। कदाचित्कर्दमाकीर्णा, कदाचिद् वह्निदुर्ग्गमा ॥६६५॥ विद्यंते चोपवैताढ्यं, गंगासिंध्वोस्तटे तटे। बिलानि नव सर्वाणि, द्वियुक्ता सप्ततिस्ततः ॥६६६॥ तत्र स्थास्यंति ते मर्त्याः, कुवर्णाः कर्कशोक्तयः। क्रोधनाश्च कुसंस्थाना, एकहस्तसमुच्छ्रयाः ॥६६७॥ निर्वस्त्रा निस्त्रपाः क्रूरा, नरा नार्यश्च भाविनः। विंशत्यब्दी नृणामायुः,स्त्रीणां षोडशवत्सरी ॥६६८॥ तदाऽतिदुःखप्रसवा, पह्वर्पोदरिणी तथा। अनेकपुत्रपौत्रा स्त्री, वृद्धा षोडशवार्षिकी॥६६९॥ मांसासिनो मनुष्यास्ते, निष्कृपा निर्विवेककाः।

बीजमात्रं तु तिर्यंचस्तदा तत्रैव भाविनः ॥६७०॥ गंगासिंधुसरित्तोयं, तदा रथपथप्रमम् । प्रवक्ष्यति तथा मत्स्यनक्रचक्रकुलाकुलम् ॥६७१॥ रात्रौ तत्रैत्य मत्स्यादीन्, कृष्ट्वा मोक्ष्यंति ते स्थले। दिवार्कतापपक्कांस्तान्, भोक्ष्यंते च निशांतरे ॥६७२॥ ते कृत्वेत्यधमेष्यंति, तिर्यक्षु नरकेषु च। षष्ठोऽरो भवितेत्यब्दसहस्राण्येकविंशतिम् ॥६७३॥ यादृशाववसर्प्पिण्यावंत्योपांत्याविमावरौ । तावंतौ तादृशावुत्सर्प्पिण्यामाद्यद्वितीयकौ ॥६७४॥ तत्र प्रथमकारांते, पंचाप्येते घनाघनाः। सप्त सप्त दिनान्यत्र, वर्षिष्यंति पृथक् पृथक्॥६७५॥ ते च पुष्करदुग्धाज्यपीयूषरसनामकाः। भूशैत्यधान्यसुस्नेहौषधीरसविधायिनः ॥६७६॥ द्रुमौषधिलतादीनि,निरीक्ष्य विलवासिनः । निर्यास्यंति विलेभ्यस्ते, हृष्टा गुप्तिगृहादिव ॥६७७॥ वक्ष्यंतीतः परं मांसं, न भक्ष्यं यस्तु भक्षिता । स त्याज्योऽन्त्यजवच्चेति, करिष्यंति व्यवस्थितिम् ॥६७८॥ कालो यथा यथा गामी, वर्धिष्यंते तथा तथा । वपुःशक्तिसुखायूंषि, धनधान्यादिकानि च ॥६७९॥ यादृक्षे भरतेऽमुष्मिन्, कालस्तादृक्ष एव हि। अन्येषु भरतेष्वैरवतेष्वपि च सर्वदा ॥६८०॥ ततः कुलकराः सप्त, दुष्षमांतेऽत्र भारते। भाविनो गौतमैतेषामाद्यो विमलवाहनः ॥६८१॥ द्वैतीयीकः सुदामाख्यस्तृतीयः संगमाभिधः । तुर्यः सुपार्श्वनामा च, पंचमो दत्तनामकः॥६८२॥ षष्ठस्तु सुमुखाभिख्यः, संमुचिश्चेति सप्तमः। पूर्वोऽमीषां पुनर्भावी,जातजातिस्मृतिः स तु॥६८३॥ संग्रहीष्यति हस्त्यादीन्, ग्रामादीन् रचयिष्यति। नीतिशिल्पकलादींश्च, प्रजानां दर्शयिष्यति ॥६८४॥ इत्युक्तं दुष्षमादीनां,स्वरूपं तव गौतम!। शलाकापुरुषानेवं, भाविनस्त्वधुना शृणु॥६८५॥ सप्ताब्दपंचमास्यां चतुरशीतौ च गौतम!। वत्सराणां सहस्रेषु, गतेषु मम निर्वृतेः ॥६८६॥ उत्सर्प्पिण्यास्तृतीयारे, भविष्यंत्या गतेष्विह । सार्धेष्वष्टसु मासेषु,त्रिषु संवत्सरेषु च ॥६८७॥ अत्रैव पुंड्रदेशेषु, शतद्वाराभिधे पुरे। संमुचेर्नृपतेः पत्नी, भद्रानाम्नी भविष्यति ॥६८८॥ तदा श्रेणिकराड्जीवो, भयात्

कूणिकभूपतेः। भुक्त्वा तालपुटं रत्नप्रभायामुदपादि यः ॥६८९॥ तत्राद्यप्रस्तटे सीमंतके च नरकेंद्रके। आयुश्चतुरशीत्यब्दसहस्रा-ण्यतिवाह्य सः ॥६९०॥ तत्तत्प्रभावनाप्राप्तप्राज्यपुण्यप्रभावतः। विश्वं विश्वं समुद्धर्तुमिव दुर्ग्गमदुर्ग्गतेः ॥६९१॥ समुद्धृत्य ततो मासे, शुचौ पक्षे सिते तथा। निशीथसमये पष्ठ्यां, चंद्रे हस्तोत्तरागते ॥६९२॥ ज्ञानत्रयपवित्रात्मा, त्राता त्रिजगतामपि। देव्या-स्तस्याः सुतत्वेन, कुक्षाववतरिष्यति ॥६९३॥ भद्रा प्रशस्तसंपूर्णदोहदा समये सुतम्। चैत्रशुद्धत्रयोदश्यां, निशीथे जनयिष्यति ॥६९४॥ विधिवद्दिक्कुमारीभिः, सूतिकर्म्मणि निर्मिते। जिनेंद्रं स्नपयिष्यंति, सुमेरौ सर्ववासवाः ॥६९५॥ पद्मगर्भसमागस्य, तस्य जन्मोत्सवं पिता। विधायाधास्यते पद्मनाभ इत्यभिधां शुभाम् ॥६९६॥ निवेशयिष्यते राज्ये, पितृभ्यां सोऽष्टवार्षिकः। पूर्णभद्रा-भिधोऽन्येद्युर्माणिभद्राभिधस्तथा ॥६९७॥ महर्धिकौ सुरौ तस्य, सेनानीत्वं करिष्यतः। ततोऽस्य भावि नामान्यत्, देवसेन इति स्फुटम् ॥६९८॥ श्वेतवर्णश्चतुर्द्दंतो, विमलः शंखकुंदवत्। करिरत्नं महामानं, भविता चास्य वाहनम् ॥६९९॥ वक्ष्यतेऽसौ ततो लो-कैर्नाम्ना विमलवाहनः। इति नामत्रयख्यातश्चिरं राज्यं करिष्यति ॥७००॥ दत्त्वाऽसौ वार्षिकं दानं, पित्रोर्गतवतोर्दिवम्। दशम्यां मार्गशीर्षस्य, कृष्णायां प्रव्रजिष्यति ॥७०१॥ विहृत्य सातिरेकां स, द्वादशाब्दीं प्रथमोऽर्हन्। राधशुद्धदशम्यां तु, लप्स्यते केवल-श्रियम् ॥७०२॥ सप्रतिक्रमणं धर्म्ममचेलं पंचयामिकम्। यथाऽहं कथयामास, कथयिष्यत्यसौ तथा॥७०३॥ मया यथा महाराजा, अष्टौ प्रव्राजिताः किल। प्रव्राजिष्यति स तथा, पद्मनाभजिनोऽपि हि ॥७०४॥ स्वर्णरुक् सप्तहस्तोच्चस्त्रिंशद्वर्षाणि केवली। विहृत्य दर्शयामिन्यां, कार्त्तिके शिवमेष्यति ॥७०५॥ मत्तुल्योऽयं यथा भावी, वर्धमानादिना जिनः। पार्श्वादिसदृशोऽन्येऽपि, प्रतीपं भा-विनस्तथा। ७०६॥ तेषां नामानि कथ्यंते, जीवाः पूर्वभवेषु च। तत्र जीवः सुपार्श्वस्य, सुरदेवो द्वितीयकः ॥७०७॥ तृतीयोऽर्हन्

सुपार्श्वाख्यो, जीवः पोट्टिलकस्य तु । तुर्यः स्वयंप्रभाभिख्यो, जीवो दृढायुषः पुनः ॥७०८॥ पंचमः कार्त्तिकजीवः, सर्वानुभूतिनामकः । जिनो देवश्रुतो नाम, जीवः शंखस्य षष्ठकः ॥७०९॥ उदयाख्यो जिनो भावी, नंदजीवस्तु सप्तमः। जीवः सुनंदसंज्ञस्याष्टमः पेढालनामकः ॥७१०॥ जिनेन्द्रः कैकशीजीवो, नवमः पोट्टिलः पुनः । जीवो रेवतिनाम्नस्तु, शतकीर्त्तिर्दशमोऽर्हन् ॥७११॥ जीवः सत्यकिसंज्ञस्यैकादशः मुव्रतो जिनः । कृष्णस्य शौरिणो जीवोऽममाख्यो द्वादशो जिनः॥७१२॥ बलदेवस्य जीवोऽर्हन्निष्कषायस्त्रयोदशः। रोहिणीश्राविकाजीवो, निष्पुलाकश्चतुर्दश ॥७१३॥ निर्ममः सुलसायास्तु, जीवः पंचदशो जिनः। रेवतीश्राविकाजीवश्चित्रगुप्तस्तु षोडशः ॥७१४॥ जीवो गवालिनाम्नस्तु,समाधिः सप्तदशोऽर्हन् । जीवो गागलिसंज्ञस्याष्टादशः संवराभिधः॥७१५॥ जीवो द्वीपायनस्यैकोनविंशोऽर्हन् यशोधरः । जीवः कर्णस्य विंशस्तु, विजयाख्यो जिनेश्वरः ॥७१६॥ जीवस्तु नारदस्यैकविंशो मल्लाभिधो जिनः । अंबडस्य तु जीवोऽर्हन्,द्वाविंशो देवनामकः॥७१७॥ त्रयोविंशो जिनोऽनंतवीर्यो द्वारमदस्य तु । जीवः स्वातेः पुनर्जीवश्चतुर्विंशोऽत्र भद्रकृत् ॥७१८॥ चक्रिणोऽपि तथैवामी, दीर्घदंताभिधोऽग्रिमः । द्वितीयो गूढदंताख्यः, शुद्धदंतस्तृतीयकः ॥७१९॥ तुर्यः श्रीचंद्रनामा तु, श्रीभूतिरिति पंचमः । सोमाभिधानकः षष्ठः, सप्तमः पद्मनामकः ॥७२०॥ अष्टमस्तु महापद्मो, नवमो दर्शनाह्वयः । दशमो विमलश्चैकादशो विमलवाहनः ॥७२१॥ द्वादशोऽरिष्ठनामा तु, नवामी त्वर्धचक्रिणः। नंदिश्च नंदिमित्रश्च, तथा सुंदरबाहुकः ॥७२२॥ महाबाहुरतिबलो, महाबलो बलस्तथा । द्विपृष्ठश्च त्रिपृष्ठश्च, बलदेवास्त्वमी नव ॥७२३॥ बलश्च वैजयंतश्चाजितो धर्म्मश्च सुप्रभः । तथा सुदर्शनानंदौ ,नंदनः पद्म इत्यपि ॥७२४॥ तिलको लोहजंघश्च, वज्रजंघश्च केसरी । बलिः प्रह्लादनामा च, तथाऽपराजिताभिधः ॥७२७॥ भीमः सुग्रीवनामा च, नवामी प्रतिविष्णवः। शलाकापुरुषा एते,त्रिषष्टिरिति भाविनः

॥७२६॥ पृष्टमागामिकालादिस्वरूपं यत्त्वया किल। इंद्रभूते! तवाग्रे तद्, तन्मयेति प्ररूपितम् ॥७२७॥ श्रुत्वेति गौतमो वीरं, ववंदे प्रभुरप्यथ। कार्त्तिके दर्शयामिन्यां, जगाम पदमव्ययम् ॥७२८॥ इत्युच्चैर्जिनशासनोन्नतिगतं तीर्थेश्वरत्वं फलं, ज्ञात्वा श्रेणिकभूपतेरविरतस्याप्युत्तमं सर्वथा। भव्या! भक्तिभरावनम्रतनवः कुर्व्वीध्वमेनां मुदा, येन स्यादचिरेण वोऽपि सुलभा सर्व्वज्ञता निश्चितम् ॥७२९॥ ॥प्रभावनायां श्रेणिककथा ॥

चैत्यगमनद्वारमुपसंजिहीर्षुराह—

एवंविहाहिं वग्गूहिं, थुव्वंतो य पईदिणं। वच्चए जिणगेहंमि, जाव जिणवलाणयं ॥४७॥ दारं ॥
पुप्फतंबोलमाईणि, सच्चित्ताणि विवज्जए। छत्तं वाहणमाईणि, अच्चित्ताणि तहेव य ॥४८॥
काऊणं उत्तिमंगंमि, अंजलिं भत्तिसंजुओ। भणइ दिट्ठे जिणिंदंमि, नमो भुवणबंधुणो ॥४९॥

एवंविधाभिः 'अहो धन्नो हु एसो उ' इत्यादिभिर्वाग्भिः स्तूयमानश्च प्रतिदिनं व्रजति जिनगृहे यावद् जिनवलानकमिति ॥ अष्टमं सत्कारद्वारं, तत्र च जिनगृहप्रवेशे पंचविधाभिगममभिधित्सुः सूत्रद्वयमाह—पुप्पतंबोलादीनि आदिशब्दात् सिद्धार्थकदूर्वादीनि सच्चित्तानि, तथाऽचित्तानि छत्रवाहनादीनि, आदिशब्दात् खड्गकिरीटचामरपादुकादीनि च, विवर्जयेत्, चशब्दाच्छेपाभरणामोचनं उत्तरासंगं मनसः एकाग्रतां च विधत्ते ॥ कृत्वोत्तमांगे शिरस्यंजलिं मुकुलितकरयुग्मरूपां भक्तिसंयुतो भणति दृष्टे जिनेंद्रे नमो भुवनबंधवे इति। पंचविधाभिगमः, तथा चागमः—"सचित्ताणं दव्वाणं विउसरणयाए १ अचित्ताणं दव्वाणं अविउसरणयाए २ एगल्लसाडएणं उत्तरासंगकरणेणं ३ चक्खुफासेणं अंजलिपग्गहेणं ४ मणसो एगत्तीभावकरणेणं ५ तथा।

अवहट्टु रायककुहाइं पंचविहरायककुहरूवाइं। खग्गं छत्तोवाणह मउडं तह चामराओ य ॥५०॥
निसीहियं च काऊणं, अग्गे मज्झे तहेव य। बंधुमित्ताइसंजुत्तो, करे तिन्नि पयाहिणा ॥५१॥
मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ। इरियाए उवउत्तो, वक्खेमाणं विवज्जए ॥५२॥

मुत्तूण जं किंचिवि देवकज्जं, णो अन्नमट्ठं तु विचिंतइज्जा।
इत्थीकहं भत्तकहं विवज्जे, देसस्स रण्णो न कहं कहिज्जा ॥५३॥

संमाणुवेहिं न वइज्ज वक्कं,न जंमकंमाणुगयं विरुद्धं। नालीयपेसुण्णसुकक्कसं वा,थोवं हियं धम्मपरं लविज्जा ॥५४॥
जो होइ निसिद्धप्पा निसीहिया तस्स भावओ होइ। अनिसिद्धस्स निसीहिय केवलमित्तं भवइ सद्दो ॥५५॥
मिहोकहाओ सव्वाओ, जो वज्जेइ जिणालए। तस्स निस्सीहिया होइ, इति केवलिभासियं ॥५६॥

एवं पंचविधाभिगममभिधाय प्रवेशविधिमाह—नैषेधिकीमेकां च कृत्वा अग्रे–चैत्याग्रद्वारे द्वितीयां मध्ये–जिनभवनस्यांतः प्रदक्षिणाकरणकाले तृतीयां तु गर्भगृहप्रवेशावसरे,वक्ष्यति–"यच्च एका नैषेधिकी गृहव्यापारनिषेधरूपा चैत्याग्रद्वारे द्वितीया चैत्यव्यापारनिषेधरूपा मध्ये गर्भगृहप्रवेशे तृतीया तथैव चे"ति वचनात् द्रव्यपूजानिषेधरूपा चैत्यवंदनावसरे ज्ञेया। ततो बंधुमित्रादिसंयुक्तः कुर्यात् तिस्रः प्रदक्षिणाः, नैषेधिकीप्रदक्षिणात्रिकग्रहणाद्दशापि त्रिकाण्यत्र द्रष्टव्यानि, यथा–तिन्नि निसीही तिन्नि पयाहिणा तिन्नि चेव य पणामा। तिविहा पूया य तहा अवत्थतियभावणं चेव ॥१॥ तिदिसिनिरिक्खणविरई तिविहं भूमीपमज्जणं चेव। वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥२॥ पुप्फामिसथुइभेया तिविहा पूया अवत्थतियगं च। होइ छउमत्थकेवलिसिद्धत्तं भुवण-

नाहस्स ॥३॥ वन्नाइतियं तु पुणो वण्णत्थालंवणत्थरूवं तु । मणवयणकायजणियं तिविहं पणिहाणमवि होइ ॥४॥ मुद्रास्वरूपं प्रागुक्तं, शेषत्रिकार्थः प्रकट एव, अस्य च दशत्रिकस्य यथास्थानं विनियोगः कार्य इति ॥ प्रदक्षिणां नैपेधिकीं च भावयन् सूत्रपंचकमाह–मनोगुप्तो वचोगुप्तः कायगुप्तश्च, अत्र हेतुमाह–जितेंद्रियः–सुसंवृतकरणः, ईर्यायामुपयुक्तः, कथमित्याह–'वक्खेमाणं'ति व्याक्षिप्तत्वं गीतादिव्यग्रत्वं तद् विवर्ज्जयेत् ॥ मुक्त्वा यत्किंचिद्देवकार्यं नान्यमर्थं तु विचिंतयेत्, स्त्रीकथां भक्तकथां विवर्जयेद् देशस्य राज्ञश्च न कथां कथयेत् ॥ मर्म्मानुवेधि–परस्यागम्यगमनप्रकाशनादि न वदेद् वाक्यं, न जन्मकर्म्मानुगतं, तत्रोपपतिपित्रादिभिर्दूषितं जन्म कर्म्म तु परप्रेष्यादि, ताभ्यामनुगतं–तत्संयुक्तं विरुद्धं–चौरोऽयमित्यादिकं नालीकं न पिशुनितं नात्यन्तकठोरं वदेत्, तर्हि कीदृग्वदेदित्याह–स्तोकं–मिताक्षरं, हितं–मधुरोक्त्या श्रोतुराल्हादकं धर्म्मपरं–पापानिवर्तकं ब्रूयात् ॥ यो भवति निषिद्धात्मा–मनोवाक्कायैः कुव्यापारान्निषिद्ध आत्मा येन स तथा, नैपेधिकी तस्य भावतः–परमार्थतो भवति, अनिषिद्धस्य नैपेधिकी शब्दमात्रं केवलं भवति, पद्व्यत्ययश्छांदसत्वात् । मिथःकथा–मैथुनसंबद्धाः कथाः सर्वाः, उपलक्षणत्वात्प्रागुक्तसर्वविकथाश्च यो वर्जयति जिनालये तस्य नैपेधिकी भवतीति केवलिभाषितमिति पट्सूत्र्यर्थः ॥ गर्भगृहप्रवेशविधिमाह—

पुणो निसीहियं काउं, पविसे जिणमंदिरे। पुव्वुत्तेण विहाणेणं, कुणई पूयं तओ विऊ ॥५७॥
कायकंडूयणं वज्जे, तहा खेलविगिंचणं । थुइथुत्तभणणं चेव, पूयंतो जगबंधुणो ॥५८॥
घुसिणकप्पूरमीसं तु, काउं गंधोदगं वरं । तओ भुवणनाहे उ, ण्हवेई भत्तिसंजुओ ॥५९॥
गंधोदएण ण्हवणं विलेवणं पवरपुप्फमाईहिं । कुज्जा पूयं फलेहिं वत्थेहिं आभरणमाईहिं ॥६०॥

सुकुमालेण वत्थेण, सुगंधेण तहेव य। गायाइं विगयमोहाणं, जिणाणमणुलूहए ॥६१॥
कप्पूरमीसियं काउं, कुंकुमं चंदणं तहा। तओ य जिणबिंबाणि, भावेणमणुलिंपए ॥६२॥
वन्नगंधोवमेहिं च, पुप्फेहिं पवरेहि य। नाणापयारबंधेहिं, कुज्जा पूयं वियक्खणो ॥६३॥
वत्थगंधेहिं पवरेहिं, हिययाणंददायए। जिणे भुवणनहिए उ, पूयए भत्तिसंजुओ ॥६४॥
संखकुंदोवमेहिं च, अक्खंडफुडिएहि य। अक्खएहिं विसिट्ठेहिं, लिहए अट्ठमंगले ॥६५॥
दप्पणभद्दासण वद्धमाणसिरिवच्छमच्छवरकलसा। सत्थियनंदावत्ता लिहिया अट्ठट्ठमंगलगा ॥६६॥
कुसुमेहिं पंचवण्णेहिं, पूयए अट्ठ मंगले। चंदणेणं विसिट्ठेणं, दले पंचंगुलीतलं ॥६७॥
कुसुमेहिं पंचवण्णेहिं, पूयए भत्तिसंजुओ। चंदणेणं तहेवावि, तओ पंचंगुलीतलं ॥६८॥
अगरकप्पूरमिस्सं तु, दहे धूवं वियक्खणो। आरत्तियाइपज्जंतं, करे किच्चं तओ पुणो ॥६९॥

पुनर्नैषेधिकीं कृत्वा प्रविशति जिनमंदिरे, गर्भगृह इत्यर्थः, पूर्वोक्तविधानेन मुखकोशादिकरणलक्षणेन, करोति पूजां ततो विद्वानिति॥ किंच—कायकंडूयनं विवर्जयेत् तथा खेल—श्लेष्मविवेचनं स्तुतिस्तोत्रभणनं चैव पूजयन् जगद्बंधूनिति॥ स्नात्रविधिमाह—घुसृणं—चंदनं कर्पूरं—घनसारस्ताभ्यां मिश्रं, तुशब्दात् सर्वौषधिचंदनादिपरिग्रहः, कृत्वा गंधोदकं वरं ततो भुवननाथांस्तु स्नपयति भक्तिसंयुत इति॥ सूत्रकृदेव ग्रंथांतरेणैनमर्थं वक्ष्यमाणं च संवादयन्नाह—गंधोदकेन स्नपनं विलेपनं कुंकुमाद्यैरिति शेषः, प्रवरपुष्पादिभिः आदिशब्दात् केतकीनालकाद्यैश्च कुर्यात् पूजां, फलैः वस्त्रैराभरणादिभिः, आदिशब्दादुल्लोचाद्यैश्चेति॥ एनमेवार्थं कि-

न्वितप्रपंचयन् सूत्रनवकमाह—सुकुमारेण वस्त्रेण सुगंधिना तथैव च गात्राणि विगतमोहानां जिनानां अन्विति स्नात्रादनन्तरं रूक्षयेत्—निःस्नेहयेत् ॥ कर्प्पूरमिश्रितं कृत्वा कुंकुमं चंदनं तथा ततश्च जिनबिंबानि भावेन—परमभक्त्याऽनुलिंपते ॥ सद्वर्णसद्गंधद्रव्यमध्येऽतिशायिगुणयोगाद्वर्णगंधाभ्यामुपमा—औपम्यं येषां तानि वर्णगंधोपमानि तैश्च पुष्पैः—राजचंपकाद्यैः प्रवरैः—प्रत्यग्रैः नानाप्रकारबंधैः—प्रोतग्रथितादिभेदैः कुर्यात् पूजां विचक्षणो—नानाप्रकारपूजारचनाचतुरः ॥ वस्त्रैः—चीनांशुकाद्यैः गंधैः—वासैः प्रवरैः—प्रधानैः हृदयानंददायकान् जिनान् भुवनमहितांस्तु पूजयेद् भक्तिसंयुतः ॥ शंखकुंदोपमैश्चाखंडास्फुटितैश्चाक्षतैः शालितंदुलाद्यैर्विशिष्टैर्लिखति—रचयत्यष्ट मंगलानि ॥ दर्प्पणः—आदर्शः भद्रासनं—वेत्रासनादि वर्धमानं—शरावसंपुटं पुरुषारूढः पुरुषो वा श्रीवत्समत्स्यवरकलशाः स्वस्तिकनंदावर्त्तौ च प्रतीतौ लिखितानि—श्रुते उक्तानि एतान्यष्टमंगलकानि, अष्टाष्टेत्यत्रैकस्यापि मंगलस्याष्टेति संज्ञा यथैकस्यापि पूजामहस्याष्टाहिकेति,यद्वा प्रत्येकमष्टाष्टसंज्ञानीति ॥ कुसुमैः पंचवर्णैः पूजयत्यष्ट मंगलानि चंदनेन विशिष्टेन कुंकुममिश्रेण दद्यात्पंचांगुलीतलं, हस्तकमित्यर्थः ॥ कुसु० स्पष्टः । अगरकर्प्पूरमिश्रं तु दहेद् धूपं विचक्षणस्तुरुष्कसिल्हकादिधूपं विधिकुशलः॥ अयं च पूजाविधी राजप्रश्नीयोपांगेऽप्युक्तः,स चायं—"तएणं सूरियाभे देवे चउहिं सामाणियसाहस्सीहिं जाव अन्नेहि य बहूहिं सूरियाभजाव देवेहि य देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए जाव नाइयरवेणं जेणेव सिद्धायतणे तेणेव उवागच्छइ सिद्धायतणं पुरत्थिमिल्लेणं दारेणं अणुपविसइ २ जेणेव देवच्छंदए जेणेव जिणपडिमाउ तेणेव उवागच्छइ जिणपडिमाणं आलोए पणामं करेइ२ लोमहत्थयं गिण्हइ जिणपडिमाओ लोमहत्थएणं पमज्जइ जिणपडिमाउ सुरहिणा गंधोदएणं ण्हाणेइ २ सुरहीए गंधकासाइए गायाइं लूहेइ २ सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ २ जिणपडिमाणं अहयाइं देवदूसजुयलाइं नियंसेइ २ पुप्फारुहणं मल्लारुहणं

गंधारुहणं चुन्नारुहणं करेइ करित्ता आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं करेइ करित्ता कयग्गाहगहियकरयलपब्भट्ठविप्प-मुक्कदसद्धवन्नेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलियं करेइ करेइत्ता जिणपडिमाणं पुरओ अच्छेहिं सण्हेहिं सेएहिं रययामएहिं अच्छ-रसातंदुलेहिं मंगले आलिहइ तंजहा जाव दप्पण, तयाणंतरं चंदप्पहरयणवयरवेरुलियविमलदंडं कंचणमणिरयणभत्तिचित्त काला-गुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुयंतं वेरुलियमयं कडुच्छुयं पग्गहिय पयत्तेण धूवं दाऊण जिण-वरिंदाणं अट्ठसयविसुद्धगंथजुत्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं महाविचेहिं संथुणइ सत्तट्ठपयाइं पच्चोसक्कइ वामं जाणुं अञ्चेइ दाहिणं जाणुं धरणियलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ २ ईसिं पच्चोन्नमइ करयलपरिग्गहियं सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं वयासी–नमोत्थु णं अरिहंताणं जाव ठाणं संपत्ताणं वंदइ नमंसइ" तथा ज्ञाताधर्म्मकथांगे त्वेवं–तएणं सा दोवई रायवरकण्णा जेणेव मज्जणघरे तेणेव उवागच्छइ मज्जणघरं अणुपविसइ २ ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्ध-पावेसाइं वत्थाइं पवरपरिहिया मज्जणघराओ पडिनिक्खमइ २ जेणेव जिणघरे तेणेव उवागच्छइ २ जिणघरं अणुपविसइ २ आलोए पणामं करेइ २ लोहमहत्थयं परामुसइ एवं जहा सूरियाभे जिणपडिमाउ अचेइ तहेव भाणियव्वं जाव धूवं डहइ वामं जाणुं अंचेइ दाहिणं जाणुं धरणियलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणियलंसि निवाडेइ ईसिं पच्चोन्नमइ २ करयल जाव कट्टु एवं वयासी–नमो-त्थु णं अरिहंताणं भगवंताणं जाव ठाणं संपत्ताणं वंदइ नमंसइ"त्ति ॥ पूजाशेषमाह–आरात्रिकपर्यंतं, आदिशब्दान्मंगलप्रदीपादि च कुर्यात् कृत्यं ततः पुनरिति ॥ आह–इदमारात्रिकं प्रत्यक्षत्रसेतरजंतुविराधनादोषादिसंभवात् कथं कर्तुमुचितं ?,अत्रोच्यते, सर्व-त्रापि हि द्रव्यस्तवे यतनया प्रवर्तमानस्य प्रासुककूपोदाहरणादात्मनः प्रमोदेन प्रवचनप्रभावनाद्यैश्च श्रावकस्य बहुपुण्यहेतुत्वात् बहु-

ख्याताविरुद्धाचीर्णत्वात् श्रीमदुमास्वातिवाचकमुख्येन पूजामध्ये प्रदीपस्य प्रदर्शितत्वाच्च युक्तमेव, तथा च तदुक्तं—"चैत्यायतनं प्रस्थापनानि कृत्वा च शक्तितः प्रयतः । पूजाश्च गंधमाल्याधिवासधूपप्रदीपाद्यैः ॥१॥" इति ॥ आरात्रिकावसरे च नाट्यं विधेयमत- स्तत् सदृष्टांतमाह—

देविंददाणविंदेहिं, नारएणं जहा कयं । पभावईए देवीए, तहा नट्टं करे विऊ ॥७०॥

देवेंद्रदानवेंद्राभ्यां नारदेन यथा कृतं, नाट्यमित्यत्रापि संबध्यते, प्रभावत्या च देव्या तथा नाट्यं कुर्याद्विद्वानित्यक्षरार्थः ॥ भावार्थस्तु कथाभ्योऽवसेयः, तत्रेयं देवेंद्रकथा—देवेंद्रः प्राग्भवे जज्ञे, शिष्यः श्रीसुव्रतार्हतः । अतस्तच्चरितं किंचित्, कथ्यते कु- शलार्थिभिः ॥१॥ जंबूद्वीपेऽत्र भरतक्षेत्रेऽभूद् भूपतिः पुरा । श्रीवर्म्मा पुरि चंपायां, प्रतापी धर्म्मकर्म्मठः ॥२॥ चिरं राज्यश्रिय भुक्त्वा, विरज्य स कदाचन । दीक्षां कक्षीचकारोच्चैः, सुनंदाचार्यसन्निधौ॥३॥ दुस्तपं स तपस्तप्त्वा, तीर्थकृन्नामकर्म्म च । बद्ध्वा विपद्य संप्राप, विमानमपराजितम् ॥४॥ त्रयस्त्रिंशतमब्धीनां, तत्रासुरतिवाह्य सः । च्युत्वाऽत्र मगधाभिख्ये, देशे राजगृहे पुरा ॥५॥ सुमित्रनृपतेः पत्न्याः,पद्मावत्यास्तदोदरे । श्रवणार्के नभोराकानिशीथसमये प्रभुः॥६॥ पुत्रत्वेन समुत्पेदे,शुक्तौ मुक्तामणि- र्यथा। चतुर्दशमहास्वप्नसूचितो विश्वसौख्यदः ॥७॥ त्रिभिर्विशेषकं ॥ कृतगर्भावतारार्घः, सर्वेन्द्रैश्चलितासनैः । नवमासीमिहोवास, दिनान्यर्धाष्टमानि च ॥८॥ ज्येष्ठमासासिताष्टम्यां, श्रवणे गौतमान्वयः। कूर्म्मांकः कृष्णवर्णश्च, हरिवंशे जिनोऽजनि ॥९॥ विधिव- द्दिक्कुमारीभिः, सूतिकर्म्मणि निर्म्मिते । प्रभोर्जन्ममहश्चक्रे, सर्वेंद्रैर्मेरुमस्तके ॥१०॥ कृत्वा पित्रोत्सवं सृष्टे, मुनिसुव्रतनामनि। क्रमात् स प्राप तारुण्यं, धनुर्विंशतिविग्रहः ॥११॥ जन्मतो रुग्रजःस्वेदमलवंध्यसुगंधिना । देहेन शुचिशुभ्राभ्यां, मांसासृग्भ्यां च शोभितम्

॥१२॥ अदृश्याहारनीहारः, सुगंधिश्वसितस्तथा । शुशुभेऽतिशयैरेभिश्चतुर्भिः सहजैः प्रभुः ॥१३॥ सार्धसप्तसहस्राब्दीं,कुमारत्वं प्रपाल्य सः । शिश्रिये पैतृकीं राज्यश्रियं तद्द्विगुणाब्दिकाम् ॥१४॥ दत्त्वाऽसौ वार्षिकं दानं, कृतनिष्क्रमणोत्सवः । वासवैरधिरुढस्तु,शिविकामपराजिताम् ॥१५॥ श्रवणे फाल्गुने शुद्धद्वादश्यामपराह्णके। षष्ठेन प्राव्रजन्नीलगुहायां राट्सहस्रयुक् ॥१६॥ युग्मं॥ ब्रह्मदत्तगृहेऽत्रैव, नगरेऽह्नि द्वितीयके। अकार्षीत् परमान्नेन, पारणं परमेश्वरः ॥१७॥ विजहार चतुर्ज्ञानी, मासानेकादशाथ सः । शुक्लध्यानानलप्लुष्टघातिकर्म्मचतुष्टयः ॥१८॥ श्रवणे फाल्गुने कृष्णद्वादश्यां तु व्रतावनौ । चंपकवृक्षस्य तले, षष्ठेन प्राप केवलम् ॥१९॥ क्षेत्रे योजनमात्रे यदनेका जंतुकोटयः । संमांति १ यत्प्रभोर्भाषा, सर्वभाषाऽनुगामिनी २ ॥२०॥ न योजनशतांतः स्युर्व्याधि३ बैरे४ ति५ मारयः ६। अतिवृष्टि७ रवृष्टिश्च८,दुर्भिक्षं डमरं९ च यत्॥२१॥ मार्त्तंडमंडलाकारं,यच्च भामंडलं विभोः१०। पृष्ठतः शुशुभे तत्र,कर्म्मक्षयविजृंभितम्११॥२२॥ राजन्नतिशयैरेभिरेकादशभिरद्भुतैः। नवभिर्दशभिश्चैभिः, सुरासुरकृतैर्यथा॥२३॥ सदाकाशगतेनाग्रे, धर्म्मचक्रेण शोभितः १ । तथा सपादपीठेन, दिव्यसिंहासनेन च २ ॥२४॥ छत्रत्रयेण शुभ्रेण, ध्रियमाणेन मस्तके ३ । वीज्यमानो वलक्षाभ्यां, चामराभ्यां जिनेश्वरः ॥२५॥ पुरः प्रकृष्यमाणेन, रात्नेनेंद्रध्वजेन च ५ । देवैर्विनम्यमानेषु, पथ्यशेषेषु शाखिषु ६ । ॥२६॥ कंटकेषु समस्तेषु, स्थाप्यमानेष्ववाङ्मुखम् ७ । विषयेष्वनुकूलेषु ८, सर्वेष्वपि नवर्त्तुषु ९ ॥२७॥ पवनेनानुकूलेन १०, प्रादक्षिण्यानुगैर्विभिः ११ । सदा दुंदुभिनादेन, रमणीयेन राजितः१२॥२८॥ गंधाम्बुपुष्पवर्षेण, शुद्धभूम्यां विनिर्म्मिते १३ । रम्ये समवसरणे, वप्रत्रयविराजिते१४ ॥२९॥ नवसु स्वर्णपद्मेषु, पादपद्मद्वयं दधत् १५ । कोटिसंख्यैः सुरैः सार्धं १६, पूर्वद्वाराऽविशद्विभुः ॥३०॥ तद्द्वादशगुणोच्चैस्त्वं, चैत्यवृक्षे स्वतस्तनोः १७। त्रिः प्रदक्षिणयांचक्रेऽवस्थायिनखरोमकः १८॥३१॥ नत्वा तीर्थं चतूरूपः

३८, सिंहासनमथास्थितः । मुनिसुव्रततीर्थेशो, विदधे देशनां यथा ॥३२॥ दानशीलतपोभावभेदभिन्नं चतुर्विधम् । धर्मं कुरुत भो भव्या !, भवभ्रमणभीर्यदि ॥३३॥ स्वामिनो देशनां श्रुत्वाऽबुध्यंत बहवो जनाः । सामायिकानि चत्वारि, स्वशक्त्या शिश्रियुश्च ते ॥३४॥ चतुर्विधं विधायेति, तीर्थं तीर्थपतिस्ततः । विहृत्यान्येषु देशेषु, भव्यबोधविवित्सया ॥३५॥ अन्यदा समवार्पीत्, प्रतिष्ठानपुरे प्रभुः । तत्र विश्वत्रयत्राता, योग्यान् जीवानबोधयत् ॥३६॥ सज्ज्ञानचक्षुषा वीक्ष्य, मित्रं प्राग्जन्मनः स्वकम् । भृगुकच्छपुरे ग्रासबोधयोग्यं तुरंगमम् ॥३७॥ प्रतिष्ठानपुराद् भव्यराजीराजीवभास्करः । प्रतस्थे भुवनस्वामी, भृगुकच्छपुरं प्रति ॥३८॥ युग्मं । बह्वीभिर्देवकोटीभिर्वृतोऽमितगतिः प्रभुः । भृगुकच्छपुरोद्याने, प्राप कोरिंटकाभिधे ॥३९॥ तत्र योजनमात्रेऽथ, क्षेत्रे वायुकुमारकैः । शोधिते समवसृतौ, रचितायां सुरासुरैः ॥४०॥ कंकेल्लिः १ सुमनोवृष्टि२र्दिव्यगी३श्चारुचामरे ४ । भाश्चक्रं ५ दुंदुभि६श्छत्रत्रयं७ सिंहासनं वरम् ८ ॥४१॥ मनोहरैः प्रतीहारैरेभिः सेव्योऽष्टभिः सदा । सिंहासनमलंचक्रे धर्मचक्री भवांतकृत् ॥४२॥ आसीनस्य प्रभोरासन्नाग्नेय्यादिविदिक्ष्वथ । तिस्रस्तिस्रः क्रमात्तत्र, पर्षदो द्वादशाप्यमूः ॥४३॥ मुनि१ सुरदेवी२ साध्व्यो३ देव्यो४ देवाश्च५ भुवनपत्याद्याः । वैमानिकसुर१०मानव११मनुजमनुष्यश्च१२विधिनाऽस्थुः ॥४४॥ क्रमेणासु निषण्णासु, पर्षत्सु द्वादशस्वपि । दिदेश धर्मं विश्वेशः, सुव्रतः सुव्रतो जिनः ॥४५॥ गत्वाऽथोद्यानपालेन, तत्पुरेशाय सत्वरम् । जिनागमनमानंदान्न्यवेदि जितशत्रवे ॥४६॥ तत्रस्थोऽपि जिनं नत्वा, दत्त्वाऽस्मै पारितोषिकम् । तमारुह्य हरिं राजा, नंतुमर्हंतमभ्यगात् ॥४७॥ मुक्त्वाऽश्वं रूप्यवप्रांतः, प्रविवेश विशांपतिः । भक्त्या समवसृत्यंतर्ववंदे विधिवद् जिनम् ॥४८॥ सुधाभां कर्णयोर्जैनीमाकर्ण्याकर्ण्य भारतीम् । उत्कर्णः सोऽभवत्तूर्णं, हयो हर्षाश्रुपूर्णदृक् ॥४९॥ प्रभुं पुनः पुनः पश्यन्नुत्पश्यः पशुरप्यसौ । तदात्वजातया जातिस्मृत्या प्राग्जातिमस्मरत्

॥५०॥ हर्षप्रकर्षतस्ताक्ष्योऽनिमेषाक्षस्तथोन्मुखः। हेषानिर्घोषमातन्वन्, ययौ मंक्षु जिनांतिकम् ॥५१॥ सोऽनमत् स्वामिनं भूमौ, न्यस्तमौलिर्मुहुर्मुहुः। स्ववाचोवाच दुःखार्त्तविश्वरक्षक! रक्ष माम् ॥५२॥ जितशत्रुरथोवाच, नैतच्चित्रीयते विभोः। यत्तिर्यंचोऽप्यबुध्यंत, भारत्या श्रीमदर्हतः ॥५३॥ हरेर्हर्षप्रकर्षोऽयं, किंतु चित्रीयतेतराम्। तद्धेतुरत्र कः? स्वामिन्!, सर्ववेदी ततोऽवदत् ॥५४॥ राजन्! जन्मांतरे मित्रमेष वाजी ममाजनि। बोधायास्यागमामेह, पूर्वजन्माधुना शृणु॥५५॥ भरतेऽत्र पुरे रम्ये, पद्मिनीखेटनामनि। जिनधर्म्मरतः श्रेष्ठी, जिनधर्म्माऽभिधोऽभवत् ॥५६॥ श्रेष्ठी सागरदत्ताख्यस्तन्मित्रं नैगमाग्रणीः। त्यागी महेश्वरो माहेश्वरश्चोवास तत्पुरे॥५७॥ शिवस्यायतनं पूर्वं, कारयामास सोऽन्यदा। उपसाधु गतः सार्धं, सख्याऽश्रौषीदिदं यथा॥५८॥ जिनानां मंदिरं कुर्याद्यो जितांतरवैरिणाम्। स प्रेत्य लभते भव्यं, बोधिरत्नं सुदुर्लभम् ॥५९॥ श्रुत्वेत्यकारयत् सोऽपि, सुंदरं जिनमंदिरम्। तत्र च प्रतिमां जैनीं, प्रतिमां प्रत्यतिष्ठिपत् ॥६०॥ जिनधर्म्मस्य संसर्गाद्, जिनधर्म्ममतिस्ततः। मिथ्यात्वमथनं सोऽथ, बोधिबीजं समार्जयत् ॥६१॥ शिववेश्मान्यदा शैवैः, सर्पिषा लिंगपूरणे। कृतेऽसौ द्रष्टुमाहूतस्तत्र गत्वा निषेदिवान् ॥६२॥ तदा च तत्र सर्प्पंतीर्घृतगंधाद् घृतेलिकान्। शैवानां चरणन्यासान्, मृताः प्रेक्ष्य सहस्रशः ॥६३॥ युक्तमेतद्यतीनां किं, तानेवं सोऽब्रवीन्ननु। भवतां पादघातेन, कीटिकाः कोटिशो मृताः॥६४॥ क्रुद्धास्तमभ्यधुस्तेऽपि, त्यक्त्वा धर्म्मं क्रमागतम्। स्वेंद्रियेभ्योऽपि जिह्रेपि, किं न धर्म्मं नवं दधत्?॥६५॥ त्वयैवं कुर्व्वता सर्व्वे, ननु सद्यः स्वपूर्वजाः। बालिशाश्चक्रिरे तत्ते, हहा ज्ञत्वकुलीनते॥६६॥ हिंसास्थानेऽत्र धर्म्मिष्ठस्त्वमागास्त्वद्विनेश्वरः। न विश्वार्च्यो ह्यनर्च्यः स्यादुत्तिष्ठ स्वगृहं व्रजः ॥६७॥ सप्रतिष्ठोऽपि तैः श्रेष्ठी, सोऽप्रतिष्ठं प्रजल्पितः। लज्जाम्लानमुखांभोजो, निर्ययौ सपरिच्छदः ॥६८॥ मिथ्यात्वमपि संशीतिगतं सोऽथ दधत्ततः। तद्वाचिकापमानं च,

सरन्नत्यर्त्तिसंगतः ॥६९॥ बद्ध्वा तिर्यग्भवायुष्कं, स्वायुःशेषमतीत्य च । श्रेष्ठी सागरदत्ताख्यो, मृत्वा तिर्यङ्जायत ॥७०॥ भवान् भ्रांत्वाऽथ भूयिष्ठानार्त्तध्यानाद् भवोदधौ । राजन्नजनि स श्रेष्ठिजीवोऽयं तेऽधुना हयः ॥७१॥ यः कारयति जिनानामित्यादि प्राग्भवश्रुतम् । असन्मुखान्निशम्यासौ, जातिस्मरणमाप्तवान् ॥७२॥ इत्याकर्ण्य नृपो वाजिचरित्रं चित्तचमत्कृतः । संवेगाद्गद्गदध्वानः, प्रतिहारं समादिशत्॥७३॥ प्रागुत्सारय पर्याणमश्वादस्मात्तथा कविम् । इतः प्रभृत्यसौ धर्म्मबांधवो नस्तुरंगराट्॥७४॥ सोऽश्वोऽथ स्वामिपार्श्वे चाग्रहीद् धर्म्ममगारिणाम् । संन्यासेन विपद्याभूत्,सहस्रारे सुरोत्तमः॥७५॥ प्राच्यं जन्मावधेर्ज्ञात्वा,भक्त्याऽत्रैत्य जिनं स तु । वंदित्वा विधिवन्नाटयं, विदधे विबुधः सुधीः॥७६॥ कांचनैः कुसुमैरत्तीर्थं, भूमीं तां परिपूज्य च । स्वं प्रकाश्य च तीर्थेशं, पुनर्नत्वा दिवं ययौ ॥७७॥ अश्वजीवः स तत्राथ, स्वःसुखान्यनुभूय सः । च्युत्वाऽत्रैव समुत्पद्य, लप्स्यते पदमव्ययम् ॥७८॥ दिनानि कतिचित्तत्र, स्थित्वाऽथ भृगुकच्छतः । विजहार महीमेनामहीनमहिमा प्रभुः ॥७९॥ भृगुकच्छे तदा स्वामी,स्वांघ्रिभ्यां यामपावयत् । भुवं तत्र सुराः स्तूपं, स्वर्णरत्नैर्वरं व्यधुः॥८०॥ प्रतिमां स्थापयामासुस्तत्र श्रीसुव्रतार्हतः। तीर्थमश्वावबोधं तत्, प्रावर्त्तत ततश्चिरम् ॥८१॥ –जितशत्रुरितश्चासीन्नरेन्द्रो हस्तिनापुरे । वणिक्सहस्रनाथश्च,सुश्राद्धः कार्त्तिकाभिधः॥८२॥ परिव्राट् तत्पुरे चैकदाऽऽगादातापनापरः। सुदुस्तपं तपस्तेपे, मासं मासमुपोषितः ॥८३॥ उत्कृष्टकष्टतो हृष्टैस्तुष्टुवेऽसौ कुदृष्टिभिः। पारणे पारणे पौरैः, स्वगृहेषु न्यमंत्र्यत॥८४॥ सुदृष्टिः कार्त्तिकस्तत्र,नाक्षिपद् दृष्टिमप्यथ । क्रुद्धोऽसै छलमन्वैषीत्, परिव्राड् राक्षसो यथा॥८५॥ निमंत्रितोऽन्यदा राज्ञा, पारणे जितशत्रुणा । जगाद जगतीनाथं, सोऽथोन्मथितसत्पथः ॥८६॥ कार्त्तिको मे स्वहस्तेन, चेत् परिवेषयिष्यति । ततस्त्वन्मंदिरे कुर्वे, पारणं नान्यथा पुनः ॥८७॥ आमेत्युक्त्वा नृपो गत्वा, कार्त्तिकौकस्तमभ्यधात् । परिवेष्यं त्वया श्रेष्ठिन्!, परिव्रा-

जोऽस्य पारणे ॥८८॥ अस्माकमुचितं नैतत्, श्रेष्ठी स्माह महीपतिम्। त्वदाज्ञया त्विदं चापि, करिष्यामीत्यमन्यत ॥८९॥ गृह्णीयां व्रतमग्रे चेत्, नैवं मे स्यान्नृपाग्रहः। विभावयन्निति श्रेष्ठी, सखेदोऽगान्नृपौकसि ॥९०॥ परिवेषयतस्तत्र, परिव्राट् स पराभवम्। तर्जनीदर्शनैस्तस्य, भूयो भूयोऽप्यदर्शयत् ॥९१॥ कार्त्तिकोऽतंश्चरीकृत्यमानः कार्त्तिकयेव सः। तेन राज्ञोऽनुयोगेन, निर्विवेद भवाद् भृशम् ॥९२॥ तदा च विंशस्तीर्थेशो, विहरन्नवनीमिमाम्। तत्पुरे समवासार्षीद्, भगवान्मुनिसुव्रतः ॥९३॥ तत्रायातं जिनं ज्ञात्वा, श्रेष्ठी तुष्टस्तदंतिके। सममष्टसहस्रेण, वणिजां जगृहे व्रतम् ॥९४॥ सोऽधीयन् द्वादशांगानि, तपो द्वादशधा दधत्। भावना द्वादश ध्यायन्, द्वादशाब्दीं व्रतं व्यधात् ॥९५॥ कृत्वा संलेखनां मासं, विपद्य स समाहितः। सौधर्म्मकल्पे सौधर्म्माधिपतिः समजायत ॥९६॥ परिव्राट् सोऽथ मृत्वाऽभूदभियोगेन तेन तु। शक्रस्यैरावणो नाम, वाहनत्वेन वारणः ॥९७॥ सहस्राक्षं स सामर्षः, प्रेक्ष्य मंक्षु प्रनष्टवान्। तं नश्यंतं तु द्राग् धृत्वाऽध्यारोहत्तच्छिरो हरिः ॥९८॥ स चक्रे स्वस्य शीर्षे द्वे, इंद्रोऽथाभूद् द्विमूर्त्तिभाक्। स यावन्मस्तको जज्ञे, तावन्मूर्त्तिरभूद्धरिः ॥९९॥ पुनः पलायमानोऽसौ, वज्रेणाहत्य वज्रिणा। व्यधीयत वशे शीघ्रं, प्राग्जन्ममत्सरी करी ॥१००॥ व्यधादष्टादश स्वामी, गणान् गणभृतोऽप्यथ। अयुतप्रमितान् साधून्, साध्वीः पंचायुतप्रभाः ॥१०१॥ द्वासप्ततिसहस्राणि, श्राद्धानां लक्षमेव च। त्रिलक्षीं श्राविकाणां च, पंचायुतयुतां तथा ॥१०२॥ श्रुतकेवलिनां पंचाष्टादशावधिधारिणाम्। केवलज्ञानिनां भर्त्तुः, शतान्यष्टादशाभवन् ॥१०३॥ मनःपर्यायिणां सार्धं, सहस्रं वादिनां पुनः। शतानि द्वादश द्वे तु, सहस्रे वैक्रियश्रियाम् ॥१०४॥ यक्षेण वरुणाख्येन, देव्या दत्ताह्वया विभुः। सेव्यमानोऽवदच्चातुर्याममाद्यं च संयमम् ॥१०५॥ अर्धाष्टमानि भगवनब्दसहस्राणि केवलित्वेन। एकादशभिर्मासैर्न्यूनानि विहृत्य भूवलये ॥१०६॥ श्रीमन्मल्लेर्मोक्षात् समतिक्रांतेषु वर्षलक्षेषु।

चतुरन्वितपंचाशन्मितेषु संमेतगिरिशिखरे ॥१०७॥ मासिकभक्तेन विभुः श्रवणक्ष शुक्रसितनवम्यां च। साधुसहस्रेण सहो- र्ध्वपादपोपगमनानुगतः॥१०८॥ परिपाल्य च सर्वायुर्वर्षाणां त्रिंशतं सहस्राणि। योगनिरोधविशुद्धध्यानांभोधौतकर्म्ममलः॥१०९॥ शाश्वतमनंतमनुपममुत्तमं शिवपदं प्रभुः प्राप। विधिवद् विदधे विबुधैर्निर्वाणमहोऽथ तीर्थपतेः ॥११०॥ पंचभिः कुलकम् ॥—इतश्च सिंहलद्वीपे, चंद्रगुप्तस्य भूपतेः। पुत्री सुदर्शनानाम्नी, पितुरंके निषेदुषी ॥१११॥ श्राद्धमृषभदत्ताख्यं, भृगुकच्छागतं क्षुते। नम- स्कारं ब्रुवंतं सा, श्रुत्वाऽस्मार्षीत् पुरा भवम्॥११२॥ ऊचे चाहं पुराऽभूवं,भृगुकच्छपुरे पितः!। वटे कोरिंटकोद्याने,शकुनी काशकां- तिका ॥११३॥ वर्षत्यखंडितं मेघेऽन्तरं प्राप्य कथंचन। स्वापत्यानां क्षुधार्त्तानां, मंक्षु भक्ष्यनिरीक्षया ॥११४॥ शूनायामवतीर्य द्राग्, लात्वा मांसीं स्वम्रियती। शौनिकेनेषुणा विद्धाऽपतं जिनगृहांतिके ॥११५॥ सोमचंद्रर्षिणा तत्रायाता पंचनमस्कृतिः। ददे मह्यं ततो मृत्वा, तव तात! सुताऽभवम् ॥११६॥ क्षुतेऽद्य श्रेष्ठिनोऽमुष्य, श्रुत्वा पंचनमस्कृतिम्। जातिस्मृतिमहं प्राप, तात! श्री- सिंहलेश्वरः ॥११७॥ अथैषा क्ष्मापतिं पृष्ट्वा, भृगुकच्छपुरे द्रुतम्। समेत्य रचयामास, चारु चैत्यं मनस्विनी ॥११८॥ विषयेषु वि- रक्तैषा, जन्मतो ब्रह्मचारिणी। तपस्तप्त्वा विपद्याभूदीशाने त्रिदशांगना ॥११९॥ मुनिसुव्रतचैत्येऽत्र, सैत्य कृत्वाऽर्चनं व्यधात्। तीर्थप्रभावनाहेतोरासन्नप्रतिहार्यताम् ॥१२०॥ सप्रसंगमिति प्रोक्तं, चरित्रं सुव्रतार्हतः। देवेंद्रीयकथायास्तु, किंचिच्छेषमथोच्यते ॥१२१॥ शक्रः कार्त्तिकजीवः स, शक्रे सिंहासने स्थितः। सहस्रैश्चतुरशीत्या, सामानिकदिवौकसाम् ॥१२२॥ रक्षोद्यतैश्चतुर्दिक्स्थै- रात्मरक्षैश्चतुर्गुणैः। त्रयस्त्रिंशन्मितैस्त्रायस्त्रिंशैः शांतिविधायकैः ॥१२३॥ पारिषद्यैस्तथाऽऽसन्नैः, सहस्रैर्द्वादशप्रमैः। चतुर्दशप्रमैर्मध्यै- र्बाह्यैः षोडशभिर्मितैः ॥१२४॥ चतुर्भिर्लोकपालैश्च, सैन्यैः सप्तभिरुद्भटैः। सप्तभिः सैन्यनाथैश्च, तथेन्द्राणीभिरष्टभिः ॥१२५॥

देवदेवीगणैश्चान्यैरसङ्ख्यातैः समन्वितः । दिव्यभोगयुतः पृथ्वीं, पश्यन्नवधिनाऽन्यदा॥१२६॥ विशाखापूर्वरोद्याने, बहुपूर्णाभिधे तदा । वीक्षांचक्रे स्थितं वीरं, चतुर्विंशं जिनेश्वरम्॥१२७॥ षड्भिः कुलकं॥ ततोऽत्रैत्य सहस्राक्षः, सार्धं सामानिकादिभिः । वंदित्वा श्रीमहावीरं, दिव्यं नाट्यं प्रचक्रमे॥१२८॥ इंद्राण्योऽप्सरसश्चान्या, वासवेन नियोजिताः गीतवादितनृत्तानि, यथाविधि वितेनिरे ॥१२९॥ त्रिग्रामं सचतुःस्थानं, काश्चित्तत्र लयानुगम्। एकविंशतिमूर्च्छाभिर्युतं गीतं जगुः स्फुटम् ॥१३०॥ त्रितंत्रीः पंचतंत्रीश्च, सप्ततंत्रीश्च काश्चन । सकलां निष्कलां वीणां, प्रवीणा मृद्ववीवदन् ॥१३१॥ कश्चित्तकारधोंकारथकाराद्यैः परिस्फुटम् । मृदु तद्वादयामासुस्त्रिविधान् घननिःस्वनान् ॥१३२॥ नभोभूमिगतं काश्चित्, चिरं त्रिकरणोद्भटम् । नेत्रभावैर्नवनवैर्नृत्तमेत्य नरीनृतुः ॥१३३॥ गंधर्वनाट्यकटकैस्तथा शच्यादिभिः समम्। शक्रश्चक्रे स्वयं नाट्यं, द्वात्रिंशद्बद्धसंज्ञितम् ॥१३४॥ भगवंतं ततो नत्वा, दिवं गत्वा दिवस्पतिः । दिव्यान् कामान् यथाकामं,भुंक्ते प्राक्पुण्ययोगतः॥१३५॥ देवेन्द्र एवं विरचय्य नाट्यं,भुक्त्वा दिवः सौख्यसुभार्णवायुः। च्युत्वा विदेहेषु नरत्वमाप्य, प्रव्रज्य मोक्षं खलु लप्स्यतेऽसौ॥१३६॥ नाट्ये देवेन्द्रकथा ॥ दानवेंद्रकथा त्वियम्—

इतश्च भरतेऽत्रैव, विंध्याद्रितटसंस्थिते । बेभेले संनिवेशेऽभून्,महेभ्यः पूरणाभिधः ॥१॥ निशीथे सोऽन्यदा जाग्रद्, दध्यौ नूनं मया पुरा । सुदुस्तप तपस्तप्तं, श्रीरियं मान्यता च यत् ॥ २ ॥ तदत्रापि भवे किंचित्तपस्यामि तपो यतः । अमुत्र स्यां सुखी हंत, सुखं हि सुकृतोद्भवम् ॥३॥ एवं विचिन्त्य स प्रातर्भोजयित्वा स्वकान् जनान्। सुतं निवेश्य स्वस्थाने, शिश्रिये तापसव्रतम् ॥४॥ ततःप्रभृति षष्ठाशी, नित्यमातापनापरः । पारणे सोऽग्रहीद् भिक्षां, दारुपात्रे चतुष्पुटे ॥ ५ ॥ सोऽदादाद्यपुटाद् भिक्षां, गवादिभ्यो द्वितीयकात् । काकादिभ्यः पतत्रिभ्यो,मत्स्यादिभ्यस्तृतीयतः॥६॥ तुर्यान्त्वशात् स्वयं बालतपस्वी शांतमानसः॥

प्रव्रज्यां स व्यधादेवं, प्राणामं द्वादशाब्दिकम् ॥७॥ मासं संलेखनां कृत्वा, मृत्वा सोऽज्ञानकष्टतः । अभून्नमरचंचायां, चमरेंद्रोऽसुराधिपः ॥८॥ पर्याप्तः सोऽवधिज्ञानादूर्ध्वं पश्यन्नहंकृतेः । सौधर्म्मेंद्रं सहस्राक्षं, प्रेक्ष्य क्रुद्धोऽभ्यधात् स्वकान्॥९॥ कोऽयमप्रार्थितप्रार्थी, प्रत्यर्थी मच्छिरःस्थितः । महर्धिर्विलसत्येवं, निस्रपस्त्रिदशाधमः ? ॥१०॥ ततः सामानिकाः प्रोचुश्चमरेंद्रं प्रणत्य ते। जिष्णुर्नाम्ना गुणैश्चायं, सौधर्म्माधिपतिः प्रभो ! ॥११॥ श्रुत्वैतत् सुतरां क्रुद्धो, भृकुटीभीषणाननः । नाशानिःश्वासपर्यस्तचामरश्चमरोऽब्रवीत् ॥१२॥ भवंतो भक्तिमंतोऽपि, न जानंति मदूर्जितम्। गुणौघमतिविज्ञस्य,ग्राम्या इव सभासदः ॥१३॥ व्यावर्णयत तं तावद्जवोऽनृजुमप्यमुम् । न यावद्दर्शयाम्यस्य,दुर्नयस्यानुशासनम्॥१४॥ उच्चस्थानस्थितत्वेन,नायमुच्चपराक्रमः। सिंधुरस्कंधमध्यस्तो, निषादी स्याद् द्विकः किमु ? ॥१५॥ नष्टोऽयमधुना क्रुद्धे, दुर्धरेऽभ्युदिते मयि । उदिते हि सहस्रांशौ, नान्यतेजस्तमोऽपि च ॥१६॥ तेऽप्यूचुर्नाकिनां नाथः, प्रौढपुण्यैरभूदयम्। अस्मादृशां तु सेव्यस्त्वं, स्वोचितैरसुरप्रभुः॥१७॥ स्वपुण्योपनतान् दिव्यान्, भुंक्ष्व भोगान् यथासुखम्। मा कृथा नाथ! तत्रेर्ष्यां, सुखविघ्नविधायिकाम् ॥१८॥ विनाशायोपहासाय, स्वामिन्नस्मिन् समित्तव। संरंभः सरभस्येवांभोधरं प्रति दुर्धरः॥१९॥ अथोचे चमरस्तांश्चेद्,भवंतो भीरवस्ततः। तिष्ठंत्वत्रैव यास्यामि,किं त्वेकोऽपि तमाव्यथे ॥२०॥ सुरासुराणामद्य स्यामहमेको विभुः स वा। प्रत्याकारे न चैकस्मिन्, खड्गयोर्युगपद्युगम् ॥२१॥ सावष्टंभमिति प्रोच्य, चमरः समरोद्यतः । स्वमुत्पित्सुरथो किंचित्, लब्धबुद्धिर्व्यचिंतयत् ॥२२॥ अमी सामानिकाः प्रोचुस्तमजय्यं ततो यदि । स्यान्मे पराजयस्तत्कं, श्रयिष्ये शरणं तदा ? ॥२३॥ ध्यात्वेति सोऽवधेर्ज्ञात्वा, सुंसुमारपुरे तदा। शरण्यमिति निश्चिक्ये, श्रीवीरं प्रतिमास्थितम्॥२४॥ गत्वा चुंपालयानामायुधशालां ततो द्रुतम् । गृहीत्वा तत्र परिघं, सुंसुमारे पुरेऽगमत्॥२५॥ स त्रिः

प्रदक्षिणीकृत्य, नत्वा वीरं व्यजिज्ञपत् । दुर्जयमपि जेष्यामि, शक्रं युष्मत्प्रभावतः ॥२६॥ इत्युक्त्वोत्तरपौरस्त्यामुपसृत्य दिशं क्षणात् । विचक्रे चमरः सोऽथ, स्वरूपं लक्षयोजनम् ॥२७॥ कृष्णवर्णो महाकायोऽञ्जनाद्रिरिव जंगमः । दंष्ट्राक्रकचरौद्रास्यः, कपोललुलितालकः ॥२८॥ सालंकारेण गात्रेण, कज्जलश्यामलेन च । सविद्युदंबुदेनेव, लुप्तमार्त्तंडमंडलः ॥२९॥ दोर्दंडाग्रेण परिघममोघं भ्रमयन्मुहुः । इतस्ततःकृतानेकग्रहनक्षत्रतारकः ॥३०॥ पाददर्दरघातेन, विधुरीकृतभूतलः । उत्पपात स दर्पांधः, सौधर्माधिपतिं प्रति ॥३१॥ चतुर्भिः कलापकं ॥ तर्जितैर्गर्जितध्वानैर्व्यंतरान् भीषणो भृशम् । प्रेक्षितांस्त्रासयन् लोकान्, प्रावृषेण्य इवांबुदः ॥३२॥ ज्योतिष्कांस्त्रासयन् सिंहनादात् सिंहो मृगानिव । क्षणात् संप्राप शक्रस्य, विमानं मानसाहितः ॥३३॥ युग्मं । नेशुः किल्बिषिका आशु, त्रेसुस्तत्राभियोगिकाः । ससैन्या अपि सेनान्यो, दुद्रुवुर्द्राग् भयद्रुताः ॥३४॥ पलायांचक्रिरे सोमयमाद्या लोकपालकाः । चमरं द्रुतमायांतं, वीक्ष्याकस्माद् भयंकरम् ॥३५॥ युग्मम् ॥ आत्मरक्षैरनाक्रांतोऽस्खलितो वेत्रिणाऽपि सः । किमेतदिति सत्रासैस्त्रायस्त्रिंशैरपीक्षितः ॥३६॥ कोपविस्मयसंभ्रांतैर्दृष्टः सामानिकैः क्रमम् । पद्मवेद्यां न्यधादेकं, सुधर्म्मायां द्वितीयकम्॥३७॥ युग्मं ॥ परिघेणेंद्रकीलं स, धृष्टस्त्रिस्ताडयन् क्रुधा । उद्भटभृकुटीभीष्मो,बभाषेऽथ सुरर्षभम्॥३८॥ महौजाः किं विडौजस्त्वमोजसैषां सुधाजुषाम् । यदेवं दुर्विनीतात्मा, मन्मूर्धन्यवतिष्ठसे ? ॥३९॥ अधस्तादात्मनोऽपि त्वां, पातयिष्यामि सांप्रतम् । दंडोपघातमप्युच्चाच्चैत्याग्रादिव वायसम् ॥४०॥ तादृक्षां परुषां भाषां, व्याघ्रहक्कां मृगेन्द्रवत् । श्रुत्वाऽथाश्रुतपूर्वींद्रो, हास्यादीन् शिश्रिये रसान् ॥४१॥ तं च ज्ञात्वाऽवधेर्नश्य, नश्य रे रे ब्रुवन्निति । भृकुटीभीष्मवदनो, वज्री वज्रं करेऽकरोत् ॥४२॥ कल्पकालोदितादित्यतेजःपुंजमिवाथ तत् । सर्वतः प्रस्फुरत्स्फारस्फुलिंगं सोऽमुचत् पविम्॥४३॥ तडत्तडितितन्वानं,त्रस्तत्रिदशवीक्षितम् । त्रिदशेशविमुक्तं तद्दधावे चमरं प्रति

॥४४॥ सूर्यतेज इवोलूकस्तं द्रष्टुमपि सोऽक्षमः । वल्गुलीवोत्पदोऽधस्तान्मस्तकोऽथापतद् द्रुतम् ॥४५॥ चमरो गौरिव व्याघ्राच्छीघ्रं तस्मात् पलायितः । प्रपित्सुः श्रीमहावीरं, शरण्यं शरणं तदा ॥४६॥ भेको महोरगस्येव, व्याघ्रस्येव जरद्गवः । शशकश्चित्रकस्येव, सिंहस्येव च जंबुकः ॥४७॥ मुमूर्षुर्मूर्खमुख्यः किं, युयुत्सुश्चमरासुरः । शक्रस्यास्फालितोऽसीति, सोऽहस्यत सुरैस्ततः॥४८॥ युग्मं ॥ स नश्यन् लघुदेहोऽभून्, महादेहोऽपि तत्क्षणात् । तूर्णं तूर्णमधाविष्ट, वातोद्धूत इवांबुदः ॥४९॥ तनूकृततनोस्तस्य, गोधाया इव पृष्ठतः । अन्वागच्छन्नशोभिष्ट, ज्वालामालाकुलोऽशनिः ॥५०॥ सहसा मुक्तमात्रेऽथ, वज्रे वज्रीत्यचिंतयत् । असुराणामिहागंतुं, न स्याच्छक्तिः स्वतस्ततः॥५१॥ जिनस्य जिनचैत्यस्य, महर्षेर्वाऽपि निश्रया । अन्वायाच्चमरो नूनं,वात्ययेवानलो दिवम्॥५२॥ विचिंत्येत्यवधर्ज्ञात्वा, शक्रस्तं स्वामिनिश्रया । तत्रायातं व्रजंतं च, निरैक्षिष्ट प्रभुं प्रति ॥५३॥—हा हा हतोऽहमस्मीति, वदन् वज्राध्वना हरिः । त्रुटद्धाराद्यलंकारो,दधावे सर्वरंहसा ॥५४॥ स्वभूमित्वादधस्ताच्च, चमरेंद्रोऽगमद् द्रुतम् । वज्रं तत्पृष्ठतो वेगाद्, वज्री चातिजवात्ततः ॥५५॥ प्राप्तप्राये पवौ प्राप्य, चमरश्चरमं जिनम् । रुजार्त्त इव जीवातुमुज्जिजीव जवादसौ ॥ ५६ ॥ शरणं शरणं भूयाः, स्वामिन्नेवं वदन्नसौ । कुंथुवल्लघुदेहोऽन्तर्निलिल्ये स्वामिपादयोः॥५७॥ चतुर्भिरंगुलैः स्वामिपादाप्राप्तं पविं तदा । इंद्रो मुष्ट्याऽग्रहीद्यद्वत्, सर्पं गारुडिको द्रुतम्॥५८॥ प्रभुं प्रदक्षिणीकृत्य,प्रणिपत्य पुरंदरः । कृतांजलिपुटः प्रोचे, भक्तिनिर्भरमानसः ॥५९॥ स्वामिन्नाज्ञासिषं यत्त्वत्प्रभावाच्चमरासुरः । मामुपद्रोतुमायासीन्नंष्टा चायमिहैष्यति ॥६०॥ तेनामुंचं पविं पश्चाच्चावधेरधुनाऽबुधम् । क्षुण्णमेतन्ममाऽऽगस्य, त्वं क्षमस्व क्षमानिधे ! ॥६१॥ प्रोच्येत्युत्तरपूर्वस्यां, स्थित्वा वामांह्रिणा महीम् । रोपोच्छित्यै चिराहत्यै, हरिश्चमरमब्रवीत् ॥६२॥ त्वयैतच्चारु चक्रे भो !, युधि स्वाभयदायकः । गुरुः सर्वगरिष्ठानां, शिश्रिये शरणं प्रभुः ॥६३॥ शतकोटीकु-

शानौ तत्रापतस्त्वं पतंगवत् । त्यक्त्वा वैरं मया मुक्तो, निर्भीकः सुखभाग् भव ॥६४॥ असुरेन्द्रमिति प्रोच्य, सुरेन्द्रो जिननायकम् । नत्वा गत्वा निजं स्थानं, विललास यथासुखम् ॥६५॥ दूरं गतं हरिं मत्वा, चमरश्चमरागवत् । निर्गत्य स्वामिपादांतात्, प्रभुं नत्वा व्यजिज्ञपत् ॥६६॥ प्रभविष्णुं प्रभुं चेत् त्वामकरिष्यं पुरा प्रभो ! । नाभविष्यं ततोऽवश्यमस्यानर्थस्य भाजनम् ॥६७॥ परं पराभवोऽप्येषोऽधुनोग्रौषधपानवत् । ममाजनि जिनाधीश !, मिथ्यात्वगदसूदनः ॥६८॥ किंच विश्वैककल्पद्रोर्वीरस्य चरणौ यदि । न प्राप्स्यं शरणं तन्मे, न मोक्षः कुलिशाद् ध्रुवम् ॥६९॥ मन्ये स्वं जगतो ज्येष्ठमिदानीं स्वामिना त्वया । अचिरेण यदाप्स्यामि, शिवसाम्राज्यमप्यहम् ॥७०॥ भक्तिगर्भमिति प्रोच्य, नत्वेशं चमरासुरः । गत्वा चमरचंचायां, सिंहासन उपाविशत् ॥७१॥ ततः स्वागतिकानूचे, स्वकान् सामानिकादिकान् । मध्यस्थीभूय युष्माभिर्यदुक्तं तदभूत्तथा ॥७२॥ किंच विश्वैककल्पद्रोर्वीरस्य चरणौ यदि । न प्राप्स्यं शरणं तन्मे, न मोक्षः कुलिशाद् ध्रुवम् ॥७३॥ सहस्रैः स चतुःषष्ट्या, सामानिकदिवौकसाम् । तच्चतुर्गुणितैश्चात्मरक्षै रक्षापरायणैः ॥७४॥ त्रायस्त्रिंशैस्त्रयस्त्रिंशत्प्रमितैः प्रमदोद्धुरैः । त्रिपर्षद्गतदेवानामनेकैश्च सहस्रकैः ॥७५॥ चतुर्भिर्लोकपालैश्च, सुरलोकस्य पालकैः । सप्तभिश्च महानीकैरनीकेशैश्च सप्तभिः ॥७६॥ षड्भिश्चाग्रमहीपीभिः, सार्धं सर्वर्धिसंयुतः । दैत्येन्द्रो वंदितुं वीरं, प्रतस्थे स्थिरभक्तिभाक् ॥७७॥ द्वीपोदधीनसंख्यातानुल्लङ्घ्यैव क्षणादपि । सुंसुमारपुरं प्राप, प्रभुपादैः पवित्रितम् ॥७८॥ विमानरत्नादुत्तीर्य, समं सामानिकादिभिः । स त्रिः प्रदक्षिणीकृत्य, प्रणत्य परमेश्वरम् ॥७९॥ गधर्वानीकनाट्यानीकाभ्यां सार्धं स्वयं तथा । विधाय विधिवन्नाट्यं, द्वात्रिंशद्बद्धनामकम् ॥८०॥ चमरेन्द्रः पुनर्नत्वा, जिनेंद्रं परया मुदा । धन्यंमन्यो निजं स्थानमियाय सपरिच्छदः ॥८१॥ दानवेन्द्र इति नाट्यविश्रुतः, सागरायुरनुभूय तत्सुखम् । नृत्वमाप्य स विदेहभूतले, दीक्षया च शिवमाश्रयिष्यते ॥८२॥ नाट्ये चमरेन्द्रकथा ॥

तथा नारदेन तु नाट्यविधिर्यथा कृतस्तथा ग्रंथांतरादवसेयः॥ सांप्रतं निशीथोक्तः प्रभावतीदृष्टांतः—

इहेव जंबूदीवे दीवे दाहिणड्ढभरहे चंपाणामं नयरी, अणंगसेणो णाम सुवण्णगारो, सो अईवथीलोलो, सो य जं रूववइं कन्नं पासइ तं बहुदविणजायं दाउं परिणेइ, एवं तेण किल पंच इत्थिसया मेलिया, सो ताहिं सद्धिं माणुस्सए भोगे भुंजमाणो विहरइ। इओ य पंचसेलं नाम दीवं,तत्थ विज्जुमाली नाम जक्खो परिवसइ,सो य चुओ,तस्स दो अग्गमहिसीओ—हासा पहासा य, ताओ य मणक्खेवकरे विब्भमे दंसिंति, अक्खित्तो सो ताहिं,हत्थं पसारेउमारद्धो,ताहिं भणियं—जइ ते अम्हेहिं कज्जं तो पंचसेलं दीवं इज्जाहित्ति भणित्ता ताओ अईसणं गयाओ, इयरो विविहपलावीभूओ, अथ रन्नो दीणाराइ दाऊण उग्घोसेण पडहं नीणावेइ, इमं उग्घोसिज्जइ—जो अणंगसेणं पंचसेलं दीवं पावेइ तस्स सो दविणकोडिं पयच्छइ, एवं घोस्समाणे एगेण नावियथेरेण भणियं—अहं पावेमित्ति, छिक्को पडहो, तस्स दिन्ना कोडी, ते दुयग्गा गहियसंबला आरूढा नावं, जाहे दूरं गया ताहे नाविएण पुच्छियं, तुमं किंचि अग्गओ जलोवरिं पाससि ?,तेण भणियं—नवत्ति, जाहे पुणो दूरं गओ ताहे पुच्छिओ, तेण भणियं—किंचि माणुससिरप्पमाणं घणंजणवन्नं दीसइ, नाविएण भणियं—एस पंचसेलयदीवयनगस्स धाराए वडरुक्खो,एसा नावा एयस्स अहेण जायइ,एयस्स परभागे जलावत्तो,तुमं किंचि संबलं घेत्तुं दक्खो होउं वडसालं विलग्गिज्जासि,अहं पुण सनावाए जहावत्ते गच्छिहामि, तुमं जाहे जलं वेलाए ओययं भवइ ताए नगधाराए नगधाराए नगं आरुहित्ता ओयर पंचसेलयदीवं, तत्थ जत्थ ते अभिप्पेयं तत्थ गच्छिज्जासु, अन्ने भणंति—तुमं इत्थ वडरुक्खे आरुढो ताव अच्छसु जाव उवसंझवेलाए महंतो पक्खिणो आगमिस्संति पंचसेलगदीवाउ, ते राओ वसित्ता पभाए पंचसेलगदीवं चेव गमिस्संति, तेसिं चलणविलग्गो गच्छिज्जसु, जाव य सो थेरो एवं कहेइ ताव संपत्ता वडरुक्खं,

तत्थ अणंगसेणो वडरुक्खमारूढो, नावियथेरो सह नावाए जलावत्ते गओ, एएसिं पगाराणं अन्नतरेण सो गओ, परिब्भमंतेण दिट्ठाओ,ताहिं संभट्ठो, भणिओ य–न एरिसेण असुइणा देहेण अम्हे परिभुंजामो, किंचि बालतवच्चरणं काउं नियाणेण य उववज्जसु, ताहे सह अम्हेहिं भोगे भुंजीहिसु, ताहे से सुस्साउमंते पुप्फफले दिण्णे, उदग्गसीयलच्छायाए पसुत्ते चेव करयलपुडे छुभित्ता चंपाए सभवणे य पक्खित्तो, पडिबुद्धो पासइ भवणं सयणपरियणं च, आढत्तो य पलविउं–हा हासे हा पहासे !, लोगेण पुच्छिज्जंतो भणइ–दिट्ठं सुयमणुभूयं जं चित्तं पंचसेलए दीवे । पसियच्छि ! रइवियक्खणि ! हा हासे हा पहासेत्ति ॥१॥ तस्स य वयंसो नाइलो नाम सावओ, सो से जिणपन्नत्तं धम्मं कहेइ, एयं करेहि, तओ सोहम्माइकप्पेसु दीहकालठिइओ सह वेमाणिणीहिं उत्तमे भोगे भुंजिस्ससि, किमेएहिं अवधूएहिं वाणमंतरीएहिं अप्पकालठिईएहिं ?, सो तं असद्दहंतो सयणपरियणं च अगणंतो नियाणं काउं इंगिणीं पडिवज्जइ, अन्नया कालगओ उववन्नो पंचसेलए दीवे विज्जुमाली नाम जक्खो, हासापहासाहिं सह भोगे भुंजमाणो विहरइ । सोऽवि नाइलो सावगो सामन्नं काउं आलोइयपडिक्कंतो अच्चुए कप्पे सामाणिओ जाओ, सोवि तत्थ विहरइ । अन्नया नंदीसरवरदीवे अट्ठाहियामहिमनिमित्तं सयं इंदाणत्तीहिं अप्पऽप्पणो निओगेहिं निउत्ता देवसंघाया मिलंति, विज्जुमाली जक्खस्स आउज्जे निओगो, पडहमणिच्छंतो बला नीओ, देवसंघस्स य दूरत्थो आउज्जं वायंतो नाइलदेवेण दिट्ठो,पुव्वाणुराएण य तप्पडिबोहत्थं नाइलदेवो तस्स समीवं गओ,तस्स तेयं असहमाणो पडहमंतरे देइ, नाइलदेवेण पुच्छिओ–मं जाणसित्ति,विज्जुमालिणा भणियं–को तुब्भे सक्काइए देवे न याणइत्ति ?, देवेण भणियं–परभवं पुच्छामि, नो देवत्तं, विज्जुमालिणा भणियं–न याणामि ते, तओ देवेण भणियं–अहं ते परभवे चंपाए नयरीए वयंसो आसि नाइलो नाम, तुमे तया मम वयणं न कयं तेण अप्पिड्ढिएसु उववन्नो, तं एवं गए जिणप्पणीयं धम्मं

वडिवज्जसु, धम्मो से कहिओ, पडिवन्नो य, ताहे सो विज्जुमाली भणइ–इयाणिं किं मया कायव्वं ?, अच्चुयदेवेण भणियं–बोहिनिमित्तं जिणपडिमावयारं करेहि, तओ सो विज्जुमाली अट्ठाहियामहे वित्ते गंतुं चुल्लहिमवंतं गोसीसदारुमयं पडिमं देवयाणुभावेण लिव्वत्तिय रयणविचित्ताहरणेहिं सव्वालंकारविभूसियं करेइ, अन्नस्स गोसीसचंदणदारुस्स मंजूसाए पक्खिवइ, चिंतेइ य–कत्थिमं निवेसामि ?, इओ य समुद्दे वणियस्स वहणं दुव्वाउणा गहियं दुल्लइ, तस्स य डोलायमाणस्स छम्मासी वट्टइ, सो य वणिओ भीउव्विग्गो धूवकडुच्छुयहत्थो इट्ठदेवयानमुक्कारपरो अच्छइ, विज्जुमालिणा भणियं–भो भो मणुया ! अज्ज पभाए इमं ते जाणवत्तं वीयभए नयरे कूलं पाविहिइ, इमं च गोसीसचंदणदारुं दाऊण पुरजणवयं उदायणं च रायाणं मेलेउं भणिज्जसु–देवाहिदेवस्स य पडिमं करेह, एस देवाणत्ती, तओ देवाणुभावेणं नावा पत्ता वीइभयं नयरं, तओ वणिओ अग्घं घित्तुं गओ रायसमीवं, भणियं च तेण–इत्थ गोसीसचंदणे देवाहिदेवस्स पडिमा कायव्वा, सव्वं जहावत्तं वणिएण रन्नो कहियं, गओ वणिओ, रण्णावि पुरचाउविज्जे मेलेउं अक्खियं अक्खाणयं, सद्दिया वणकुट्टगा, इत्थ पडिमं करेहित्ति, कए अहिवासणे बंभणेहिं भणियं–देवाहिदेवो बंभणो, तस्स पडिमा कीरउ, वाहिओ कुहाडो, न वहइ, अन्नेहिं भणियं–विहूनू देवो, तहावि न वहइ, एवं खंडरुद्दाइया देवगणा आणत्ता, सत्थाणि वाहियाणि, न वहंति, ते एवं संकिलिस्संति, इओ य पभावइए आहारो रन्नो उवसेहाविओ, जाहे राया तत्थ वक्खित्तो नागच्छइ ताहे पभावईए दासचेडी विसज्जिया, गच्छ रायाणं भणाहि–वेलाइक्कमो वट्टइ, सव्वमुवसाहियं किं न भुंजिहित्ति, गया दासचेडी, सव्वं कहियं, तओ रन्ना भणियं–सुहियारि, अम्हं इमेरिसो कालो वच्चइ, पडिगया दासचेडी, ताहे दासचेडीए सव्वं पभावईए कहियं, ताहे पभावई भणइ–अहो मिच्छदंसणमोहिओ देवाहिदेवं न मुणइ, ताहे पभावई ण्हाया कयकोउयमंगल्ला सुक्किल्लवासपरिहाणयपरिहिया बलिधूव-

पुप्फकडुच्छुयहत्था गया, तओ पभावईए सव्वं बलिमाइ काउं भणियं—देवाहिदेवो महावीरवद्धमाणसामी तस्स पडिमा कीरउत्ति पहराहि, वाहिओ कुहाडो, एगघाएण चेव दुहा जायं, पिच्छंति (ग्रं० ४०००) य पुव्वनिव्वत्तियं सव्वालंकारविभूसियं भगवओ पडिमं, आणेउं रन्ना घरसमीवे देवाययणं काउं तत्थ ठविया, किण्हगुलियानाम दासचेडी देवयसुस्सूसकारिणी निउत्ता, अट्ठमी-चाउद्दसीसु पभावइदेवी भत्तिराएण सयमेव राओ नट्टोवहारं करेइ, रायावि तयाणुवित्तीए मुरयं वाएइ, अन्नया राओ पभावईए नट्टोवहारं करंतीए रन्नीसिरच्छाया न दिट्ठा, उप्पाउत्तिकाउं आकुलचित्तस्स रण्णो नट्टसमं मुरवक्खोडा न पडंति, रुट्ठा महादेवी, आवद्य (अवन्न)त्तिकाउं, तओ रण्णा लविअं—न मे अवन्ना, मा रूससु इमेरिसो उप्पाओ दिट्ठो, तओ चित्ताकुलयाए मुरवक्खोडाए चुक्कोत्ति, तओ पभावईए लवियं—जिणसासणपवन्नेहिं मरणस्स न भेयव्वं, अन्नया पुणोऽवि पभावईए ण्हायकयकोउयाए दासचेडी वाहित्ता—देवयगिहपवेसा सुद्धवासा आणेहित्ति भणिया, ते य सुद्धवासा आणिज्जमाणा कुसुंभरागरत्ता इव अंतरे संजाया उप्पायदोसेण, पभावईए य अद्दाए मुहं निरिक्खंतीए ते वत्था पणामिया, तओ रुट्ठा पभावई भणइ—देवयाययणंमि पविसंतीए किं मे असंगलं करेसित्ति ?, किमहं पइगिहं पवेसिणित्ति, अद्दाएण दासचेडी आहया संखावत्ते, मया दासचेडी, खणेण वत्थावि साभाविया जाया, पभावई चिंतेइ—अहो मे निरवराही दासचेडी वावाइया, चिराणुपालियं च मे थूलगपाणाइवायवयं भग्गं, एसोवि मे उप्पाउत्ति, तओ रायाणं विन्नवेइ—तुब्भेहिं अब्भणुन्नाया पव्वज्जमब्भुवेमि, मा अपरिचत्तकामभोगा मरामित्ति, रन्ना भणियं—जइ मे सुधम्मे सं-बोहेसित्ति, तीए अब्भुगयं, निक्खंता, मासं संजममणुपालित्ता आलोइयपडिक्कंता मया, उववन्ना वेमाणिएसु, तओ पासित्ता पुव्व-भवं पुव्वाणुराएण संगारविमोक्खणत्थं बहूहिं वेसंतरेहिं रन्नो जइनधम्मं कहेइ, रायावि तावसभत्तो तं नो पडिवज्जइ, ताहे पभा-

वईदेवेण तावसवेसो कओ, पुप्फफलोदगहत्थो रन्नो समीवं गओ, अईव एगं रमणीयं फलं समप्पियं रण्णो, रन्ना अग्घाइयं सुरभिगंधन्ति, फरिसियं सुफासंति, आलोइयं चक्खुमणामरूवंति, आसाइयं अमयरसोवमंति, रण्णा य पुच्छिओ तावसो–कत्थ एयारिसा फला संभवंति ?, तो तावसेण भणियं–इओ नाइसन्नादूरे तावसासमे एरिसा फला संभवंति, रन्ना लवियं–दंसेहि मे तावसासमं, ते य रुक्खा, तावसेण भणियं–एहि दुयगावि तं वयामो, दोवि पयाया, राया महडाइएण सव्वालंकारेण भूसिओ गओ, पिच्छइ य मेहनिकुरंबभूयं वणसंडं, तत्थ पविट्ठो, दिट्ठो तावसासमो, तावसासमे य पिच्छइ सदारे य पत्तेगं विंदविंदठिए य मंतेमाणे, सुणेइ–एस राया एगागी आगओ सव्वालंकारो, मारेउं गिण्हामो से आहरण, राया भीओ पच्छओ ओसक्किउमारद्धो, तावसेण य कूवियं–धाह २ एस पलाओ, गिण्हह, ताहे तावसा सव्वे भिसियगणित्तियतियठियकमंडलुहत्था पधाविया, हणह गिण्हह मारहत्ति भणंता रन्नो अणुमग्गओ लग्गा, राया भीओ पलाओ, पिच्छइ एगं महंतं वणसंडं, सुणेइ य तत्थ चंदमित्र सोमं कामदेवमिव सुरूवं नागकुमारमिव सुनेवत्थं विहस्सइं पिव सव्वत्थ विसारयं बहूणं समणाणं समणीणं सावगाणं साविगाण य सुस्सरेणं सरेणं धम्ममाइक्खमाणं, तत्थ राया भीओ गओ सरणं सरणंति भणंतो, समणेण य लवियं–भो न भेयव्वंति, बुद्धोसित्ति भणित्ता तावसा पडिगया, रायावि तेसिं विप्परिणओ ईसिं आसत्थो, गओ, धम्मो य से कहिओ, पडिवन्नो य धम्मो, पभावईदेवेण वि सव्वं पडिहरियं, राया अप्पाणं पिच्छइ–सिंहासणत्थो चेव चिट्ठामि, न कहिंचि गओ आगओ वावि, चिंतेइ य–किमेयंति ?, पभावइदेवेण आगासत्थेण भणियं–सव्वमेयं मया तुब्भ पडिबोहणत्थं कयं, धम्मे ते अविग्घं भवउ, अन्नत्थवि मे अहाकम्मे संभरिज्जासित्ति लवित्ता गओ पभावइदेवो, सव्वपुरजणवएसु य पारंपरेण निग्घोसो निग्गओ–वीयभए नगरे देवावतारिया पडिमत्ति । इओ य गंधार-

जणवयाउ सावगो पव्वइउकामो वेयड्ढे सव्वतित्थयराणं सव्वंरयणचिंचइयाउ कणगपडिमाउ साधुसगासे सुणित्ता ताउ दच्छामित्ति तत्थ गओ, तत्थ देवयाराहणं करित्ता विहाडियाउ पडिमाउ, तत्थ सो सावगो थयथुईहिं थुणंतो अहोरत्तं निवसिओ, तस्स निम्मलर-यणेसु न मणागमवि लोभो जाओ, देवया चिंतेइ-अहो माणुसमलुद्धयति तुट्ठा देवया, ब्रूहिं वरं भणंती उवट्ठिया, तओ सावगेण लवियं-नियत्तोऽहं माणुस्सएसु कामभोगेसु, किं मे वरेणं कज्जंति, अमोहं देवया दरिसणंति भणंति, भणित्ता देवया अट्ठसयं गुलियाणं जहाचिंतियमणोरहाणं पणामेइ, ताओ य गहिया सावगेण, तओ य निग्गओ, सुयं चऽणेण वीयभए नगरे सव्वालंकारविभूसिया देवावतारिया पडिमा, तं दच्छामित्ति तत्थ गओ, वंदिया पडिमा, कइवि दिणे पज्जुवासामित्ति तत्थेव देवयाययणे ठिओ, सो य तत्थ गिलाणो जाओ, विदेसिओ सावगुत्तिकाउं कण्हगुलियाए पडियरिओ, तुट्ठो सावगो, किं मम पव्वइउकामस्स गुलियाहिं?, एस भोगत्थिणी तेण तीसे तं जहाचिंतियमणोरहाणं अट्ठसयं गुलियाणं दिन्नं, गओ सावगो, ताए किण्हगुलियाए विणासणत्थं किमेयाउ सच्चा जहाचिंतियमणोरहाउ उत नेति, जइ सच्चा उत्तत्तकणगवन्ना सुरूवा सुभगा य भवामीति एगा गुलिया भक्खिया, ताहे देवया इव कामरूविणी परावत्तियवेसा उत्तत्तकणगवन्ना सुरूवा सुभगा य जाया, तउप्पभिइं जणो भासिउमाढत्तो-एसा किण्ह-गुलिया देवयाणुभावेण उत्तत्तकणगवन्ना जाया, इयाणिं होउ से नामं सुवन्नगुलियत्ति, तं च फुरियन्ति सव्वजणवएसु, तओ सा सुवन्नगुलिया गुलिगलद्धपच्चया भोगत्थिणी एगं गुलियं मुहे पक्खिविउं चिंतेइ-पज्जोओ राया मे भत्तारो भविज्जउत्ति, वीयभयाउ उज्जेणी किल असीइमितेसु जोयणेसु, तत्थ य अकम्हा रायसभाए पज्जोयस्स अग्गओ पुरिसा कहं कहिंति-वीयभए नयरे देवया-वतारियपडिमासुस्सूसकारिका कण्हगुलिया देवयाणुभावेण सुवन्नगुलिया जाया अईववरूवसोहग्गलायन्नजुत्ता बहुजणस्स पत्थणिज्जा य,

तं सुणित्ता पज्जोओ तस्स गुणुम्हाइओ दूयं विसज्जेइ उदायणस्स,एयं सुवन्नगुलियं मम विसज्जेसुत्ति, गओ दूओ, विन्नत्तो उदायणो, रुट्ठेण उदायणेण विसज्जिओ, असक्कारिओ असम्माणिओ दूओ गओ,जहावत्तं दूएण पज्जोयस्स कहियं, पुणो पज्जोएण रहस्सिओ दूओ विसज्जिओ सुवन्नगुलियाए–जइ मं इच्छसि आगच्छसि वा तोऽहं रहस्सियमागच्छामि, तीए भणियं–जइ पडिमा आगच्छइ तो आगच्छामि, इहरा नागच्छेहं, दूएण कहियं पज्जोयस्स, तओ पज्जोओ नलगिरिणा हत्थिरयणेण संनद्धघनिम्मियगुडेण अप्पपरिच्छदेण गओ अहोरत्तेण, पत्तो पउसवेलाए, पविट्ठा वरा, कहियं सुवन्नगुलियाए, तत्थ य बालवसंतकाले लिप्पमहे वट्टमाणे पुव्वकारिया पज्जोएण लिप्पगपडिमा मंडियपसाहिया गीयाउज्जनिग्घोसेण रायभवणं पवेसिया, देवावतारियपडिमायणं च, भवियव्वयाए छलेण य तंमि आययणे सा ठविया, इयरा देवावतारियपडिमा कुसुमोवमालिया गीइवाइत्तनिग्घोसेण सव्वजणसमक्खं लिप्पगच्छलेण नीणिया सुवन्नगुलिया य, पडिमं सुवन्नगुलियं च पज्जोओ हरिउं गओ, जं च रयणिं नलगिरी वीयभए नगरे पवेसिओ तं रयणिं अंतो जे गया ते नलगिरिगंधहत्थिणो गंधेण आलाणखंभे भित्तुं सव्वेवि लुलिया, सव्वजणस्स जायं–किमेयंति ?,महामंतिजणेण य उन्नीयं–नूणं इत्थ नलगिरिहत्थी खंभविप्पणट्ठो आगओ अन्नो वा कोइ वणहत्थी, पभाए रन्ना गवेसावियं–दिट्ठाणि नलगिरिस्स पआणि, पवित्तिवाउएहिं कहियं णलो राइणो आगओ पडिगओ य, गवेसाविया सुवन्नगुलिया णवत्ति, नायं तदट्ठाय आगओ आसित्ति, रन्ना भणियं–पडिमं गवेसहत्ति, गविट्ठा, कुसुमोमालिया चिट्ठइत्ति देवयावतारियपडिमाण य गोसीसचंदणसीयाणुभावेण कुसुमा नो मिलायंति, ण्हायपयत्तो राया मज्झण्हदेसकाले देवाययणं गओ, पिच्छइ य पुव्वकुसुमे परिमिलाणे, रण्णा चिंतियं–किमेसमुप्पाओ उय अन्ना चेव पडिमत्ति, ताहे अवणेउं कुसुममालं निरिक्खिया, नायं हडा पडिमा, रुट्ठो

उदायणो, दूयं विसज्जेइ, जइ ते हडा दासचेडी तो हडा नाम, विसज्जेह मे पडिमं, गयपच्चागएण दूएण कहियं उदायणस्स, न विसज्जेइ पज्जोओ पडिमं, तओ उदायणो दसहिं मउडबद्धराईहिं सह सव्वसाहणबलेण पयाओ, कालो य गिम्हो वट्टइ, मरुजणवयमुत्तरंतो य जलाभावे सव्वखंधावारो तइयदिणे तिसाभिभूओ विसन्नो. उदायणस्स रण्णो कहियं, रण्णावि अप्पबहुं चिंतेउं नत्थि अन्नो उवाओ, सरणं वा नत्थि, परं पभावई देवी सरणंति पभावइदेवो मणसीकओ, पभावइदेवस्स कयसंगारस्सासणकंपो जाओ, तेण ओही पउत्ता, दिट्ठा उदायणस्स आवई, तओ सो आगओ तुरंतो, पिणद्धमंबरं जलधरेहिं, पुव्वं अग्घाइओ जणवओ य विरलतुसारसीयलेण वाउणा, तओ पच्छा चालणिपक्खित्तंपि बहु जलं जलधरेहिं मुक्कं सरसरस्स, तं च जलं देवयाकयपुक्खरणीहिं, अबुहजणाणं तिपुक्खरं तित्थं पवत्तियं, तओ उदायणो गओ उज्जेणीं, रोहिया य, बहुजणक्खए वट्टमाणे उदायणेण पज्जोओ भणिओ–तुब्भ मज्झ य विरोहो, अम्हे चेव दुयग्गा जुज्झामो, किं सेसजणवयक्खएणंति ?, अब्भुवगयं पज्जोएणं, दुयगाणवि दूयसंचारेण संलावो, कहं जुज्झामो ?–किं रहेहिं गएहिं अस्सेहिंति ?, उदायणेण भणियं–जारिसो तुब्भ नलगिरिहत्थी एरिसो मम नत्थि तहावि तुब्भ जेण अभिप्पेयं तेण जुज्झामो, पज्जोएण लवियं–गएहिं असमाणं जुज्झं, कल्लं रहेहिं जुज्झामुत्ति, दुयगाणवि अवट्ठियं, बीयदिणे उदायणो रहेण उवट्ठिओ, पज्जोओ नलगिरिणा हत्थिरयणेण, सेसखंधावारो संनद्धपरिवारो पिच्छगो उदासीणो चिट्ठइ, उदायणेण भणियं–एस भट्ठपइन्नो हओ मया, संपलग्गं जुज्झं, आगओ हत्थी, उदायणेण चक्कब्भमो छूढो, चउसुवि पायतलेसु विद्धो, सरेहिं पूरिओ पडिओ हत्थी, एवं उदायणेण रणे जिणित्ता गहिओ पज्जोओ, भग्गं परबलं, गहिया उज्जेणी, नट्ठा सुवन्नगुलिया, पडिमा पुण देवयाहिट्ठिया संचालेउं न सक्किया, पज्जोओवि ललाडे सुणहपाएण अलंकिओ, इमं

च से नामं ललाडे चेव अलंकियं दासो दासीवई उ, उदायणो ससाहणो पडिनियत्तो, पज्जोओवि बद्धो खंधावारे, निग्गओ उदायणो, आगओ जाव दसपुरुद्देसे, तत्थ वरिसाकालो जाओ, दसवि मउडबद्धरायाणो अप्पप्पणो संनिवेसेण ठिया, उदायणस्स उवजेमणाए भुंजइ पज्जोओ, अन्नया पज्जोसवणकाले पत्ते उदायणो उववासी, तेण सूओ विसज्जिओ पज्जोयस्स, गच्छसु तं दासीवइयं पुच्छसु-किं ते उवसाहिज्जइत्ति ?, गओ सूओ,पुच्छिओ पज्जोओ, आसंकियं पज्जोयस्स-न कयाइ अहं पुच्छिओ, अज्ज पुच्छा कया, नूणं अहं विससंमिस्सेण भत्तेण मारिज्जिउकामो, अहवा किं मे संदेहेणं ? एयं चेय पुच्छामि, पज्जोएण पुच्छिओ,सूओ-अज्ज किं मे पुच्छिज्जइ ?, किमहं अज्ज मारिउकामो ?, सूएण लवियं-ण तुमं मारिज्जसु, राया समणोवासओ अज्ज पज्जोसवणाए उववासी, तो ते जं इट्ठं अज्ज उवसाहयामित्ति पुच्छिओ, तओ पज्जोएण लवियं-अहो मे पावकम्मेण वसणपत्तेण पज्जोसवणावि न नाया, गच्छ कहेह राइणो उदायणस्स-जहा अहंपि समणोवासगो अज्ज उववासी, भत्तेण मे न कज्जं, सूएण गंतुं उदायणस्स कहियं, सोवि समणोवासगो अज्ज न भुंजइत्ति, ताहे उदायणो भणइ-समणोवासगेण मे बद्धेण अज्ज सामाइयं न सुज्झइ, नय सम्मं पज्जोसवियं भवइ, तं गच्छामि णं समणोवासगं बंधणाउ मोएमि, खामेमि य सम्मं, तेण सो मोइओ, खामिओ, ललाडअंकछायणट्ठाय सोवण्णो से पट्टो बद्धो, तउप्पभिई पट्टबद्धा रायाणो जाया, एवं जइ ताव गिहिणोऽवि कयवेरा अहिगरणाइं उवसमिंति समणेहिं पुण सव्वपावविरएहिं सुट्ठुतरं उवसमेयव्वं ॥ इत्थ उ पभावईए नट्टविहाणेण होइ अहिगारो । सेससुदायणपडिबोहमाइ पत्थावओऽभिहियं ॥१॥ एवं बहू नट्टनिदंसणाइं, नाऊण तित्थुण्णइदंसणाइं । जिणिंदगेहे वहुभत्तिजुत्ता, करेह नट्टं इह भव्वसत्ता ! ॥१॥ नाट्ये प्रभावतीकथा ॥ सांप्रतं वंदनमिति नवमं द्वारं, तच्च भावपूजारूपचैत्य-

वंदनालक्षणं द्रव्यपूजाशेषं च पद्सूत्र्याऽऽह—

पणिहाणं च काऊणं, करे अन्नं तओ इमं। नाणाविहाहिं भत्तीहिं, उल्लोयं जिणमंदिरे ॥७१॥

वत्थेहिं देवंगदुगुल्लएहिं,पट्टेहिं खोमेहि य उत्तमेहिं। सुवण्णरूप्पेहिं पवालएहिं मुत्तालएहिं,च महालएहिं ॥७२॥

सुवन्नजुत्तेहिं सुगंधएहिं, नाणापयारेहिं सुगुच्छ(गंधि)एहिं ।

पुप्फाण गेहं तु करेइ रम्मं, स भत्तिजुत्तो जिणमंदिरम्मि ॥७३॥

अत्थवंतेण सुद्धेणं, गीएणं करणाइणा। जिणाणं जियमोहाणं, गायए गुणपगरिसं ॥७४॥

ततं च विततं चेव, घणं सुसिरसुतालयं। अउज्जं एवमाईयं, वाए वायावए तओ ॥७५॥

ठाणे ठाणे तओ तत्थ, सयं देइ दवावए। रासे य चचरीओ य, हिययाणंददायए ॥७६॥

प्रणिधानचैत्यवंदनेन संपूर्णचैत्यवंदनविधिः सूचितः, ततः प्राग्वत् प्रणिधानावसानं चैत्यवंदनं कृत्वा कुर्यादन्यदिदं—आसन्नोपदर्श्यमानतया प्रत्यक्षं, किं तदित्याह—नानाविधिभिः—भक्तिभिर्विच्छित्तिभिरुल्लोचं जिनमंदिरे, कैरित्याह—वस्त्रैर्देवांगैरिति—देवदूष्यैः दुकूलैः—दुकूलाख्यवृक्षत्वग्जैः पट्टैः—कौशेयैः क्षौमैश्च—कर्पासैरुत्तमैः—प्रधानैः, किंविशिष्टमित्याह—सुवर्णरूप्यैः प्रवालैर्मुक्ताफलैश्च महालयैः—महाप्रमाणैः खचितमिति शेषः। सुवर्णयुक्तैः—विशिष्टवर्णोपेतैः सुगंधिभिः नानाप्रकारैर्जलस्थलजैः सुग्रथितैः पुष्पैरिति शेषः, पुप्फाण गेहं तुत्ति पुष्पगृहं पुनः समवसरणाद्यलंकारं करोति रम्यसुभक्तियुतो जिनमंदिरे, सुभक्तियुक्त इत्यसकृदभिधानं भावयुक्तस्यैव सकलक्रियाकलापो महानिर्जराफल इति प्रदर्शनार्थं,तच्छून्यस्य तु कीर्त्यादिप्रवृत्तस्य महतोऽप्यनुष्ठानस्य वैफल्याभिधा-

नाद्, उक्तं च—क्रियाशून्यस्य यो भावो, भावशून्यस्य या क्रिया। एतयोरंतरं ज्ञेयं, भानुखद्योतयोरिव ॥१॥ जिनानां जितमोहानां गुणप्रकर्षं दुस्तपतपोलक्ष्म्यादिरूपं गायेत्, केन ?—गीतेन—गांधर्वेण, किंविशिष्टेन ?—अर्थवता वैराग्यैकरसयुक्तेन, पुनः किंभूतेन ?—करणादिना शुद्धेन, त्रिस्थानकरणादिना विशुद्धेन, तत्र त्रीणि स्थानानि उरःप्रभृतीनि तेषु करणेन—क्रियया विशुद्धं त्रिस्थानकरणविशुद्धं तद्यथा—शिरोविशुद्धं उरोविशुद्धं कंठविशुद्धं, यदि पुनः शिरः प्राप्तः सन् सानुनासिको न भवति ततः शिरोविशुद्धं, यद्वा उरःकंठशिरोभिः स्थानैः श्लेष्मरहितैर्यद् गीयते तत् त्रिस्थानकरणविशुद्धं, आदिशब्दान्मधुरादिगुणयुक्तेन, तत्र मधुरं मधुरस्वरेण गीयमानं कोकिलारुतवत्, समतालं वंशस्वरादिसमनुगतं, सललितं यत्स्वरघोलनाप्रकारेण ललतीव तत् सह ललितेन वर्त्तत इति सललितं, अत एव मनोहरमित्यादिनेति, ततं च तंत्रीयुक्तं वीणादि विततं चैव तालादि घनं कांस्यतालादि शुषिरं वंशादि, सुतालकं यत् शास्त्रोक्तपाठशुद्धं, आतोद्यमेवमाद्यं वादयति, सक्तः—सुश्रावकः, स्थाने स्थाने चैत्याग्रांगणादिरूपे, ततस्तत्र चैत्यपरिपाट्यादिकाले स्वयं दत्ते दापयति वा रासकांश्च—मंडलिकया गीतनृत्तविशेषान् लगुडरसान् वा चर्चर्यश्च प्रसिद्धाः, हृदयानंददायकानिति षट्सूत्र्यर्थः॥ ऋद्धिमत्पूजामुपसंहरन्नितरश्राद्धस्य चैत्यगमनविधिं द्विसूत्र्याऽऽह—

एवं वीही इमो सव्वो, रिद्धिमंतस्स देसिओ। इअरो निअगेहंमि, काउं सामाइअं वये ॥७७॥

जइ न कस्सइ धारेज्जा, न विवाओ अ विज्जए। उवउत्तो सुसाहुव्व, गच्छए जिणमंदिरे ॥७८॥

एवमिति 'तओ य हयगयाई'त्यादिना प्रकारेण चैत्यवंदनादिविधिरयं सर्व ऋद्धिमतो देशितः—कथितः, इतरः—अनृद्धिप्राप्तः श्राद्धो निजगृहे कृत्वा सामायिकव्रतं, स च यदि न कस्यचिद् धारयति, ऋणमिति गम्यते, न विवादश्च केनचित् सह विद्यते, तत

ईर्यादिपूपयुक्तः सुसाधुवद् गच्छति जिनमंदिरमिति ॥ तत्र च 'तिन्नि निसीही'त्यादि यद्यद् भावपूजानुयायि तत्तदस्यापि तथैव द्रष्टव्यं ॥ द्रव्यपूजायां पुष्पादिसामग्र्यभावात् संभवद्विधिमाह—

काएण अत्थि जइ किंचि, कायव्वं जिणमंदिरे। तओ सामाइअं मोत्तुं, करेज्ज करणिज्जयं ॥७२॥ द्वारं ॥

कायेन—शरीरेणास्ति यदि किंचित्पुष्पादिशोध(पुष्पग्रन्थ)नादि कर्तव्यं जिनमंदिरे ततः सामायिकं मुक्त्वा कुर्यात् यत्करणीयं, ननु कथमिह सामायिकत्यागेन द्रव्यस्तवो विधीयते ?, अत्रोच्यते, सामायिकं सकलकालमप्यस्य स्वायत्तत्वात् यत्र तत्र वा क्षणेषु बहुशोऽपि कर्तव्यं स्यात्, चैत्यकर्तव्यं तु समुदायायत्तत्वात् कादाचित्कं प्रस्तावे च तस्मिन् क्रियमाणे विशेषपुण्यसद्भावात् तदेव कर्तव्यं, यदागमः—"जीवाण बोहिलाभो, सम्मद्दिट्ठीण होइ पियकरणं। आणा जिणिंदभत्ती तित्थस्स पभावणा चेव ॥१॥" इत्यादयोऽनेके गुणाश्चैत्यकृत्यकरणे इति द्वारं॥७२॥ अधुना 'गुरुमगासे पच्चक्खाण'मिति दशमं द्वारं, तत्र वंदनकपूर्वाण्यालोचनाक्षामणप्रत्याख्यानानि स्युः अतस्तावत् प्रथमं वंदनकं विव्रियते—मुखवस्त्र२५ देह२५ वंदन२५ सत्काः पृथगत्र पंचविंशतिकाः। स्थानवचोगुणषट्कं, पंच वंद्या अवंद्याश्च॥१॥ वंदनकज्ञातानि च पंचै५कोऽवग्रहो१ऽभिधाः पंच५। पंच निषेधा५स्त्रिशत्रियुता आशातनाश्च ३३ गुरोः॥२॥ द्वात्रिंशदत्र दोषा३२अष्ट पुनः कारणानि८ सर्वाग्रम्। वंदनकस्थानानां द्विनवत्यधिकं शतं ज्ञेयं॥३॥ तत्र 'दिट्ठिपडिलेह एगा पक्खोडा होंति तिन्नि तिन्नेव। अक्खोडा पक्खोडा नव२मुहपत्ति पणवीसा॥१॥ दो बाहुसीसवयणे हिययंमि हु हुंति तिन्नि तिन्नेव। चउरो पिट्ठीइ तहा छप्पाए देहपणवीसा॥२॥ आवश्यक२५--दुओणयं अहाजायं, किइकम्मं बारसावयं। चउस्सिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं॥१॥ स्थानानि वचांस्यवग्रह आशातनाश्च सूत्रेण सह व्याख्यास्यंते, गुणांश्च सूत्रकारोऽग्रे वक्ष्यति, वंद्या—वंदनकार्हाः—'आयरिय उवज्झाए पवत्ति थेरे

तहेव राइणिए । एएसिं किइकम्मं कायव्वं निज्जरट्ठाए॥१॥ तत्राचार्योपाध्यायौ प्राग् नमस्कारेण व्याख्यातौ,प्रवर्त्यादिस्वरूपं किंचिदुच्यते, यथा–'तवसंजमजोगेसुं जो जोगो तत्थ तं पवत्तेइ । असहं च नियत्तेई गणतत्तिल्लो पवत्ती उ ॥१॥ थिरकरणा पुण थेरो पवित्तिवावारिएसु अत्थेसु । जो जत्थ सीयइ जई संतबलो तं थिरं कुणइ ॥२॥ रत्नाधिको–गणावच्छेदकः, यथा 'उद्धावणापहावणखित्तोवहिमग्गणासु अविसाई । सुत्तत्थतदुभयविऊ गणवच्छो एरिसो होइ ॥१॥ चूर्णौ त्वन्यमतेन एवमपि, यथा–"अन्ने पभणंति अन्नोऽवि जो तहाविहो राइणिओ सोऽवि वंदेयव्वो,राइणिओ नाम जो नाणदंसणचरणसाहगे सुट्ठ पयउ"त्ति,अवंद्या–निष्कारणे वंदनानर्हाः ५, यथा 'पासत्थो ओसन्नो होइ कुसीलो तहेव संसत्तो । अहछंदोऽविय एए अवंदणिज्जा जिणमयंमि ॥१॥ तत्र पार्श्वे ज्ञानादीनां तिष्ठतीति पार्श्वस्थः, यथा–'सो पासत्थो दुविहो सव्वे देसे य होइ नायव्वो । सव्वंमि नाणदंसणचरणाणं जो उ पासंमि ॥१॥ देसंमि य पासत्थो सिज्जायरऽभिहडरायपिंडं च । नीयं च अग्गपिंडं भुंजइ निक्कारणे चेव॥१॥ कुलनिस्साए विहरइ ठवणकुलाणि य अकारणे विसइ । संखडिपलोयणाए गच्छइ तह संथवं कुणइ ॥२॥ अवसीदति स्म क्रियाशैथिल्यान् मोक्षमार्गे श्रांत इवावसन्नः, यथा–ओसन्नोऽविय दुविहो सव्वे देसे य तत्थ सव्वंमि । ओबद्धपीढफलगो ठवियगभोई य नायव्वो ॥१॥ आवस्सय१ सज्झाए२ पडिलेहण३ झाण४ भिक्ख५ भत्तट्ठे६ । आगमणे७ निग्गमणे८ ठाणे९ य निसीयण१० तुयट्टे११॥२॥ आवस्सयाइं न करइ अहवावि करेइ हीणमहियाइं। गुरुजणबलाइ तहा भणिओ एसो उ ओसन्नो॥२॥ कुत्सितं–ज्ञानादित्रयविराधकं शीलं–स्वभावो यस्य स कुशीलः, यथा–कालविणयाइरहिओ नाणकुसीलो उ दंसणे इणमो। निस्संकियाइविजुओ चरणकुसीलो इमो होइ ॥१॥ कोउयभूईकंमे पसिणापसिणे निमित्तमाजीवी । कक्ककुरुयाइलक्खण उवजीवइ विज्जमंताई ॥२॥ संविग्नासंविग्नसंसर्गात्तद्भावं संसजति सेति संसक्तः,

यथा-पासत्थाईएसुं संविग्गेसुं च जत्थ मिलई उ । तहिं तारिसओ होई पियधम्मो अहव इयरो य ॥१॥ यथाकथंचिद् गुर्वागम-निरपेक्षतया सर्वकार्येषु छंदः-अभिप्रायो यस्य स यथाछंदः, यथा 'उस्सुत्तमणुवइट्ठं सच्छंदविगप्पियं अणणुवाई । परतत्तिपवत्ते तिंतिणे य इणमो अहाछंदो ॥१॥ पासत्थाई वंदमाणस्स नेव कित्ती न निज्जरा होइ । कायकिलेसं पावइ कुणई तह कम्मबंधं च ॥१॥ ज्ञातानि ५-दव्वे भावे वंदण १ रयहरणा २ ऽऽवत्तनमण ४ विणएहिं ५ । सीयल १ खुड्डय २ कण्हे ३ सेवय ४ पालय ५ उदाहरणा ॥१॥ तत्र वंदने गुणस्तुतौ शीतलाचार्यदृष्टांतः, स चायं-एगस्स रण्णो पुत्तो सीयलो नामं, सो य निव्विण्णकामभोगो पव्वइओ, तस्स य भइणी अण्णस्स रण्णो दिण्णा, तीसे चत्तारि पुत्ता, सा तेसिं कहंतरे कहेइ, जहा तुब्भं माउलो पव्वइओ, एवं च कालो वच्चइ, तेऽवि अण्णया तहारूवाणं थेराणं अंतिए पव्वइया, सावगो य नगरं पवेसिउकामो, सो भणिओ-सीयलायरियाणं कहेहि -जे तुब्भं भायणिज्जा ते आगया, वियालोत्ति न पविट्ठा, तेण कहियं, तुट्ठो, इमेसिंपि रत्तिं सुभेण अज्झवसाणेण चउण्हंपि केवलनाणं समुप्पण्णं, पभाए आयरिया दिसाओ पलोयंति, इत्ताहे मुहुत्तेणं एहिंति, पोरिसिसुत्तं मन्ने करिंति, तयो अइचिराविए देवकुलियं गया, ते वीयरागा नाढायंति, तओ आयरिएणं दंडओ ठविओ, पडिक्कंते आलोइए भणइ-कओ वंदामि ?, ते भणंति-जओ भे पडिहायइ, सो चिंतेइ-अहो दुट्ठसेहा न लज्जंति, तहवि रोसेणं वंदइ, चउसुवि वंदिएसु-केवली किर पुव्वपवत्तं उवयारं न भंजइ, जाव न नज्जइ, एस जीयकप्पो, तेसु नत्थि पुव्वपवत्तो उवयारुत्ति, भणंति-दव्ववंदणेणं वंदिया, इयाणिं भाववंदणएणं वंदाहि, तं च किर वंदंतं कसायकंडएहिं छट्ठाणवडियं पिच्छंति, सो भणइ-एयंपि नज्जइ ?, भणंति-बाढं, किं अइसओ अत्थि ?, आमं, किं छउमत्थिओ ? केवलीओ ?, केवली भणंति-केवलीओ, सो किर ताहे उद्धुसियरोमकूवो अहो मए मंदभग्गेण केवली आ-

साइयत्ति संवेगमागओ, तेहिं चेव कंडयठाणेहिं पडिनियत्तुत्ति, जाव अपुव्वकरणं पविट्ठो, केवलनाणं समुप्पण्णं चउत्थवंदणसमत्तीए,सा चेव काइया चिट्ठा एगंमि बंधाय एगंमि मुक्खाय, पुव्वं दव्ववंदणं आसि, पच्छा भाववंदणं जायं१ । द्रव्यचितौ रजोहरणादिधारणे भावचितौ ज्ञानादित्रये क्षुल्लकाचार्यकथा–एगो खुड्डगो, आयरियेण कालं करेमाणेण लक्खणजुत्तो आयरिओ ठविओ, ते सव्वे पव्वइयगा तस्स खुड्डगस्स आणानिद्देसे वट्टंति, तेसिं च गीयत्थाणं थेराणं मूले पढइ, अन्नया मोहणिज्जेण बाहिज्जंतेण भिक्खाए गएसु साधुसु वितिज्जएण सन्नापाणीयं आणावित्ता मत्तयं गहाय उवहयपरिणामो वच्चइ एगदिसाए,परिस्संतो इक्कंमि वणखंडे वीसमइ; तस्स य पुप्फियफलियस्स आसन्ने समीरुक्ख(झुंखर)स्स पेढं बद्धं, लोगो तत्थ पूयं करेइ, तिलगबउलाईणं न किंचिवि, सो चिंतेइ–एयस्स पेढस्स गुणेण एईसी पूया किज्जइ, ताहे सो भणइ–एए किं न अच्चेह ?, ते भणंति–पुव्विल्लएहिं कइल्लयं एयं, तं च जणो वंदइ, तस्सवि चिंता जाया--पिच्छ जारिसं उंखरं तारिसो अहं, अन्नेऽवि तत्थ बहुस्सुया रायपुत्ताई इब्भपुत्ताई अत्थि, ते न ठविया, अहं ठविओ, ममं पूयंति, कत्तो मज्झ समणत्तणं ?,रयहरणेण चिइगुणेणं वंदंति, पडिनियत्तो,इयरेवि भिक्खाओ आगया, मग्गंति,न लहंति सुइं वा पउत्तिं वा,सो आगओ आलोएइ जहाऽहं संनाभूमीं गओ,मूलाओ(सूलो)उद्धाइओ,तत्थ पडिओ अच्छिओ, इयाणिं उवसंते आगओमि,ते तुट्ठा य,पच्छा गीयत्थाणं आलोएइ पायच्छित्तं च पडिवज्जइ,तस्स पुव्विं दव्वचिई पच्छा भावचिई जाया२ । आवर्त्तादिकृतिकर्म्मणि कृष्णदृष्टांतः,स च प्रागुक्तकृष्णचरितात् ज्ञेयः ३ । शिरोनमनपूजायां सेवकदृष्टांतः, स चायं–एगस्स रन्नो दो सेवगा,तेसिं अल्लीणा गामा,तेसिं सीमानिमित्तं भंडणं जायं,ताहे नगरं रायसमीवं संपत्थिया, तेहिं साधू दिट्ठो, तत्थेगो भणइ–साधुं दृष्ट्वा ध्रुवा सिद्धिः, तिपयाहिणं काऊणं वंदित्ता गओ, वितिओऽवि तस्स किर उग्घुट्ठयं करेइ, सोऽवि वंदइ, तं चेव भणइ,

व्यवहारो आबद्धो, जिओ, तस्स दव्वपूया, इयरस्स भावपूया ४॥ विनयकर्म्मणि शांबपालकदृष्टांतः, एषोऽपि प्रागुक्तकृष्णचरितान् ज्ञेयः ५ । नामानि प्रागुक्तशीतलादिदृष्टांतेषु यथाक्रमं भावितार्थानि, वंदण १ चिइ २ किइकम्मं ३ पूयाकम्मं ४ विणयकम्मं च ५ । वंदणगस्स य एए नामाइं हवंति पंचेव ॥१॥ वंदनकस्य पंचैते निषेधस्थानानि—वक्खित्त१ पराहुत्ते२ पमत्ते ३ मा कयाइ वंदिज्जा । आहारं च करेंते ४ नीहारं वा जइ करेइ ५ ॥१॥ व्याक्षिप्तोऽनुयोगप्रतिलेखनाद्यैः प्रमत्तो—निद्राद्यैः। दोषाः ३२ 'अणाढियं च थद्धं च, पविद्धं परिपिंडियं । टोलगइयंकुसं चेव, तहा कच्छभरिंगियं ॥१॥ मच्छुव्वत्तं मणसावि पउट्ठं तहय वेइयाबद्धं । भयसा चेव भयंतं मित्तीगारवकारणा ॥२॥ तेणियं पडिणियं चेव, रुट्ठं तज्जियमेव य । सढं च हीलियं चेव,तहा विपलिउंचियं ॥३॥ दिट्ठमदिट्ठं च तहा, सिंगं च करमोयणं । आलिद्धमणालिद्धं, ऊणं उत्तरचूलियं ॥४॥ मूयं च ढड्ढरं चेव,चुडलियं च अपच्छिमं । बत्तीसदोसपरिसुद्धं, किइकम्मं पउंजए ॥५॥ एषां व्याख्या—अनादृतं—आदररहितं यद्वंदनं तद्दोषदुष्टमिति सर्वत्र योज्यं १ स्तब्धं देहमनसोः स्तब्धास्तब्धत्वाच्चतुर्धा २ प्रविद्धं वंदमानस्येतस्ततः पर्यटनं ३ परिपिंडितं प्रभूतवंद्यानां युगपद्वंदनं संपिंडितकरचरणस्य वा अव्यक्तवर्णोच्चारणतो वा ४ टोलगतिः तिड्डवत् उत्प्लुत्योत्प्लुत्य ५ अंकुशं हस्तादावाकृष्य गुरूनुपवेशयतः ६ कच्छपरिंगितं अग्रतोऽभिमुखं पश्चादभिमुखं च कच्छप इव चलतः७ मत्स्योद्वृत्तं मत्स्य इवोद्वेल्लतः वंदितुकामस्य वाऽन्यं झषवद् धृत्वा परावर्त्तमानस्य ८ मनसा प्रद्विष्टं गुरोरुपरि प्रद्विष्टस्य ९ वेदिकाबद्धं जान्वोरुपरि हस्तौ निवेश्य १ अधो वा २ उत्संगे वा ३ जानुमेकं ४ द्वौ वा करद्वयांतः ५ कृत्वा १० भयेन संघकुलगच्छादीनां बिभ्यतः ११ भजमानं भजते भक्ष्यते वा मां गुरुरिति बुद्धिमतः १२ मैत्री मित्रं मे आचार्यो मैत्री भवत्वनेन सहेति वा १३ गौरवं सामाचारीकुशलोऽहमिति गर्वेण १४ कारणं वस्त्रादिलाभहेतोः १५ स्तै-

निकं लाघवभयात् प्रच्छन्नं १६ प्रत्यनीकं आहारादिकाले १७ रुष्टं क्रुद्धेनात्मना क्रुद्धस्य गुरोर्वा १८ तर्जितं न कुप्यसि न प्रसीदसि वा किं त्वया वंदितेनेत्यादि वदतः १९ शठं विश्रंभार्थं ग्लानस्य मिषेण वा न सम्यग् २० हीलितं गणिन् वाचकेत्यादिवचोभिर्हसतः २१ विपरिकुंचितं अर्धवंदिते एव देशादिकथाः कुर्व्वतः २२ दृष्टादृष्टं- तमसि एवमेवासीनस्य दृश्यस्य सम्यगावर्त्तादीन् कुर्व्वतः २३ शृंगं आवर्त्तेषु शिरसो वामदक्षिणे शृंगे स्पृशतः २४ करं राजकरमिव मन्यमानस्य २५ मोचनं न मुच्येऽहमस्मादिति विचिंतयतः २६ आश्लिष्टानाश्लिष्टं रजोहरणशिरोभ्यामाश्लेषानाश्लेषाच्चतुर्धा २७ न्यूनं व्यंजनावश्यकैरसंपूर्णं २८ उत्तरचूलिकं वंदनानंतरं मस्तकेन वंदे इत्यभिदधतः २९ मूकं अव्यक्तस्वरं ३० ढड्ढरं महच्छब्दं ३१ चुडुलिकं उल्मुकवद्रजोहरणं बिभ्रतः हस्तं भ्रमयित्वा सर्वान् वंदे इति वा वदतः ३२ ॥ किइकम्मंपि कुणंतो न होइ किइकम्मनिज्जराभागी । बत्तीसामण्णयरं साहू ठाणं विराहंतो ॥१॥ बत्तीसदोसपरिसुद्धं किइकम्मं जो पउंजइ गुरूणं । सो पावइ निव्वाणं अचिरेण विमाणवासं वा ॥२॥ कारणानि ८, पडिकमणे १ सज्झाए २ काउस्सग्गा ३ वराह४ पाहुणए ५ । आलोयण ६ संवरणे ७ उत्तमट्ठे य ८ वंदणयं ॥१॥ सर्वमप्यनुष्ठानं प्रथमं साधूनुद्दिश्य सूत्रेऽभिहितं श्राद्धस्य तु यथायोग्यमायोजनीयं, तत्र प्रतिक्रमणे उभयोरपि वंदनं "चत्तारि पडिकमणे किइकम्मा" इति वचनात्, साधोः स्वाध्यायस्य प्रस्थापने प्रवेदने प्रतिक्रमणे कायोत्सर्गे च—विकृत्यनुज्ञारूपे, तथोभयोरपि अपराधक्षामणायां प्राघूर्णके आलोचनायां च संवरणे—भक्तार्थिनः केनचित्कारणेन पुनरभक्तार्थप्रत्याख्याने दिवसचरिमप्रत्याख्याने वा उत्तमार्थे च—आराधनाकाले इति॥ (प्रत्यन्तरे त्वेवं—मुहणंतय २५ देहा २५ वस्सएसु २५ पणवीस हुंति पत्तेयं । छट्ठाण ६ छ गुरुवयणा ६ छग्गुणा हुंति नायव्वा ॥१॥ अहिगारिणो य पंच उ ५ इयरे पंचेव ५ पंच आहरणा ५ । एगोऽवग्गह १ पंचाभिहाण ५ पंचेव पडिसेहा ५ ॥ २ ॥ आसायणतित्तीसं ३३ दोसा बत्तीस ३२ कारणा अट्ठ ८ । छद्दोसा ६ अडनउयं ठाणसयं १९८ वंदणे होइ ॥ ३ ॥ पर्यन्ते

दोषाः—माणो अविणय खिंसा नीआगोअं अबोहि भवबुड्ढी । अनमंते छद्दोसा एवं अडनउअसयमिहइं ॥१॥) इदानीं वंदनकसूत्रं व्याख्यायते, इह शिष्यो विधिवत्प्रतिलेखितमुखवस्त्रिकात्मदेह ईषदर्धावनतकायः करद्वयधृतरजोहरणादिरवग्रहाद् बहिःस्थितो वंदनायोद्यत एवमाह—'इच्छामी'त्यादि, इच्छामि—अभिलषामि हे क्षमाश्रमण—क्षमोपलक्षितदशविधश्रमणधर्मप्रधान वंदितुं—नमस्कर्तुं, 'यापनीयया' याप्यते—कालः क्षिप्यते यया सा यापनीया तया, शक्तिसमन्वितयेत्यर्थः, कया ?—'नैषेधिक्या' निषेधः—प्राणातिपातादिनिवृत्तिरूपः प्रयोजनं यस्याः सा नैषेधिकी—तनुस्तया, इतीच्छानिवेदनं प्रथमं स्थानं१ । यथा—इच्छा य १ अणुन्नवणा २ अव्वाबाहं च ३ जत्त ४ जवणा य ५ । अवराहखामणावि य ६ छट्ठाणा हुंति वंदणए ॥१॥ अत्रांतरे यदि व्याक्षिप्तो गुरुस्तदा भणति—प्रतीक्षस्वेति, आवश्यकचूर्णौ वृत्तौ तु त्रिविधेनेति, मनोवाक्कायैः संक्षेपेण वंदस्वेत्यर्थः, ततः शिष्यः (संक्षेपेण) वंदते, अव्याक्षिप्तस्तु छंदेनेति भणतीति प्रथमं गुरुवचनं १ । यथा—छंदेण १ ऽणुजाणामी २ तहत्ति ३ तुब्भंपि वट्टए ४ एवं ५ । अहमवि खामेमि तुमं ६ वयणाइं वंदणरिहस्स ॥१॥ छंदेनेति कोऽर्थो—ममाप्यभिप्रेतमेतदिति, ततः शिष्यो ब्रूते—अनुजानीत—अनुमन्यध्वं मे—मम मितावग्रहं हस्तत्रयं, यद्वा देविंद १ राय २ गिहवइ ३ सागरि ४ साहम्मि ५ उग्गहा पंच । गुरुउग्गहो पुणो इह आयपमाणो चउदिसिंपि ॥१॥ इति द्वितीयं स्थानं, अत्र च गुरुवचनं—अनुजानामीति २, ततः शिष्यो नैषेधिक्या—निषिद्धान्यव्यापाररूपया अवग्रहे प्रविश्य विधिनोपविश्य गुरुपादौ स्वललाटं च कराभ्यां स्पृशन्निदमाह—अधःकायं—गुरुचरणलक्षणं प्रति कायेन—मदीयहस्तललाटलक्षणेन संस्पर्शस्तमप्यनुजानीध्वमिति योगः, क्षमणीयः—सोढव्यो मे—भवद्भिः क्लमः—संस्पर्शे सति देहबाधारूपः अल्पक्लांतानां—निराबाधानां बहुशुभेन भे—भवतां दिवसो व्यतिक्रांतः ?, दिवसग्रहणं रात्र्याद्युपलक्षणार्थं, दिवसे च तीर्थप्रवर्त्तनं पाक्षिकाद्यनुष्ठानं प्रशस्तश्च स इति ज्ञापनार्थं वेति तृतीयं स्थानं, अत्र गुरुवचनं—तहत्ति—तथेति, यथा त्वं ब्रूषे तथाऽस्तीत्यर्थः ३ शिष्यो

देहे वार्त्तां पृष्ट्वा संयमवार्त्तां पृच्छति–'जत्ता भे' यात्रा–संयमस्वाध्यायरूपा भे–भवतामुत्सर्प्पतीति तुर्यं स्थानं, अत्र गुरुवचनं तुब्भंपि वट्टए इति, मम तावत् संयमयात्रा उत्सर्पति तवापि सा उत्सर्पतीत्यर्थः, पुनर्विनेयः प्राह–'जवणिज्जं च भे' यापनीयं च–इंद्रियनोइंद्रियैरबाधितं भे–भवतां शरीरमिति गम्यमिति पंचमं स्थानं ५,अत्र गुरुवचनं–अहमवि खामेमि तुब्भे, अहमपि क्षामयामि युष्मान् अविधिशिक्षणादिकं व्यतिक्रमं ६। ततो विनेयोऽभ्युत्थाय 'आवस्सियाए' इत्यादिना आलोचनार्हेण 'तस्स खमसमणो पडिक्कमामि' इत्यादिना प्रतिक्रमणार्हेण च प्रायश्चित्तेनात्मानं शोधयितुकामो अवग्रहान्निःसृत्येदं पठति–'आवस्सियाए' इत्यादि, अवश्यकार्येषु चरणकरणेषु भवा क्रिया आवश्यकी तया हेतुभूतया, आसेवनाद्वारेण यदसाध्वनुष्ठितं तस्मात्प्रतिक्रामामि–निवर्त्ते, इत्थं सामान्येनाभिधाय विशेषेणाह–क्षमाश्रमणानां संबंधिन्या दैवसिक्या ज्ञानाद्यायस्य शातना–खंडना आशातना निरुक्ताद् यलोपः तया, किंविशिष्टया ?–त्रयस्त्रिंशदन्यतरया त्र्यधिकत्रिंशदाशातनानामेकतरया, ताश्चेमाः–पुरओ पक्खासन्ने गंता चिट्ठणनिसीयणाऽऽयमणा १०। आलोयण ११ ऽपडिसुणणे १२ पुव्वालवणे १३ य आलोए १४ ॥१॥ तह उवदंस १५ निमंतण १६ खद्धा १७ ययणे १८ तहा यऽपडिसुणणे १९। खद्धत्ति २० य तत्थ गए २१ किं २२ तुम २३ तज्जाय २४ नो सुमणे २५ ॥२॥ नो सरसि २६ कहं छित्ता २७ परिसं भित्ता २८ अणुट्ठियाय कहे २९। संथार ३० पायघट्टण ३१ चिट्ठुच ३२ समासणे ३३ यावि ॥३॥ आसां व्याख्या–गुरोः पुरतः पार्श्वयोरासन्ने च पृष्ठतः प्रत्येकं गमनं ३ स्थानं ३ निषदनं ३ च कुर्वतः ९ गुरोः पूर्वं बहिर्गतेनाचमनं १० पूर्वं गमनागमनालोचनं ११ रात्रौ कः स्वपिति ? को जागर्तीति पृच्छति गुरौ जाग्रतोऽप्यप्रतिश्रवणं १२ साध्वादेरागतस्य प्रथममालपनं १३ भिक्षां शैक्षकस्य कस्यचिदालोच्य पश्चाद् गुरोरालोचनं १४ एवं गुरोरप्रदर्शनं १५ गुरोरनिमंत्रणं च १६ गुरुमनापृच्छय यथारुचि साधुभ्यः खद्धेति प्रचुरं ददतः १७ गुरोर्यत्किंचिद् दत्त्वा स्वयं स्निग्धमधुराद्युपभोगापादनं

१८ अप्रतिश्रवणं रात्रिवच्छेपकालेऽपि १९ खद्धत्ति गुरुं प्रति निष्ठुरभणनं २० तत्र गत एव प्रतिवचनं ददतः २१ गुरुं प्रति किमिति वचनं २२ त्वंकारस्य करणं २३ गुरुणेदं कुर्विंत्युक्तो यूयमेव किं न कुरुध्वमिति तज्जातवचनं २४ गुरौ कथां कथयति उपहतमनस्त्वं २५ न सरसि त्वं नायमर्थः संभवति २६ स्वयं कथनेन कथाछेदनं २७ अधुना भिक्षावेलेत्यादिमिषैः पर्षद्भेदनं २८ अनुत्थितायां पर्षदि सविशेषकथनं २९ गुरुशय्यादेः पादेन घट्टनं ३० चिट्ठत्ति गुरुशय्यादौ निषीदनादि ३१ एवमुच्चासने ३२ एवं समासनेऽपीति ३३ ॥ सांप्रतमेतास्वेव किंचिद्विशेषेणाह–यत्किंचित् कदालंबनमाश्रित्य मिथ्याभावोऽत्रास्तीत्यश्रादित्वादकारे मिथ्या तया, मिथ्याभावयुक्तेन कृतयाऽऽशातनयेत्यर्थः, तथा मनोदुष्कृतया प्रद्वेषनिमित्तयेत्यर्थः वाग्दुष्कृतया असभ्यपरुषादिवचननिमित्तया कायदुष्कृतया आसन्नगमनस्थानादिनिमित्तया, क्रोधभावोऽत्रास्तीति क्रोधा तया, एवं मानया मायया लोभया, क्रोधादिभिर्जनितयेत्यर्थः, सर्वकालिक्या अतीतानागतवर्त्तमानकालकृतया, एष्यत्काले कथमाशातना ?, उच्यते, श्वोऽस्य गुरोरिदमिदं चानिष्टं कर्त्ताऽस्मीति चिंतया, सर्व्वे एव मिथ्योपचारा–मातृस्थानगर्भा भक्तिविशेषा यस्यां सा सर्वमिथ्योपचारा तया, सर्वे धर्म्मा–अष्टौ प्रवचनमातरः करणीयव्यापारा वा तेषामतिक्रमणं–लंघनं यस्यां सा सर्वधर्म्मातिक्रमणा तया, एवंभूतया आशातनया यो मयाऽतिचारः–अपराधः कृतो–विहितः तस्यातिचारस्य हे क्षमाश्रमण ! युष्मत्साक्षिकं प्रतिक्रामामि–अपुनःकरणेन निवर्त्ते, तथा दुष्टकर्म्मकारिणं निंदाम्यात्मानं भवोद्विग्नेन चेतसा, तथा गर्हे युष्मत्साक्षिकं, तथा व्युत्सृजाम्यात्मानमाशातनाकरणकालनिवृत्त्याऽऽत्मानुमतित्याजनेन, द्वितीयवंदनकमप्येवमेव, नवरमावश्यिकीनिष्क्रमणरहितं ॥ एवं वंदनकं दत्त्वाऽवग्रहांतःस्थ एव शिष्योऽतिचारालोचनं कर्तुकामः किंचिदवनतकायो गुरुं प्रतीदमाह–इच्छाकारेण संदिसहेत्यादि, इच्छाकारेण–निजेच्छया, न पुनर्बलाभियोगादिना, संदिशत–आदेशं दत्त दैवसिकं–दिवसभवमतीचारमिति गम्यं, एवं रात्रिकादिकमपि द्रष्टव्यं, आलोचयामि मर्यादया

सामस्त्येन वा प्रकाशयामि, अत्रांतरे आलोचयतेति गुरुवचः श्रुत्वा शिष्यो वक्ति-इच्छामि-अभ्युपगच्छामि युष्मद्वचः, आलोचयामि-पूर्वमभ्युपगतमर्थं क्रियया दर्शयामि,आलोचनामेव साक्षात्कारेणाह-उत्सूत्रः-सिद्धांतविरुद्धः उन्मार्गः-क्षायोपशमिकभावरूपं मार्गमतिक्रम्य औदयिकभावेन कृत इत्यर्थः,अकल्पः-अकल्पनीयः अकरणीयः-कर्तुमनुचितः,हेतुहेतुमद्भावश्चात्र, यत एव उत्सूत्रोऽत एव उन्मार्ग इत्यादि,उक्तः कायिको वाचिकश्च,मानसिकमाह-दुर्ध्यात एकाग्रचित्ततयाऽऽर्त्तरौद्रलक्षणः दुर्विचिंतितोऽशुभ एव चलचित्ततया 'जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्त'मिति वचनात्, यत एवेत्थंभूतोऽत एवानाचारः, यत एवानाचारोऽत एवानेष्टव्यः, आस्तां तावत्कर्तव्यः, यत एवानेष्टव्योऽत एवाश्रमणप्रायोग्यः, श्रमणानुचित इत्यर्थः, क्व विषये भवतीत्याह-ज्ञाने दर्शने चारित्रे, एतान्येव भेदेनाह-श्रुते-श्रुतज्ञानविषयविपरीतप्ररूपणाऽकालस्वाध्यायादिकोऽतिचारः, सामायिके-सम्यक्त्वसामायिकसर्वविरतिसामायिकविषये, तत्र सम्यक्त्वसामायिकातिचारः शंकादि, सर्वविरतिसामायिकातिचारं तु भेदेनाह-तिसृणां गुप्तीनां अयथावस्थितकरणेन, चतुर्णां कषायाणां क्रोधादीनां करणेन, पंचानां महाव्रतानां प्राणातिपातविरत्यादीनां षण्णां जीवनिकायानां पृथ्वीकायिकादीनां सप्तानां पिंडैषणानां असंसृष्टादीनां,यथा 'संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥१॥ तत्रासंसृष्टा असंसृष्टाभ्यां हस्तमात्रकाभ्यां दीयमाना भिक्षा १ संसृष्टाभ्यां तु संसृष्टा २ उद्धृता स्थाल्यादिभ्यः स्वार्थमुत्क्षिप्ता३ अल्पलेपा लेपरहिता वल्लचणकादिका ४ अवगृहीता-भोजनकाले शरावादिस्थापितभोजनवस्तुमध्यादुत्पाटिता ५ प्रगृहीता भोजनार्थं करोपात्तभोज्यमध्याद्दातुमिष्टा६ उज्झितधर्मा-परित्यज्यमानानभिलष्यमाणभक्ताद्यादानरूपा७, तथाऽष्टानां प्रवचनमातॄणां समितिगुप्तिरूपाणां नवानां ब्रह्मचर्यगुप्तीनां वसतिकथादीनां दशविधे श्रमणधर्म्मे क्षांत्याद्ये श्रामणानां-साधुसंबंधिनां योगानां-व्यापाराणां यत् खंडितं-देशतो भग्नं, यच्च विराद्धं-सर्वथा भग्नमित्यर्थः, तस्य दैवसिकातिचारस्य

मिथ्या मे दुष्कृतं,तद्दुष्कृतं मे विफलं भूयादित्यर्थः,ठाणे गमणे इत्याद्यप्याचीर्णं सुगमं च ॥ श्राद्धस्तु अणिच्छियव्वो इत ऊर्ध्वमेवं पठति—असावगपाउग्गो इत्यादि, अश्रावकप्रायोग्यः ज्ञाने दर्शने चारित्राचारित्रे—देशविरतिविषये,तान्येव व्याचष्टे—श्रुते सामायिके तिसृणां गुप्तीनां चतुर्णां कषायाणां पंचानामणुव्रतानां त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानां सर्वव्रतमीलनेन द्वादशविधस्य श्रावकधर्म्मस्य यत् खंडितं—देशतो भग्नं यद्विराधितं—सर्वतो भग्नं तस्य मिथ्या मे दुष्कृतं, पुनरवि विनेयोऽवनतकायः प्रवर्धमानसंवेगो मायादिदोषमुक्तः आत्मनः सर्वशुद्ध्यर्थमिदं भणति—सव्वस्सवि देवसियेत्यादि, सुगमं, नवरं सर्वाण्यपि लुप्तषष्ठ्येकवचनांतानि पदानि। ततोऽवग्रहान्निःसृत्य पुनर्वंदनं दत्त्वाऽपराधक्षामणोद्यत एवमाह—'इच्छाकारेण संदिसह भगवन् अब्भुट्ठिओमि अब्भितरदेवसियं खामेउं' इच्छाकारेण संदिशत अभ्युत्थितः—अभ्युद्यतोऽस्मि अब्भितरदेवसियमिति दिवसाभ्यंतरसंभवमतिचारं क्षमयितुं, क्षमयस्वेत्यत्र गुरुवचः श्रुत्वा प्राह—इच्छं खामेमि देवसियं, इच्छामि भगवदाज्ञां क्षमयामि दैवसिकं स्वापराधं, ततो विधिवत् पंचांगस्पृष्टभूतलो मुखवस्त्रिकया स्थगितवदनदेश इदमाह—'जं किंची'त्यादि, यत्किंचित् सामान्यतः 'अप्पत्तियं' अप्रीतिमात्रं 'पराप्रीतिकं' प्रकृष्टाप्रीतिकं, क्व विषये ?—भक्ते पाने विनये—अभ्युत्थानादिके वैयावृत्त्ये—औषधपथ्याद्यवष्टंभरूपे आलापे—सकृद्जल्परूपे संलापे—मिथःकथारूपे उच्चासने समासने, गुरोरासनादिति गम्यं, अंतर्भाषायां—गुरोर्भाषमाणस्य विचालभाषारूपायां उपरिभाषायां—गुरोर्भाषानंतरमेव विशेषतरभाषणरूपायां, एषु भक्तादिषु यत्किंचिन् मम विनयपरिहीणं, भक्तिवियुक्तं संजातमित्यर्थः, सूक्ष्मं वा—अल्पप्रायश्चित्तशोध्यं बादरं—वा—गरिष्ठप्रायश्चित्तशोध्यं यूयं जानीथ, सकलभाववेदनत्वात्, 'अहं न जानामि मूढत्वात्, तस्याप्रीतिकादिविषयस्यातिचारस्य मिथ्या मे दुष्कृतमिति। पुनरपि वंदनं दत्त्वा शक्त्यनुरूपं प्रत्याख्यानं करोति, तत्र प्रत्याख्यानानि १ तद्भंगा २

ऽऽकार२सूत्रा४र्थ५ शुद्धयः ६ । प्रत्याख्यानफलं चात्र ७, किंचिदेवोच्यतेऽधुना ॥ १ ॥ तत्र प्रत्याख्यानं द्विधा-मूलगुणप्रत्याख्यानोत्तरगुणप्रत्याख्यानभेदात्, मूलगुणप्रत्याख्यानं द्विधा-देशसर्वभेदात्, सर्वमूलगुणप्रत्याख्यानं साधूनां पंच महाव्रतानि, देशमूलगुणप्रत्याख्यानं श्राद्धानां पंच अणुव्रतानि, उत्तरगुणप्रत्याख्यानमपि द्विधा-देशसर्वभेदात्, साधूनां सर्वोत्तरगुणप्रत्याख्यानमनेकधा, यथा 'पिंडस्स जा विसोही समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहाविय उत्तरगुणमो वियाणाहि ॥ १ ॥ श्राद्धानां देशोत्तरगुणप्रत्याख्यानं सप्त शिक्षाव्रतानि, उभयोरपि सर्वोत्तरगुणप्रत्याख्यानं यथायोग्यमनागतादि दशधा, यथा-"अणागयमइक्कंतं कोडीसहियं नियंटियं चेव। सागारमणागारं परिमाणकडं निरवसेसं ॥१॥ संकेयं चेव अद्धाए पच्चक्खाणं तु भवे दसविहं तु। सयमेवणुपालणियं दाणुवएसे जहसमाही॥१॥ तत्र पर्युषणादौ ग्लानत्ववैयावृत्त्यादिकारणोद्भवे तदर्वागपि यदष्टमादि क्रियते तदनागतं १ एवमतिक्रांते पर्वणि यत्क्रियते तदतिक्रांतं २ एकस्य निष्ठाकाले अन्यस्य च ग्रहणकाले प्रत्याख्यानस्याद्यंतकोटिद्वयमीलनात्कोटिसहितं ३ मासे २ अमुष्मिन् दिवसे वा यदष्टमादि विधेयं हृष्टेन ग्लानेन वा तन्नियंत्रितं, एतच्चतुर्दशपूर्वेषु जिनकल्पेन प्रथमसंहननेन सह व्यवच्छिन्नं ४ सहाकारैर्महत्तराकाराद्यैर्यद्वर्त्तते तत्साकारं ५ निर्गतं महत्तरादिकारणान् निराकारं ६ दत्तिकवलादीयत्तया परिमाणकृतं ७ सर्वाशनपानत्यागान्निरवशेषं ८ अंगुष्ठग्रंथ्यादिचिह्नोपलक्षितं संकेतं ९, अद्धा-कालस्तदुपलक्षितमद्धाप्रत्याख्यानं तद्दशधा, यथा-'नवकार १ पोरिसीए २ पुरिमड्ढ ३ कासणे ४ गठाणे य ५। आयंबिल ६ अभत्तट्ठे ७ चरिमे य ८ अभिग्गहे ९ विगई १० ॥१॥ द्वारं। भंगकास्तु सप्तचत्वारिंशं शतं भवति, ते चैवं-तिन्नि तिया तिन्नि दुया तिन्निक्किका य हुंति जोगेसु। तिदुएगं तिदुएगं तिदुएगं चेव करणाइं ॥१॥ एवं स्थापितेषु योगकरणेषु

| म | व | का |
|---|---|---|
| क | का | अ |

गाथोक्तांकसमैरक्षैर्वर्त्यमाना एकोनपंचाशद् भंगाः स्युः,ते चैवं–प्रथमांके ऊर्ध्वाधस्त्रिकरूपे मनोवाक्कायैर्न करोति न कारयति नानुमन्यते चेत्येको भंगः, द्वितीये त्रिकद्विकरूपे मनोवाक्कायैर्न करोति न कारयति, न करोति नानुमन्यते, न कारयति नानुमन्यते चेत्येते भंगत्रयं, एवमन्येऽपि स्वधिया वाच्याः, ततस्तेऽतीतानागतवर्त्तमानकालत्रिकेण गुणिताः सप्तचत्वारिंशं भंगशतं स्याद्, उक्तं च–“पढमे लब्भइ एगो सेसेसु पएसु तियतियतियंति । दोनव तिय दो नवगा तिगुणिय सीयालभंगसयं ॥१॥ सीयालं भंगसयं पच्चक्खाणंमि जस्स उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥२॥त्ति, यद्वा 'इत्थ य पच्चक्खायापच्चक्खाविंतयाण चउभंगी । जाणगऽजाणपएहिं निप्फण्णा होइ नायव्वा ॥१॥' ज्ञो ज्ञस्य पार्श्वे प्रत्याख्यातीति शुद्धः १ ज्ञोऽज्ञस्य पार्श्वे, गुर्वाद्यभावे बहुमानतो गुरुपितृपितृव्यादेः सकाशे शुद्धः २ अज्ञो ज्ञस्य पार्श्वे, तदैव संक्षेपेण ज्ञापिते शुद्धः ३ अज्ञोऽज्ञस्याशुद्ध एव४, द्वारं २ । प्रत्याख्यानस्य तु भंगे गुरुर्दोषः, यथा–“वयभंगे गुरुदोसो थेवस्सवि पालणा गुणकरी य । गुरुलाघवं च नेयं धंमंमि अओ य आगारा ॥१॥ दो चेव नमुक्कारे आगारा छच्च पोरिसीए उ । सत्तेव य पुरिमड्ढे एगासणगंमि अट्ठेव ॥२॥ सत्तेगट्ठाणस्स उ अट्ठेवायंविलंमि आगारा । पंचेव अभत्तट्ठे छप्पाणे चरिम चत्तारि॥३॥ पंच चउरो अभिग्गहि निव्वीए अट्ठ नव य आगारा । अप्पाउरणे पंच य हवंति सेसेसु चत्तारि ॥४॥ निर्विकृतौ अष्ट नव च, कथं ?, नवणीओगाहिमए अद्दवदहिपिसियघयगुले चेव । नव आगारा एसिं सेसदवाणं तु अट्ठेव ॥५॥ अप्रावरणे चोलपट्टकाकारः पंचमः,द्वारं ३ । सांप्रतं सूत्रार्थौ–उग्गए सूरे नमुक्कारसहियं पच्चक्खामि चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं वोसिरामित्ति १ । उद्गते सूर्ये नमस्कारसहितं प्रत्याख्यातीति गुरुर्ब्रूते, शिष्यस्तु प्रत्याख्यामीति, एवमन्यत्रापि, इदं च मुहूर्त्तमानकालमात्रं रात्रिभोजनप्रत्याख्यानतीरणरूपत्वा-

दस्य, नमस्कारसहितमिति मुहूर्त्तादुपर्यपि यावन्नमस्कारेण न पारयामि,तावत्किमित्याह—चतुर्विधमप्याहारं अशनं पानं खाद्यं स्वाद्यं, तत्र 'असणं ओयणसत्तुगमुग्गजगाराइखज्जगविही य। खीराइ सूरणाई मंडगपभिई य विन्नेयं ॥१॥ पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव। आउक्काओ सव्वो कक्कडगजलाइयं च तहा ॥२॥ भत्तोसं दंताई खज्जूरं नालिकेरदक्खाई। कक्कडअंबगफणसाइ बहुविहं खाइमं नेयं ॥३॥ दंतवणं तंबोलं चित्तं तुलसीकुहेडगाईयं। महुपिंपलिसुंठाई अणेगहा साइमं होइ ॥४॥ अन्यत्रानाभोगात्, अनाभोगः—अत्यंतविस्मृतिः,तथा सहसाकारात् ,सहसा करोति प्रवृत्तयोगादनिवर्त्तनं,ताभ्यामन्यत्र व्युत्सृजामि—त्यजामि१। पोरिसिं पच्चक्खामि उग्गए सूरे चउव्विहंपि आहारं असण ४ अन्नत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं सव्व-समाहिवत्तियागारेणं वोसिरामि २, व्याख्या—सर्वत्र प्राग्वत् विशेषस्तूच्यते—पुरुषः प्रमाणमस्याः सा पौरुषी च्छाया, कथं ?—कर्क संक्रांतौ पूर्वाह्णे अपराह्णे वा यदा शरीरप्रमाणा छाया भवति तदा पौरुषी, प्रहर इत्यर्थः, तद्रेखां याम्योत्तरायतां यदा देहच्छाया-पर्यंतः स्पृशति तदा सर्वदिनेषु पौरुषी, यद्वा पुरुषस्योर्ध्वस्य दक्षिणकर्णनिवेशितार्कबिंबस्य दक्षिणायनाद्यदिने यदा जानुच्छाया द्विपदा भवति तदा पौरुषी, यथा—आसाढे मासे दुपया, पोसे मासे चउप्पया। चित्तासोएसु मासेसुं, तिपया हवइ पोरिसी ॥१॥ हानिवृद्धी त्वेवं—अंगुलं सत्तरत्तेणं, पक्खेणं तु दुयंगुलं। वड्ढए हायए वावि,मासेणं चउरंगुलं ॥१॥ साधुवयणेणमित्यत्र पादोनप्रहरे-णाप्यधिकारः,अतस्तत्र पौरुषीच्छायोपरि प्रक्षेपोऽयं,—जेट्ठामूले आसाढसावणे छहिं अंगुलेहिं पडिलेहा। अट्ठहि बीयतियंमी तइए दस अट्ठहि चउत्थे॥ सार्धपौरुषी त्वेवं—पोसे तणुछायाए नवहिं पएहिं तु पोरिसी सड्ढा। ताविक्किका हाणी जावासाढे पया तिन्नि ॥१॥ पूर्वार्धोऽग्रे वक्ष्यमाणोऽपि प्रमाणप्रस्तावादिहैव विज्ञेयः—पोसे बिहत्थिछाया बारस अंगुलपमाण पुरिमड्ढे। मासि दुयंगुलहाणी

आसाढे निट्ठिया सव्वे॥१॥ सुखावबोधार्थं स्थापना चैषां॥ सांप्रतं सूत्रशेषो व्याख्यायते, तत्र पच्छण्णकालेणंति प्रच्छन्नता कालस्य मेघरजोगिर्यंतरितत्वेन सूर्ये अदृश्यमानेऽपूर्णायामपि पौरुष्यां पूर्णेति बुद्ध्या भुंजानस्य न भंगः,ज्ञाते तु यन्मुखे तद् भसनि, करस्थं तु भाजने मुक्त्वा तथैव स्थातव्यं, एवं दिग्मोहेऽपि, साधुवचनमुद्घाटा पौरुषीत्यादि विभ्रमकारणं, कृतपौरुषीमत्याख्यानस्य तीव्रशूलादिना विह्वलस्य समाधिनिमित्तमौषधपथ्यादि प्रत्ययः–कारणं स एवाकारः २। सूरे उग्गए पुरिमड्ढं पच्चक्खामि चउव्विहंपि आहारं असणं ४ अन्नत्थ० सहसा० पच्छन्न० दिसा० साहु०महत्तरागारेणं सव्वसमाहिवत्ति०वोसिरामि ३॥ पूर्वमर्धं पूर्वार्धं–दिनस्याद्यं प्रहरद्वयं, महत्तराकारः बृहत्तरनिर्जरालाभहेतुभूतं पुरुषांतरासाध्यं ग्लानचैत्यसंघादिप्रयोजनं तदेवाकारः। एगासणं पच्चक्खामि चउव्विहंपि आहारं असणं ४ अन्न० सह० सागरियागारेणं आउंटणपसारेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरामि ४। एकं–सकृदशनं–भोजनं एकं वा आसनं–पुताचलनतो यत्र तदेकाशनमेकासनं वा,सागारिकाकारो–यतः सागारिको-गृहस्थः स एवाकारः, तस्य पश्यतोऽन्यत्रापि गत्वा भुंजानस्य न भंगः, तत्समक्षं भोजने तु महादोषः, यदार्षम्–छक्कायदयावंतोवि संजओ

| पौरुषी (जानुछाया) | सूत्रपौ. प्र. | सार्धपौ. (पदछाया) | पूर्वार्धम् (वितस्तिछाया) |
|---|---|---|---|
| का. ३–४ | ८ अं. | ७ पा. | ८ अं. |
| मा. ३–८ | १० | ८ | १० |
| पौ. ४ | १० | ९ | १२ |
| मा. ३–८ | १० | ८ | १० |
| फा. ३–४ | ८ | ७ | ८ |
| चै. ३ | ८ | ६ | ६ |
| वै. २–८ | ८ | ५ | ४ |
| ज्ये. २–४ | ६ | ४ | २ |
| आ. २ | ६ | ३ | ० |
| श्रा. २–४ | ६ | ४ | २ |
| भा. २–८ | ८ | ५ | ४ |
| आ. ३ | ८ | ६ | ६ |

दुल्लहं कुणइ बोहिं। आहारे नीहारे दुगुंछिए पिंडगहणे य ॥१॥ गृहस्थस्य तु येन दृष्टं भोजनं न जीर्यति स सागारिको चंदिकादिर्वा, आकुंचने प्रसारणे च क्रियमाणे किंचिदासनं चलति तत्रापि न भंगः,गुरोः—आचार्यस्य प्राघूर्णकस्य वा साधोरागच्छतोऽभ्युत्थानेऽपि न भंगः,पारिष्ठापनिकाकारः साधोरेव,यथा—विहिगहियं विहिभुत्तं उव्वरियं जं भवे असणमाई। तं गुरुणाऽणुन्नायं कप्पइ आयंबिलाईणं ॥१॥ श्रावकस्त्वखंडसूत्रत्वादुच्चरति ॥ एगठाणं पच्चक्खामि चउविहंपि आहारं असणं ४ अन्न० सह०सागा० गुरुअ०पारि० मह० सव्व० वोसिरामि ५ । मुखं दक्षिणपाणिं चाशक्यपरिहार्यत्वात् मुक्त्वा शेषांगोपांगानां प्रथमनिवेशरूपमेकं स्थानं यत्र तदेक-स्थानं ५। आयंबिलं पच्चक्खामि अन्नत्थ० सहसा० लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणियागारेणं मह० सव्व० वोसिरामि ६। आचामः—अवश्रावणं अम्लं--चतुर्थो रसः एते व्यंजने प्रायो यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदाचा-माम्लं समयभाषयोच्यते, लेपो भोजनभाजनस्य विकृत्या तीमनादिना वा अलेपोऽगुल्यादिसंलेखनतः लेपश्चालेपश्च लेपालेपं तस्मा-दन्यत्र, शुष्कोदनादिभक्ते पतितपूर्वस्याद्रवस्योत्क्षिप्तस्य उद्धृतस्य विवेकिभिः निःशेषतया त्याग उत्क्षिप्तविवेकः,गृहस्थस्य भक्तदायकस्य संबन्धि करोटिकादिभाजनं विकृत्यादिनोपलिप्तं गृहस्थसंसृष्टं ६। सूरे उग्गए अभत्तट्ठं पच्चक्खामि चउव्विहंपि आहारं असणं ४ अन्न सह० पारिट्ठावणियागारेणं मह० सव्व०, न विद्यते भक्तार्थोऽस्मिन् प्रत्याख्याने सोऽभक्तार्थः, उपवास इत्यर्थः, यदि चात्र त्रिविधाहारस्य प्रत्याख्याति तदा पारिष्ठापनिकं कल्पते, चतुर्विधाहारस्य तु पानकेऽप्युद्धरित एव कल्पते, अत्र च साधवः शक्ति-सद्भावे पौरुष्यादीनि चतुर्विधाहारस्य प्रत्याख्यांति,तदभावे त्रिविधाहारस्य, न तु द्विविधस्य,निष्कारणे स्वाद्यस्याननुज्ञानात्,श्राद्ध-स्तु संप्रदायात् कतिचित् प्रत्याख्यानानि द्विविधाहारस्यापीति, यदा त्रिविधाहारप्रत्याख्यानं तदा पानकमाश्रित्य षडाकारा भवंति—

पाणस्स लेवाडेण वा अलेवाडेण वा अच्छेण वा बहुलेण वा ससित्थेण वा असित्थेण वा, कृतलेपाद्वा खर्जूरादिपानकात् वाशब्दोऽलेपकृतपानकापेक्षया अवर्जनीयत्वाविशेषद्योतनार्थः,अलेपकृताद्वा सौवीरादेः अच्छाद्वा निर्म्मलादुष्णोदकादेः बहुलाद्वा गडुलात्तिलतंदुलधावनादेः ससिक्थाद्वा अवश्रावणादेः असिक्थाद्वा सिक्थवर्जितात् । दिवसचरिमं वा भवचरिमं वा पच्चक्खामि चउव्विहंपि आहारं असणं४ अण सह म स वोसिरामि ८,दिवसस्य–अहोरात्रस्य चरिमः–अवशिष्टोऽशः यः स तथा तं, एवं भवचरममपि,दिवसचरमं त्वल्पाकारत्वादेकासनादिष्वपि सार्थकं ८। अभिग्रहप्रत्याख्यानं यथा 'अंगुट्ठमुट्ठिगंठीघरसेउस्सासथिवुगजोइक्खे । भणियं संकेयमेयं धीरेहिं अणंतणाणीहिं ॥१॥ तत्र–अंगुट्ठसहियं पच्चक्खामि चउव्विहंपि आहारं असणं ४ असमस वोसिरामि इत्यादि, सुगमानि, विगईओ पच्चक्खामि अन्न सह लेवा गिहत्थ उक्खित्त पडुच्चमक्खिएणं पारि म स वोसिरामि, मनसो विकारहेतुत्वाद्विकृतयः, ताश्च दश, दुद्धदहीघयतिल्लं गुडं चउग्गाहिमं छ भक्खाओ । महुमज्जमंससरए चत्तारि अभक्खविगईओ ॥१॥ गोमहिष्यजोष्ट्र्येलकादीनां क्षीराणि पंच, दधिनवनीतघृतानि तु चतुर्भेदानि, औष्ट्रीणां दध्याद्यभावात्, तिलालसीलट्टासार्षपभेदात्तैलानि चत्वारि, गुडो द्विधा–पिंडो द्रवश्च, अवगाहेन–स्नेहबोलेन निर्वृत्तमवगाहिमं–पक्वान्नं,यत्तापिकायां घृतादिपूर्णायां चलाचलं खाद्यकादि पच्यते तेनैव घृतेन द्वितीयं तृतीयं च तद्विकृतिः,ततः परमयोगवाहिनां निर्विकृतिकप्रत्याख्यानेऽपि आगाढकारणे कल्प्यंते, एवं शेषाण्यपि विकृतिगतानि, तानि चामूनि–अह पेया १ दुद्धट्टी २ दुद्धवलेही य ३ दुद्धसाडी य ४। पंच य विगयगयाइं दुद्धंमी खीरिसहियाइं ५ ॥१॥ अंबिलजुयंमि दुद्धे दुद्धट्टी दक्खमीसरद्धंमि । पयसाडी तंदुलेहिं चुण्णयसिद्धंमि यऽवलेही ॥२॥ दहिए विगयगयाइं घोलवडा १ घोल २ सिहरिणि ३ करंबो ४ । लवणकणदहियमहियं ५ संगरिगाइंमि अप्पडिए ॥३॥ पक्कघयं १ घयकिट्टी २

पक्कोसहि उवरितरियसप्पिं च ३। निब्भंजण ४ वीसंदणगा य५ घयविगइविगइगया ॥४॥ तिल्लमली तिल्लकुट्टी डड्ढं तिल्लं तहो-सहुव्वरियं ४। लक्खाइदव्वपक्कं तिल्लं ५ तिल्लंमि पंचेव ॥५॥ अद्धकढिइक्खुरसो १ गुडवाणीयं च २ सक्करा३ खंडं ४। पायगुलं५ गुलविगईविगयगयाइं तु पंचेव ॥६॥ एगं एगस्सुवरि तिण्होवरि बीयगं च जं पक्कं। तुप्पेणं तेणं चिय तइये गुलहाणियापभिई ३ ॥७॥ चउत्थं जलेण सिद्धा लप्पसिया ४ पंचमं तु पूयलिया। चुप्पडिय ४ तावियाए परिपक्का ५ तीस मिलिएसु ३० ॥८॥ सांप्रतमभक्ष्यविकृतयः, तत्र मधु त्रिधा--माक्षिकं कौतिकं भ्रामरं च, मद्यं द्वेधा--काष्ठपिष्टोद्भवभेदात्, मांसं त्रेधा--जलस्थलखेचरजंतूद्भवभेदात्, चर्म्मरुधिरमांसभेदाद्वा, म्रक्षणं चतुर्धा पूर्वोक्तमेव। एकादिविकृतिप्रत्याख्यानं निर्विकृतिप्रत्याख्यानं च विकृतिप्रत्याख्यानेन संगृहीतं, अत्र 'गिहत्थसंसट्ठेणं'ति गृहस्थेन स्वप्रयोजनाय दुग्धेन संसृष्ट ओदनो, दुग्धं तु तमतिक्रम्योत्कर्षतश्चत्वार्यंगुलानि यावदुपरि वर्त्तते तावत्तद् दुग्धमविकृति, पंचमांगुलारंभे तु विकृतिरेव, एवमन्यान्यपि गृहस्थसंसृष्टानि, यथा—खीरदहीवियडाणं चत्तारि उ अंगुलाइं संसट्ठं। फाणियतिल्लघयाणं अंगुलमेगं तु संसट्ठं ॥१॥ महुपुग्गलरसयाणं अद्धंगुलयं तु होइ संसट्ठं। गुलपुग्गलनवणीए अद्दामलगं तु संसट्ठं ॥२॥" इति 'पडुचमक्खिएणं'ति प्रतीत्य सर्वथा रूक्षं मंडकादि म्रक्षितं—ईषत् सौकुमार्योत्पादनाय स्नेहितं यत्तत्प्रतीत्यम्रक्षितं, तत्र यद्यंगुल्या ईषदीषत् घृतादि गृहीत्वा म्रक्षितं तदा कल्पते, धारया तु नेति १०। तत्र च सार्धपौरुषीअपार्धद्व्यासनकादीनि आकारसंख्यासूत्रेऽनुक्तान्यपि संप्रदायागतत्वात् युक्तियुक्तत्वाच्च पौरुषीपूर्वार्धैकासननवत् ज्ञेयानि, द्वारं ५ ॥ अधुना शुद्धिः, सा च षोढा, यथा—सा पुण सद्दहणा १ जाणणा य २ विणय ३ ऽणुभासणा चेव ४। अणुपालणा५ विसोही भावविसोही ६ भवे छट्ठा ॥१॥ पच्चक्खाणं सवन्नुदंसियं जं जहिं जया काले। तं जो सद्दहइ नरो तं जाणसु

सद्दहणसुद्धं ॥१॥ पच्चक्खाणं जाणइ कप्पे जं जंमि होइ कायव्वं । मूलगुणउत्तरगुणे तं जाणसु जाणणासुद्धं ॥२॥ किइकम्मस्स विसुद्धिं पउंजई जो अहीणमइरित्तं । मणवयणकायजुत्तो तं जाणसु विणओ सुद्धं ॥३॥ अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं । पंजलिउडो अभिमुहो तं जाणऽणुभासणासुद्धं ॥४॥ कंतारे दुब्भिक्खे आयंके वा महया समुप्पण्णे । जं पालियं न भग्गं तं जाणऽणुपालणासुद्धं ॥५॥ रागेण व दोसेण व परिणामेण व न दूसियं जं तु । तं खलु पच्चक्खाणं भावविसुद्धं मुणेयव्वं ॥६॥ यद्वा फासियं १ पालियं २ चेव, सोहियं ३ तीरियं तहा ४ । किट्टिय ५ माराहियं चेव ६, एयारिसयंमी जइयव्वं ॥७॥ उचिए काले विहिणा पत्तं जं फासियं तयं भणियं । तह पालियं च असइं संमं उवओगपडियरियं ॥१॥ गुरुदत्तसेसभोयणसेवणयाए उ सोहियं जाण । पुण्णेऽवि थेवकालावत्थाणा तीरियं होइ ॥२॥ भोयणकाले अमुगं पच्चक्खायंति सरइ किट्टिययं । आराहियं पयारेहिं संममेएहिं पडियरियं ॥३॥ द्वारं ६ ॥ सांप्रतं फलं,तच्च सामान्यतो यथा—पच्चक्खाणस्स फलं इह परलोगे य होइ दुविहं तु । इहलोइ धम्मिलाइ दामण्णगमाइ परलोगे ॥१॥ अत्र च धर्म्मिलदृष्टांतः सविस्तरत्वाद् वसुदेवहिंडीतो ज्ञेयः, दामन्नकस्य त्वयं—अत्राभूद् भरतक्षेत्रे,पुरं गजपुराह्वयम् । तत्र चासीत् सुनंदाख्यो,भद्रकः कुलपुत्रकः॥१॥ तस्याभूज्जिनदासाख्यो, वयस्योऽद्वैतसौहृदः। यः सदा जैनधर्माब्जसेवने भृंगतां ययौ ॥२॥ नेत्राविव समाचारौ, निर्व्याजप्रीतिसंयुतौ । अवियुक्तौ सदाऽन्येद्युरुद्याने तौ समेयतुः ॥३॥ निरीक्ष्य कंचनाचार्यं, दकैरवनिशाकरम् । सुनंदस्ततः सानंदः,समित्रोऽगात्तदंतिके ॥४॥ ललाटस्पृष्टभूपृष्ठस्तमानम्य ससंमदः । पश्यन्नास्यं गुरूणां सोऽध्यास्त मित्रस्य मार्गतः ॥५॥ अथाचख्यौ गुरुर्मांसममेध्यं यो हि खादति । स्वमांसमास्यते श्वभ्रे, गतौ स श्वभ्रपालकैः ॥६॥ श्रुत्वेति जातसंवेगो, जग्राहाभिग्रहं ततः । स मांसभक्षणस्यांगिरक्षणैकविचक्षणः ॥७॥ दुःखद्विपः सुखाकांक्षानात्मौ-

पम्येन देहिनः। स जानन्न व्यधाद् हिंसां,जातुचिन्मांसकाम्यया ॥८॥ तदाऽमितोऽप्यविरलरलरोलानिलैर्जगत् । कंपयन्निव दुष्कालः, कल्पकालोपमोऽभवत् ॥९॥ तस्मिन् महति दुष्काले, पष्ठारक इवाजनि । जनः सर्वोऽपि हि प्रायो, मांसभक्षणतत्परः ॥१०॥ अथोचेऽसौ स्वगेहिन्या, त्रातुं निजकुटुम्बकम् । पंगुवत्किं निषण्णोऽसि ?, मीनानानयसे न हि ॥११॥ सुमुखः संमुखं तस्या, बभाषेऽसौ मिताक्षरम् । भद्रे! भद्रौघघातिन्या, कृतं मे हिंसयाऽनया ॥१२॥ साऽवोचद्वंचितोऽसि त्वमरे किं मुंडिकैः क्वचित् ? । यत्पश्यन्नपि दीनास्यं, शयसे न कुटुम्बकम् ॥१३॥ भक्ष्यं विना कुटुंबेऽस्मिन् ,मृते वंठ इवैककः। कथं दर्शयिताऽसि स्वं, मुखं लोकस्य ? दुर्मुख! ॥१४॥ ततो निर्भर्त्स्य स श्यालैर्बलादपि दयाहृदः । ह्रदेऽनीयत मत्स्यानां, ग्रहणार्थं कृताग्रहैः ॥१५॥ तत्रस्थोऽप्यजले जालं, सोऽक्षैप्सीत् क्षितकाकृतिः । अपतत्तत्र मत्स्यौघः, सिंधौ नद्योघवत् स्वयम् ॥१६॥ समाकर्षंस्तमानायं, वीक्ष्य दुःखाकुलान् झषान् । तं तत्रैवामुचत् क्षिप्रं, कंपमानोऽनुकंपया ॥१७॥ एवं दिनद्वयीमन्यां, मीनानां मनसा विना । स श्यालकानुवृत्त्यैव,चक्रे ग्रहणमोक्षणम् ॥१८॥ तृतीयेऽह्नि तु वीक्ष्यैकां, झषस्यैकस्य पक्षिकाम् । भग्नामस्तोकशोकार्त्तः, स्वौकस्यागात् सुनंदकः ॥१९॥ जगाद स्वजनान् यद्वो, रोचते तत् प्रजल्पत। अहं न जातुचित्कुर्वे, हिंसां श्वभ्रनिबंधनाम् ॥२०॥ इत्युदित्वा सुनंदोऽथानशनं विदधे सुधीः। सम्यक् समाहितस्वांतः, स्वायुष्कं पर्यपूरयत् ॥२१॥–इतश्च मगधाभिख्ये, देशे धर्म्मैकधामनि। श्रियः क्रीडागृहं राजगृहं नामास्ति पत्तनम् ॥२२॥ नरेशो नरवर्म्माख्यस्तत्राभूदिव मांत्रिकः । प्रतापमंत्रतो वश्या,जयश्रीर्यस्य सर्वदा ॥२३॥ तत्रासीन् मणिकाराख्यः, श्रेष्ठी श्रेष्ठिशिरोमणिः । अनेकमणिकोटीशो, मण्याकर इवापरः ॥२४॥ तस्य कुंदोज्ज्वलयशाः, सुयशा नाम पत्न्यभूत् । तस्याः कुक्षौ सुनंदस्य, जीवः समुदपद्यत ॥२५॥ दिनेषु परिपूर्णेषु, साऽसूत सुतमुत्तमम् । जनताजनितानंदं, राकारात्रिरिवोडुपम्

॥२६॥ तस्योग्रभागधेयस्य, नामधेयं तथा व्यधात्। दामन्नक इति ख्यातं, कृत्वा जन्ममहोत्सवम् ॥२७॥ पाल्यमानः स यत्नन, सार्धं पित्रोर्मनोरथैः। क्रमादासादयत् वृद्धिं, समजन्यष्टहायनः ॥२८॥ इतश्च तत्पितुर्गेहेऽभवन्मारिर्भयंकरी। ज्ञात्वैतत् तद्गृहद्वारे, राजा वृत्तिमकारयत् ॥२९॥ तया वर्धितया मार्या, तत्कुलं क्षयमासदत्। प्राग्जन्मकृतकारुण्यपुण्यं दामन्नकं विना ॥३०॥ ततोऽसौ श्वकृतद्वारा, निरियाय स्वमंदिरात्। प्राप्यांतरं गुप्तिगेहादिव गुप्तिगतो नरः ॥३१॥ क्षुधार्त्तः स परिभ्राम्यन्, मुग्धबुद्धिर्गृहे गृहे। आगान् सागरपोताख्यमहेभ्यस्य गृहांगणे ॥३२॥ तदा तत्रागमत् साधुयमलं विमलाशयम्। तयोर्ज्येष्ठस्तु सामुद्रलक्षणेषु विचक्षणः ॥३३॥ सोऽथ दामन्नकं वीक्ष्य, द्वितीयं मुनिमूचिवान्। खल्वसौ वर्धमानोऽस्य, गेहस्य भविता विभुः ॥३४॥ कुड्यांतरस्थितस्तत्तु, सर्वमाकर्ण्य सागरः। वज्राहत इवोत्पन्नविषाद इति दध्यकौ ॥३५॥ अये! यो विभवो नैकैर्महाकष्टैर्मयाऽर्जितः। विभुस्तस्य समस्तस्य, ही रंकोऽयं भविष्यति ॥३६॥ तदेनं शिशुमद्यैव, केनचित् मारयाम्यहम्। नष्टे बीजे कुतो भावी, प्रादुर्भावोऽङ्कुरस्य हि ? ॥३७॥ ध्यात्वेति सागरश्रेष्ठी, बालधीर्बालकं तकम्। प्रलोभ्य मोदकैर्मुग्धं, निन्ये श्वपचपाटके ॥३८॥ तत्रैकः खंगिलाभिख्यो, मातंगोऽर्थवशीकृतः। तद्वधाय समादिष्टोऽभिज्ञानं च स याचितः ॥३९॥ ततः सोऽपसरद्वेलसागर इव सागरः। स्वस्थाममगमत्तूर्णं, पूर्णप्रायोमनोरथः ॥४०॥ अथ तं बालकं वीक्ष्य, मृगार्भमिव मुग्धकम्। अध्यासीच्छौनिकोऽप्येवं, संजातकरुणो हृदि ॥४१॥ श्रेष्ठिनः शिशुनाऽनेन, दुष्कृतं हंत किं कृतम् ?। यदेतस्य निपातार्थं, पाप्येष यततेतराम् ॥४२॥ यद्वा मत्तोऽपि कः पापी, परस्वलवलोलुपः। ईदृग्कर्म्मापि यः कर्तुमुद्यतोऽस्मि हहाऽल्पधीः॥४३॥ तस्मादस्य वधेनेव, तेन स्वेनापि मे कृतम्। यदि वा जीवतादेष, ग्रहीष्यामि धनं पुनः ॥४४॥ ध्यात्वेति कर्त्तिकां कृष्ट्वा, विद्युल्लेखासखीं क्षणात्। तत्कनिष्ठांगुलीं छित्त्वा प्रत्यूचे तमिदं

वचः ॥४५॥ अरे द्रुतमितो नश्य, यदि जीवितुमिच्छसि । अन्यथा त्वां हनिष्यामि, नूनं कर्त्तिकयाऽनया ॥४६॥ तच्छ्रुत्वा कंपमानांगो, वातोद्धूत इव द्रुमः । ततोऽनश्यत् झगित्येष, मृगारातेरिवैणकः ॥४७॥ सोऽग्रे यान् भोगिनो बिभ्यद्धर्षाभूरिव सत्वरम् । प्राप सागरपोतस्य, गोकुलं गोकुलाकुलम् ॥ ४८ ॥ नंदाभिधो विभुस्तत्र, भद्राकारं निरीक्ष्य तम् । प्रत्यपद्यत पुत्रत्वेनापुत्रः परितोषभाक् ॥४९॥ तद्गेहेऽथ निराबाधं, वर्धमानः क्रमेण सः । द्वैतीयीकं वयः प्रापाद्वैतसौंदर्यसंयुतः ॥५०॥ स मातंगोऽप्यभिज्ञानहेतोश्छित्वा तदंगुलीम् । सागरायार्प्पयत्तां तु, दृष्ट्वाऽसौ मुमुदेतमम् ॥ ५१ ॥ अन्यदा सागरश्रेष्ठी, गोष्ठे याति स्म तत्र च । दामन्नकं निरैक्षिष्ट, छिन्नांगुल्या सुलक्षितम् ॥५२॥ तं दृष्ट्वा सोऽथ साशंको, नंदं पप्रच्छ तत्कथाम् । सोऽपि तस्मै यथावृत्तं, तद्वृत्तांतमचीकथत् ॥५३॥ तच्छ्रुत्वा सागरो दध्यावभूत् सत्यं मुनेर्वचः । यद् बाह्यविभवस्यायमधुनैवाधिभूरभूत् ॥५४॥ परं कार्यो न निर्वेदः, कार्यो नित्यमुपक्रमः । अनिर्वेदः श्रिया मूलं, यस्मात् सर्वत्र गीयते ॥५५॥ एवं विमृश्य स श्रेष्ठी, चचाल स्वपुरं प्रति । स्वामिन्! किमुत्सुकोऽसीत्यपृच्छत्तं गोकुलेश्वरः ॥५६॥ श्रेष्ठ्यूचे तत्र मे कार्यं, महत् संप्रति संस्मृतम् । नंदो जगाद तत्रार्थे, मत्सुतोऽयं व्रजिष्यति ॥५७॥ तच्छ्रुत्वा सागरस्तूर्णं, लिखित्वा लेखमात्मना । तस्यार्प्पयत् स तं लात्वा, द्रुतं राजगृहं ययौ ॥५८॥ तत्पुरोद्यानमध्यस्थे, स्मरदेवकुलेऽथ सः । विशश्राम सृतिश्रांतो, रूपेणान्य इव स्मरः ॥५९॥ सुष्ठुवेषा विषाभिख्या, श्रेष्ठिसागरपुत्रिका । वरार्थिन्यागमत्तत्र, रतिनाथमथार्चितुम् ॥६०॥ दामन्नकेऽथ निद्राणे, मुद्रितं तातमुद्रया । लेखमालोक्य सा सद्यो, लघुहस्ता तमाददे ॥६१॥ तं विमुच्य विमुद्राब्जनेत्रा तल्लिखितं पितुः । इत्यवाचयत स्पष्टवर्णैः सा वरवर्णिनी ॥ ६२ ॥ स्वस्तिश्रीगोकुलात्कल्यः, श्रेष्ठी सागरपोतकः । पुत्रं समुद्रदत्तं सस्नेहमादिशते यथा ॥६३॥ पुंसोऽस्याधौतपादस्य, विषं वत्स! प्रदीयताम् । नात्रार्थे कोऽपि

संदेहो, विधेयो धीनिधे! त्वया ॥६४॥ वाचयित्वेति निष्ठ्यूतार्द्रयाऽञ्जनशलाकया। विलोप्य बिंदुमाकारं, विषशब्दे विषा व्यधात् ॥६५॥ मुद्रयित्वा ततोऽगच्छत्, सा स्वगेहे ससंभ्रमा। प्रबुद्धः सोऽपि गत्वाऽऽशु, सागरं लेखमार्प्पयत् ॥६६॥ बुद्ध्वा लेखार्थमाश्वेव, विवाहोत्सवहेतवे। सागरिर्गरिमांभोधिर्मौहूर्त्तानभ्यजूहवत् ॥६७॥ तेऽवोचन्नद्य संध्यायां, यादृक्षं लग्नमस्ति हि। तादृक्षमेषमे वर्षे, सकलेऽपि न विद्यते ॥६८॥ हृष्टः समुद्रदत्तोऽथ, विवाहं विदधे तयोः। कुलांगनाजनैर्गीयमानैर्धवलमंगलैः॥६९॥ इतश्च चलितो गोष्ठात्, सागरो जनवार्त्तया। तमुद्वाहोत्सवं श्रुत्वा, दध्याविति विषण्णधीः ॥ ७० ॥ ह्री व्यचिंत्यन्यथाऽस्माभिर्विधिना त्वन्यथा कृतम्। त्यक्त्वा लभ्यं यथा द्रव्यं,दातव्यं प्रत्युताभवत् ॥७१॥ यद् गृहस्य गृहिण्येवेश्वरी तस्यास्तु वल्लभः। जामाता मद्गृहस्यातो, जज्ञेऽयं रंकको विभुः ॥७२॥ तथापि खंगिलेनामुं, मारयाम्यधुना ध्रुवम्। दुःखिता दुहिता त्वेवं, भविष्यति भवत्वपि ॥७३॥ एवं विमृश्य दुष्टात्मा, ययौ खंगिलवेश्मनि। स किं न मारितो रे रे, वंचकेति ततर्ज तम् ॥७४॥ प्रत्यूचे खंगिलः श्रेष्ठिन्नद्य दर्शय तं मम। करोमि येन तं हत्वा,सफलांस्त्वन्मनोरथान्॥७५॥ दत्त्वाऽथ तस्य तद्घातसंकेतं मातृकागृहे। आजगाम ततः श्रेष्ठी, दुष्टबुद्धिः स्ववेश्मनि ॥७६॥ स तत्रैकालवालस्थौ, लताद्रू इव संगतौ। तौ वधूवरकौ वीक्ष्य, साक्षेपमिदमब्रवीत् ॥७७॥ रे युवाभ्यां किमद्यापि, पूज्यंते मातृका न ताः। यत्प्रमादादयं जज्ञे, संगमो भवतोर्ननु ॥७८॥ इत्युक्तौ तेन पुष्पाद्यैर्भृत्वा पटलिकां द्रुतम्। प्रचेलतुस्तदर्चार्थं, सूर्यास्तसमये हि तौ ॥७९॥ वीक्ष्य सागरिरुत्स्थो,यातौ तौ मातृकालये। एवं दध्यावये कोऽयं, पूजायाः समयो ननु? ॥८०॥ यदेतौ नूतनोद्वाहावस्तं जिगमिषू रविः। बहुदोपः प्रदोपश्च, तथाऽऽसन्नतमं तमः ॥८१॥ एवं विमृश्य तौ तत्र, संस्थाप्य स्वयमीयिवान्। पूजापटलिकां तां तु, लात्वा भट्टारिकागृहे ॥८२॥ तदंतः प्रविशन्नेव, जघ्ने कर्त्तिकया हृदि। खंगिलेन स दुर्ग्गाया, बलिं कर्तु-

मिवाग्रतः ॥८३॥ मृतमात्मजमाकर्ण्य,वक्षःस्फोटेन सागरः। पंचत्वमासदत् पुत्रवियोगो हि सुदुस्सहः॥८४॥ ततो राजाऽऽज्ञया श्रेष्ठिपुंगवैस्तुष्टमानसैः। दामन्नकः प्रभुश्चक्रे, श्रेष्ठिसागरवेश्मनः ॥८५॥ स सुधीर्वर्त्तमानोऽपि, यौवनेऽतीव पावने। व्यधात् कामेषु नासक्तिं, बाधनेनार्थधर्म्मयोः ॥८६॥ स चक्रे न खलैः संगं, दातृभिः कलहं सताम्। सत्संगांभोजसेवायां, ययौ तु कलहंसताम् ॥८७॥ एवं च तस्य शिष्टाध्वाध्वनीनस्य महात्मनः। पुरोऽन्यदाऽपठत् कोऽपि,भट्टो गाथामिमां यथा॥८८॥ अणुपुंखमावहंताऽवि आवया तस्स संपया हुंति। सुहदुहकच्छपुडओ जस्स कयंतो वहइ पक्खं ॥८९॥ तच्छ्रुत्वा तस्य भट्टस्य, दीनाराणां ददौ मुदा। लक्षत्रयं यथावृत्तवृत्तशंमनरंजितः ॥९०॥ अनेनान्यधनांधेन, कियद्दत्तमितीर्ष्यया। ज्वलंतो नागरा राज्ञे, तं वृत्तांतं व्यजिज्ञपन् ॥९१॥ नरवर्म्मनृपेणाथ, समाहूय स्वपुरुषैः। त्रिलक्षीदानवृत्तांतं, पपृच्छे मणिकारभूः ॥९२॥ मूलतोऽपि यथावृत्त, स्ववृत्तांतमचीकथत्। दामन्नको नृपस्याग्रे, प्रौढपुण्यप्रगल्भवाक् ॥९३॥ नृपेणाथ मुदोत्फुल्लमुखेन सकले पुरे। स एव विदधे मुख्यो, मार्गाभिज्ञोऽध्वगेष्विव ॥९४॥ एवं पूर्वभवोपात्तपुण्यप्राग्भारयोगतः। पितेव सर्वलोकानां, संमतः समजायत ॥९५॥ स प्राप्य सुगुरोर्वक्त्राज्जैनं धर्म्मं प्रपाल्य च। आसाद्य च क्रमान्मृत्युं,बभूव प्रवरः सुरः ॥९६॥ भूयो मर्त्यभवं प्राप्य, जैनीं दीक्षां प्रपाल्य च। निष्ठापिताष्टकर्म्मा च, क्रमात् मोक्षं स यास्यति ॥९७॥ इति दामन्नकचरितं भो भव्यजना! निशम्य निजशक्त्या। कुरुत प्रत्याख्याने गतप्रमादाः सदा यत्नम् ॥९८॥ इति सामान्यफलं, विशेषतस्तु यथा 'पच्चक्खाणंमि कए आसवदाराइं हुंति पिहियाइं। आसववुच्छेएण य तण्हावोच्छेयणं हवइ ॥१॥ तण्हावुच्छेएणं अउलोवसमो भवे मणुस्साणं। अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥२॥ तत्तो चरित्तधम्मो कम्मविवेगो अपुव्वकरणं तु। तत्तो केवलनाणं तत्तो मोक्खो सया सोक्खो॥३॥त्ति ॥ एवं वंदनकालोचनादिसूत्राणि व्याख्याय प्रस्तुतमाह—

अह धम्मदेसणत्थं च, तत्थ सूरी समागओ। पुव्विं पच्छा व दायव्वं, विहिणा वंदणं जओ ॥८०॥
नीयागोयं खवे कंमं, उच्चागोयं निबंधए। सिढिलं कम्मगंठिं तु, वंदणेणं नरो करे ॥८१॥
तित्थयरत्तं सम्मत्तखाइयं सत्तमीइ तइयाए। आउं वंदणएणं बद्धं च दसारसीहेण ॥८२॥

विणओवयार १ माणस्स भंजणा २ पूयणा गुरुजणस्स ३।
तित्थयराण य आणा ४ सुयधम्माराहणा ५ ऽकिरिया ६ ॥ द्वारं ९ ॥८३॥

पच्चक्खाणं तु काऊणं दारं १०। पुच्छए सेसकिच्चयं। दारं ११। कायव्वं च मणे काउं, तओ अण्णं करे इमं ॥८४॥
साहुसाहुणिमाईणं, काऊणं च जहोचियं। समणोवासगमाईणं, वंदं वंदंति जंपई ॥८५॥ द्वारं १२ ॥

अथशब्दः प्रक्रियाप्रश्नानंतर्यमंगलोपन्यासप्रतिवचनसमुच्चयेषु, अत्र तु चैत्यगृहे गुरुवंदनादि कार्यं समुच्चिनोतीति समुच्चये, तत्र निश्राकृतादिभेदभिन्ने चैत्ये धर्म्मदेशनार्थं चशब्दात् स्नात्राद्यवलोकनार्थं च सूरिः–आचार्यः समागतः, ततश्च पूर्वमिति धर्म-देशनायाः प्राक् पश्चाद्वा विधिना पूर्वोक्तस्वरूपेण वंदनमिति द्वादशावर्त्तवंदनं दातव्यं तस्य सूरेरिति शेषः, यतो वक्ष्यमाणहेतुत इति। तमेवाह—नीचैर्गोत्रं कर्म्म पूर्वबद्धं क्षपयति, उच्चैर्गोत्रं च नितरां बध्नाति, शिथिलं ज्ञानावरणीयादि कर्म्मग्रंथिं पुनर्वंदनेन नरः कुर्यादिति। अस्य फलं दृष्टांतद्वारेणाह—गाथेयं भावितार्थैव, प्रागुक्तकृष्णचरित इति। पूर्वादिष्टान् षट् गुणानाह—विनय एव उपचारो–भक्तिविशेषः, तथा मानस्य–अहंकृतेः भंजनं, गुरुजनस्य पूजना, तीर्थंकराणां चाज्ञा–श्रुतधर्म्माराधना अक्रियेति सर्वक्रिया-विगमादचिरेण मोक्षश्च वंदनेन स्यादिति॥ द्वारं ९। सांप्रतं दशमद्वादशत्रयोदशलक्षणद्वारत्रयाभिधित्सयाऽऽह—प्रत्याख्यानमिह

नमस्कारसहितादि स्वयं गृहीतमपि गुरुसाक्षिकं विधेयं तच्च कृत्वेति, द्वारं १०। अथैकादशं श्रवणद्वारमुल्लङ्घ्य अल्पवक्तव्यत्वाद्यतिपृच्छा-उचितकरणीयद्वारद्वयमाह–'पुच्छए सेसकिच्चयं'ति, पृच्छति साधुकर्म्मशरीरनिराबाधवार्त्ताद्यशेषकृत्यं, तच्च महानिर्जराहेतुः, यदुक्तं–"अभिगमणवंदणनमंसणेण पडिपुच्छणेण साहूणं। चिरसंचियंपि कम्मं खणेण विरलत्तणमुवेइ ॥१॥"त्ति, द्वारं १२। 'कायव्वं च मणे काउं'ति कर्त्तव्यं च शक्त्यनुरूपं साधुग्लानत्वादावौषधादिप्रदानलक्षणं मनसि कृत्वा गृहाद्यागतानां साधूनामिदमौषधादि दास्येऽहमिति मनस्याध्याय ततोऽन्यत् कुर्यादिदं–वक्ष्यमाणमिति, ग्लानस्य प्रतिचरणे च महत्फलं, तथा चागमः–"किं भंते! जे गिलाणं पडियरइ से धन्ने उयाहु जे तुमं दंसणेण पडियरइ से?, गो०! जे गिलाणं पडियरइ से धण्णे, से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! जे गिलाणं पडियरइ से मं दंसणेणं पडिवज्जइ, जे मं दंसणेणं पडिवज्जइ से गिलाणं पडियरइ, आणाकरणसारं खु अरहंताणं दंसणं, से एएणट्ठेणं गोयमा! एवं वुच्चइ–जे गिलाणं पडियरइ से मं वडिवज्जइ, जे मं पडिवज्जइ से गिलाणं पडियरई"त्यादि, इति॥ यदुक्तम् 'अन्यत् कुर्यादिदं' तदेवाह—साधुसाध्व्यादीनामादिशब्दादवमग्नानां च, निश्राकृतचैत्ये तेषामपि संभवात्, यथोचितं–यथायोग्यं वंदनं थोभवंदनवाङ्नमस्कारादिकं कृत्वा, यतोऽवमग्नानामपि कारणेन सूत्रे नमस्कारादेरुक्तत्वात्, यदार्षं–"परियाय परिस पुरिसं खित्तं कालं च आगमं नाउं। कारणजाए जाए जहारिहं जस्स जं जोगं ॥१॥ वायाइ नमोक्कारो हत्थुस्सेहो य सीसनमणं च। संपुच्छणऽच्छण थोभवंदणं वंदणं वावि ॥२॥" तथा श्रमणोपासकादीनामादिशब्दात् श्राविकाणां च वंदंवंदमित्यपभ्रंशभाषया जल्पति वंदे२ इति, वीप्सायां हि सर्वान् श्रावकान् श्राविकाश्च नमस्कुर्व्वे इत्यर्थः॥ अधुना पूर्वोद्दिष्टं श्रवणद्वारं, तत्र तावच्छ्रवणविधिं चतुःसूत्र्याऽऽह—

नासन्ने नाइदूरंमि, नेव उच्चासणे विऊ। समासणं च वज्जेज्जा, चिट्ठिज्जा धरणीयले ॥८६॥

न पक्खओ न पुरओ, नेव किचाण पिट्ठओ। नय ऊरुं समासज्ज, चिट्ठिज्जा गुरुणंतिए ॥८७॥
नेव पल्हत्थियं कुज्जा, पक्खपिंडं च संजए। पाए पसारिए वावि, न चिट्ठे गुरुणंत्तिए ॥८८॥
निद्दं विकहं च वज्जित्ता, काऊणं अंजलिं सिरे। कण्णंजलीहिं भत्तीए, घुंटे सिद्धंतमोसहं ॥८९॥

नासन्ने—नातिनिकटे उपविशेद्, उच्छ्वासाद्यैर्गुरुं प्रति शिष्यस्याशातनासंभवात्, तथा नातिदूरे सम्यक् श्रवणाद्यसंभवात्, नैव चोच्चासने विउत्ति विद्वान्—गुरुवरिवस्यानिपुणः, समासनं च वर्जयेत्, तिष्ठेत्—उपविशेत् धरणीतले—निर्जंतुभूभागे। न पक्षतः—पार्श्वयोः अविनयसंभवात्, न पुरतः—अग्रतोऽन्यवंदारूणां विवंधकत्वात्, नैव कृत्यानां—गूरूणां पृष्ठतः, तेषां पश्चान्मुखनिरीक्षणेनाबाधासंभवात्, न चोरुं समासृत्य अविनयभयादुरोरुपरि पादं निवेश्य तिष्ठेद् गुरूणामंतिके ॥ नैव पर्यस्तिकां कुर्यात् पक्षपिंडं—बाहुःपर्यस्तिकां, संयत इत्यत्र प्रस्तावादेशसंयतः, पादौ प्रसार्यापि न च तिष्ठेद् गुर्वंतिके॥ निद्रां विकथां च वर्जयित्वा कृत्वाऽञ्जलिं शिरसि कर्णांजलिभ्यां भक्त्या घुंटयेत्—सहर्षं पिवेद् भावरोगापहारित्वात् सिद्धांतौषधमिव सिद्धांतौषधं तत्, मकारोऽलाक्षणिक इति सूत्रचतुष्टयार्थः ॥ एनमेवार्थं सविशेषं भावयन्नाह—

अण्णाणमोहमिच्छत्तमहावाहिविरेयणं। कुग्गाहविसघत्थाणं, महामंतो जिणागमो ॥९०॥

अज्ञानं—तत्त्वानभिज्ञता मोहो—धनादिष्वतिगृध्नुता मिथ्यात्वं—कुदृष्टिरक्तता,एतान्येव जीवस्यानंतदुःखहेतुत्वान्महाव्याधयस्तेषां तत्कालक्षयकारित्वाज्जिनागमो विरेचनं, विरेकः, शय्यंभवचिलातीपुत्रगोविंदवाचकादीनामिव,तथाहि—राजगृहे शय्यंभवभट्टस्तत्त्वमजानन् धर्मचिकीर्षया यागं मावर्त्तयत्, इतश्च प्रभवाचार्यस्तं भविष्यच्छ्रुतकेवलिनं विज्ञाय तत्र समवसृत्य साधुसंघाटकं गोचरचर्या-

प्रस्थितमिदमवादीत्—मखपाटके शय्यंभवमुद्दिश्य 'अहो कष्टं तत्त्वं न ज्ञायते' इत्युद्घोष्यं, साधुभ्यां च तथैव कृते सोऽचिंतयत्—जितरागद्वेषमोहास्त्यक्तसर्वसंगाः श्वेतभिक्षवो, न ह्यमी असत्यममिदधति, तत्पश्यामि, कोऽत्र परमार्थः?, यूपमग्निः पशुर्वेत्याशंकाशङ्कुशल्यितांगो महोपाध्यायं प्रत्याह—किमत्र तत्त्वं ?,सोऽप्यवादीद्—वेदास्तत्त्वं,अपौरुषेयत्वात् ,अग्निश्च'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति वचनात् ,इत्यादिके युक्तिवियुक्ते तेनोक्ते भट्टोऽत्यंतरुष्टः कृष्ट्वा निशातासिपुत्रिकां प्रत्याह—ब्रूहि यथावस्थितं, अन्यथा त्वामात्मानं चानया नेष्याम्यंतकांतिकं, ततोऽसौ शिरश्छेदे तत्त्वं कथ्यमित्यकथयद्—अपनय यूपं, गृहाण तदधोवर्त्तिनीं युगादिजिनप्रतिमां तत्त्वमिति,तथैव च कृते तां दृष्ट्वा भट्टस्तुष्टचित्तस्तस्मै यज्ञोपकरणं प्रदाय प्रभवांतिके प्रव्रज्य जातः श्रुतकेवलीति ॥ चिलातीपुत्रोऽपि प्राग्जन्मविराधितव्रतो महामोहमोहितमती राजगृहे धनश्रेष्ठिगृहाद् धनं तत्पुत्रीं च सुंसुमामादाय पलायमानः पश्चादायातं ससुतं धनश्रेष्ठिनं वीक्ष्य सुंसुमायाः शिरश्छित्त्वा किंचिद्जातसंवेगः साधुमालोक्य स्तोकाक्षरैर्मम धर्म्ममाख्याहीत्युक्तत्वान् , तेनोक्तं—उपशमो विवेकः संवरश्च कार्यः, एषोऽप्येतत् पदत्रयं भावयन् पर्यस्तितमहामोहमाहात्म्यः कायोत्सर्गस्थोऽसृग्गंधागतवज्रतुंडकीटिकाकोटिकृततितउकल्पकायो मनागपि तास्वप्रदुष्यन् सार्धदिनद्वयांते विपद्य सहस्रारे स्वर्गश्रियमशिश्रियत् ॥ गोविंदस्तु वादे विवदमानो जैनैरनेकशः पराजितो मिथ्यात्वमथितसत्पथस्तान् विजेतुकामः स्थविरांतिके प्रव्रज्य पूर्वगतमधीयानोऽपगतमिथ्यात्वामयो वाचकपदमाससादेति ॥ तथा कुग्रहः—कुमानुषोपदेशादनुपकृतोपकारिषु तीर्थंकरादिष्वपि विप्रतारकाभिप्रायः स एव विशिष्टचैतन्यविनाशकत्वाद्विषं तेन ग्रस्तानामसुमतामचिंत्यमाहात्म्येन सद्यः पुनस्तच्चैतन्यसंपादनात् महामंत्रो जिनागमो, रोहिणेयादीनामिव, तथाहि—वैभारगिरिगह्वरनिवासिना सदाऽतिक्रूरेण लोहखुराख्यतस्करेण मृत्युमुखमागतेन रोहिणेयाह्वो निजपुत्र इत्यभाणि—वत्स ! स्वकुला-

चौरजीवितक्षयकारीणि शाकिनीमंत्राक्षराणीव महावीराक्षराणि कर्णकोटरे त्वया प्रयत्नेन प्रविशंति रक्षणीयानि, तेनापि पितृवत्सलेन तत् प्रत्यपादि, अत्रार्थे करणिं कारयित्वा मृत्वा गतोऽसौ सप्तमनरकावन्यां, रोहिणेयोऽपि व्युद्ग्राहितमतिर्व्याघ्रादिव श्रीमन्महावीरात् सदैव दूरतरं विपरिवर्त्तमानोऽप्येकदा कार्यौत्सुक्यात् तेनैव वर्त्मना राजगृहं प्रति द्रवमाणः पाणिद्वयांगुलिभ्यां निपीडितश्रुतिविवरोऽकस्मादत्युत्कटकंटकोद्विद्धपादतलः पदमप्यग्रे प्रयातुमक्षमः पाणिनैकेन तत्पादकंटकमाकर्षयन् स्वामिनो व्याख्यायामनिमिषनयनादि देवस्वरूपमश्रौषीत्, अन्यदा सोऽभयकुमारेण प्रपंचेन गृहीत्वा कथंचिदपि चौरिकामप्रतिपद्यमानः चंद्रहासमदिरां पाययित्वा विमानोपममंदिरोपरितनरत्नमंडपिकायां मणिमयपल्यंके शायितः, क्षणांतरे विबुद्धः सन् स्वर्गांगनादसकृपण्यांगनाजनविधीयमानजयजयारावश्रवणसमुल्लसितपरमहृदयप्रसादः प्रमोदभरभ्राजिष्णुसरभसकिंनरामरसरूपनरनारीनिकरप्रारब्धप्रेक्षणीयकक्षणः तत्क्षणादागतद्वाःस्थपरिपृष्टदेवत्वप्राप्तिहेतुप्राकृतसुकृतदुष्कृतव्यतिकरः प्राक्श्रुतजिनवचनावगतयथावस्थितदेवस्वरूपः तत्रत्यं च जनमनिमिषाक्षं मनसा कार्यसाधकमम्लानमाल्यं चतुरंगुलीरस्पृशद्भूमिभागं चापश्यन् विनिश्चिताभयप्रपंचो निगूहन्नात्मानं अभयेन अभयदानपूर्वकं पृष्टः सन् पूर्वं स्ववृत्तांतमाख्याय श्रेणिकराजकृतनिष्क्रमणमहोत्सवः श्रीवीरपादांते प्रव्रज्य रौहिणेयो द्यां जगामेति ॥ किंच—-

धम्माधम्मं तहा किच्चं, जुत्ताजुत्तं तहेव य। देवा य देवलोगा य, सिद्धा नेरइया तहा ॥९१॥

जं एमाई पयत्था, आगमेण वियाणए। उज्झित्ता सव्ववावारं, तओ य तं निसामए ॥९२॥

धर्मश्चाधर्मश्च धर्माधर्म्मं तत्, आगमेन विजानातीत्येतत्सर्वत्रापि योज्यं, तत्र धर्मः—अहिंसादिलक्षणो जीवादितत्प्रणेतृजैनागमा-

द्दते न सम्यग्ज्ञायते, अधर्म्मोऽपि प्राणिवधाद्यात्मकः कुदृष्टिमूढैः पंचभवच्छागीभूतस्वपितृवधकेनेवाधर्म्मतया तं विना दुर्विज्ञान एव, तथेति-तेनैव प्रकारेण, कृत्यं-कर्त्तव्यं स्वाध्यायादियुक्तं चैत्यवंदनगुरुवंदनादि,अयुक्तं-कुतीर्थगमनपरपाषंडप्रशंसादि, तथैव चेति समुच्चये, तथा देवाश्च-भुवनपतिर्व्यंतरज्योतिष्कवैमानिकभेदाच्चतुर्धा, तत्र-असुरा १ नागा२ विज्जू३ सुवन्न४ अग्गी य ५ वाउ ६ थणिया य ७। उदही८ दीव९ दिसावि य१० दस भेया भवणवासीणं ॥१॥ पिसाय १ भूया२ जक्खा य ३ रक्खसा४ किन्नरा य ५ किंपुरिसा ६ । महोरगा य ७ गंधव्वा८ अट्ठविहा वाणमंतरिया ॥२॥ ससि १ रवि २ गह ३ नक्खत्ता ४ तारा जोइसिय पंचहा देवा । वेमाणिया य दुविहा कप्पगया कप्पतीता य ॥३॥ सोहंमी१ साण२ सणंकुमार ३ माहिंद ४ बंभ ५ लंतगया ६। सुक्क७ सहस्सारा८ ऽऽणय९ पाणया१० आरण११ च्चुयजा१२ ॥४॥ सुदरिसण१ सुप्पबुद्धं२ मणोरमं३ सव्वभद्द ४ सुविसालं५। सोमणसं६ सोमाणस७ पीइकरं८ चेव नंदिकरं९ ॥५॥ विजयं च१ वेजयंतं२ जयंत३ मपराजियं च४ सव्वट्ठं५ । कप्पाईया गेविज्जऽणुत्तरा कप्पगय सेसा ॥६॥ चशब्दस्तद्गतायुर्देहादिवक्तव्यतासंसूचकः,तत्रायुः-चमरबलि अयरमहियं दिवड्ढपलियं तु सेसजम्माणं । आउं दो देसूणुत्तराण पलियं वणयराणं ॥७॥ पलियं सवासलक्खं १ सवाससहसं च२ पलिय३ मद्धं च ४ । चउभागो य५ कमेणं६ ससिरविगहरिक्खताराणं ॥८॥ दो साहि सत्त साहिय दस चउदस सतर अयर जा सुक्को । एक्केकाहिग तदुवरि तित्तीस अणुत्तरेसु परं॥९॥ देहमानं त्विदं-सत्तरयणीपमाणो देहो देवाण जाव ईसाणो । दुगदुगदुगचउ गेविज्जगेसु इक्किकहत्थूणो॥१०॥ जघन्यायायुरुत्पादविरहादिकं च ग्रंथांतरादवसेयं, तथा देवलोकाश्च-देवानामसुरादीनां लोकाः-आश्रयविशेषा देवलोकाः, ते चैवं-चउसट्ठि लक्ख असुरे नागे चुलसी बिसत्तरि सुवण्णे । छण्णवइ भवण वाऊसु छहतरि सेसेसुं पत्तेयं ॥११॥ सोहम्माइसु बत्तीस

लक्ख अडवीस बार अठ्ठ चऊ । पंचास चत्त छ सहस दु दु सय तह सड्डसय दुन्नि॥१२॥ तिन्नि सया अट्ठारा गेवेज्जेसुं अणुत्तरा पंच । जोइसवंतरियाणं विमाणनगरा असंखेज्जा ॥१३॥ एषां च प्रतिष्ठानसंस्थानमानवर्णावलिकाप्रविष्टांतरादिस्वरूपं ग्रंथांतरादवसेयं, तथा 'सिद्ध'त्ति घातिकर्म्मचतुष्कक्षयेण केवलोत्पत्तौ वेदनीयायुर्नामगोत्रवेदयिनार उत्कर्षतो देशोनपूर्वकोटीं जघन्यतेऽन्तर्मुहूर्त्तमात्रकालं विहृत्य यद्यायुषः सकाशात् शेषकर्म्माण्यधिकानि ततस्तत्समीकरणार्थं केवलिसमुद्घातं विदधति, उक्तं च–"यस्य पुनः केवलिनः कर्म्म भवत्यायुषोऽतिरिक्ततरम् । स समुद्घातं भगवानथ गच्छति तत् समीकर्तुम्॥१॥ दंडं प्रथमे समये कपाटमथ चोत्तरे तथा समये। मंथानमथ तृतीये लोकव्यापी चतुर्थे च ॥२॥ संहरति पंचमे त्वंतराणि मंथानमथ पुनः षष्ठे। सप्तमके तु कपाटं संहरति ततोऽष्टमे दंडम्॥३॥" ततः संभवत्कार्ये योगत्रयं व्यापार्य शुक्लध्यानांत्यभेदद्वयेन क्षपितभवोपग्राहिचतुष्कत्वात् सिद्धा निष्ठितार्था इत्यर्थः,ते च गतिस्थानावगाहनास्वरूपतः सूत्रे एवमभिधीयंते, तत्र गतिः–लाऊ एरंडफले अग्गी धूमे इसू धणुविमुक्के । गइपुव्वपओगेणं एवं सिद्धाणवि गई उ ॥१॥ अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया । इहं बुंदिं चइत्ताणं, तत्थ गंतूण सिज्झइ ॥२॥ स्थानं तु–ईसिंपब्भाराए सीयाए जोयणंमि लोगंते । बारमहिं जोयणेहिं सिद्धी सव्वट्ठसिद्धाओ ॥१॥ निम्मलदगरयवण्णा तुसारगोखीरहारसरिवण्णा । उत्ताणयछत्तयसंठिया उ भणिया जिणवरेहिं॥२॥ एगा जोयणकोडी लक्खा बायालतीस य सहस्सा । दो य सय अउणवण्णा सिद्धसिलाए इमा परिही ॥३॥ बहुमज्झदेसभागे अट्ठेव य जोयणाइं बाहल्लं । चरिमंतेसु य तणुई अंगुलसंखिज्जईमाणं ॥४॥ अवगाहना पुनः शरीराभावात्सिद्धजीवप्रदेशानगाढाकाशप्रदेशरूपेह गृह्यते, तत्र–ईसीपब्भाराए उवरिं खलु जोयणस्स जो कोसो। कोसस्स य छब्भाए सिद्धाणोगाहणा भणिया॥१॥ तिन्नि सया तेत्तीसा धणुत्तिभागो य होइ

उक्कोसा। चत्तारि य रयणीओ रयणितिभागूणिया मज्झा ॥२॥ ओगाहणा जहण्णा समहियअट्ठंगुला य इगरयणी। सेलेसिसंठियत-णुत्तिभागहीणा तदाकारा ॥३॥ स्वरूपं च तेषां अनंतज्ञानदर्शनवीर्यसुखरूपानन्तचतुष्टयात्मकं, तत्र-केवलनाणमणंतं वत्थूण विसे-सबोहणसरूवं। सामण्णबोहरूवं तह केवलदंसणमणंतं॥१॥ सिद्धाणिक्कसमइओ उवओगो नाणदंसणे कमसो। जीववीरियं चऽणंतं न करणविहियं करणविगमा॥२॥ नवि अत्थि माणुसाणं त सोक्खं नविय सव्वदेवाणं। जं सिद्धाणं सोक्खं अव्वाबाहं उवगयाणं॥३॥ जह नाम कोइ पुरिसो नगरगुणे बहुविहे वियाणंतो। न चएइ परिकहेतुं उवमाइ तहिं असंतीए॥४॥ म्लेच्छज्ञातं त्विदं-कोइ नरिंदो नियपट्टणाओ विवरीयसिक्खतुरएण। अडवीए पक्खित्तो खुहापिवासाहिं ओसन्नो ॥१॥ पायवतलंमि पडिओ केणावि पुलिंदएण करुणाए। विहिओ पउणसरीरो वरसलिलफलप्पयाणेण ॥२॥ मिलियंमि नियसेन्ने नेइ कयन्नुत्ति तं निवो नयरे। ठावइ वरपा-साए परिहावइ पवरवत्थाइं ॥३॥ वरभोयणपमुहेहिं दिव्वाहारेहिं पीणइ पुलिंदं। अह सो कयाइ सुमरइ नियजम्मभुवं पुलिंदनरो ॥४॥ मुणिऊण इमं रण्णा विसज्जिओ सो गओ नियं अडविं। मिलिओ सयणाण इमेहिं पुच्छिओ कत्थ पत्तो सि ?॥५॥ सो कहइ नरवरेणं नयरे नीओम्हि ते पयंपंति। केरिसयं तं नयरं ? सो जंपइ पल्लितुल्लंति ॥६॥ ते बिंति कत्थ वसिओ ? सो भासइ मणि-मयंमि पासाए। ते बिंति केरिसो सो ? सो साहइ उडवसारिच्छो ॥७॥ ते बिंति किं परिहियं तुमए ? सो भणइ पट्टवत्थाइं। ते बिंति केरिसाइं ? सो साहइ वक्कलसमाइं ॥८॥ ते बिंति किं विभुत्तं ? सो पभणइ मोयगा भणंति इमे। ते केरिसा ? पुलिंदो बुल्लइ ते पक्कबिल्लसमा ॥९॥ इय अडविपसिद्धेहिं दिट्ठंतेहिं अदिट्ठनयराणं। जह सो सयणाण पुरो नयरसरूवं परूवेइ ॥१०॥ तह केवलीहिं सुमुणियसिद्धिसुहेहिंपि अणुवमत्तेणं। तं वुत्तुमसक्कं तहवि किंचि उवमा पसाहेमि ॥११॥ सयलाहिवाहिरहिओ महुरा-

हारेहिं पीणियसरीरो। तरुणो कलासु कुसलो वियड्ढमित्तेहिं परियरिओ ॥१२॥ सुणमाणो संपीणियकण्णं किंनरवयंसरसगेयं। पेच्छंतो बहुविहहावभावरम्मं रमणिनट्टं ॥१३॥ कुसुममयनाहिघणसारचंदणामोयमोइयग्घाणो। कप्पूरपूरपरिगयपगिट्ठतंबोलसुरहिमुहो ॥१४॥ पट्टंसुयपच्छाइयमहल्लपल्लंकहंसतूलिगओ। पेसलपसण्णसन्निहियकामिणीविहियचडुकंमो ॥ १५ ॥ इय अणुकूले विसए सेवंतो जं सुहं इमो लहइ। तं इक्कसिद्धसुक्खस्स होइ नाणंतभागेऽवि ॥ १६ ॥ तथा चार्षं—जह सव्वकामगुणियं पुरिसो भुत्तूण भोयणं कोई। तण्हाछुहाविमुक्को अच्छिज्ज जहा अमियतित्तो ॥१७॥ इय सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा। सासयसव्वाबाहं चिट्ठंति सुही सुहं पत्त ॥१८॥त्ति, तथा निरयेषु भवा नैरयिकाः, ते च नरकावासायुर्देहदुःखादिभिश्चिंत्यंते, तत्र सप्तैता नारकपृथ्व्यः—घम्मा१ वंसा२ सेला३ अंजण४ रिट्ठा५ मघा य६ माघवई ७। पुढवीणं नामाइं रयणाई हुंति गुत्ताइं ॥१॥ रयणपहा१ सक्करपहा२ वालुय३ पंकप्पहा य ४ धूमपहा५। तमपह६ महातमपहा७ गुत्ताइं जहत्थनामाइं ॥२॥ नरकावासास्तु तीस१ पणवीस२ पनरस३ दस४ तिन्नि५ पणूणलक्खं६ पंचेव७। चुलसीइलक्ख निरयावासा घम्माइपुढवीसु ॥ १ ॥ आयुः पुनः—सागरमेगं तिय सत्त दस य सत्तरस तह य बावीसा। तित्तीसं जाव ठिई सत्तसु पुढवीसु उक्कोसा ॥१॥ देहमानं च—सत्त धणु तिन्नि रयणी छच्चेव य अंगुलाइं तणुमाणं। रयणाए उक्कोसं दुगुणादुगुणं तु सेसासु ॥२॥ दुःखमेषां त्रिधा—सत्तसु खित्तसहावा१ अण्णोण्णउदीरिया य जा छट्ठी २। तिसु आइमासु दुवियप्प परमाहंमियसुरकया य ॥३॥ अच्चुण्हं तिसु पढमेसु अइसीयं तिसु परेसु नरएसु। तुरिए सीयं च उण्हं पडिकूला पंचवी विसया ॥४॥ नरएसु उण्हसीएसु कोइ जइ लोहपव्वयं खिवए। तो भूमिमपत्तोऽविहु गलिज्ज फुट्टिज्ज कणसोवि ॥५॥ अण्णोण्णुदीरिएहिं विकियरूवेहिं मुग्गराईहिं। तह टंकमाएइहिं खंडाखंडिं कुणंति तणुं ॥६॥

अंबे१ अंबरिसी चेव२, सामले३ सबले इय४ । रुद्दोवरुद्दकाले य७, महाकालित्ति८ आवरे९ ॥७॥ असिपत्ते१० धणु१० कुंभे ११, वालू१२ वेयरिणी इय१३ । खरस्सरे १४ महाघोसे१५, एए पन्नरसाहिया ॥८॥ परमाहंमियदेवा सुमराविंता उ पुव्वकयदुकयं। तिव्वं कुणंति वियणं नेरइयाणं अताणाणं ॥९॥ उववण्णा घडिजंने पढमं संकडमुहंमि महकाया। कड्ढिज्जंति रसंता सीससलागव्व जंताओ ॥१०॥ कप्पंति कप्पणीहिं चूरंति मुसंढिमुग्गराईहिं । फालंति करकएहिं कागिणिमंसाइं खाविंति ॥ ११ ॥ लोहतउतंबसीसय बलावि पायंति कलकलंताइं । वेयरिणीए मज्जावयंति पूयाइभरियाए ॥१२॥ जोइंति लोहसगडे जलंति समिलाजुए गुरुयभारे । कंटयखुरप्पकक्करसमाउले वालुयापंथे ॥१३॥ अइतत्तलोहतंबयढिउल्लियाहिं बलावि लेसिंति । असिपत्तवणंमि तहा अंगोवंगाइं छिंदंति ॥१४॥ अप्फालिंति सिलाए वत्थं रययव्व ते अहम्मसुरा । भज्जंति भट्ठिमज्झे चणया इव नरयअग्गीए ॥१५॥ किं बहुणा ?—अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव अणुबद्धं । नरए नेरइयाणं अहोनिसिं पच्चमाणाण ॥१६॥मित्यादि, सिद्धानामेषां च शेषवक्तव्यता ग्रंथांतरादवसेया, दिग्मात्रस्यैवात्रोक्तत्वात्, तथेति समुच्चये, यद्—यस्मात् कारणादेवमादीन् पदार्थान्—द्रव्यविशेषानागमेन विजानाति जंतुरिति शेषः, आदिशब्दात्तिर्यङ्मनुष्यपरिग्रहः, तत्र—तिर्यंचस्तु द्विधा ज्ञेयाः, स्थावरत्रसभेदतः । स्थावरा वसुधानीरतेजोवायुमहीरुहाः ॥१॥ मणिरत्नविद्रुमाभ्रहिंगुलहरितालविद्रुमाः खटिका। तुवरीमनःशिलामृल्लवणरसेंद्रोपलोषाश्च ॥२॥ सौवीरांजनकनकादिधातुमुख्या भवंति भूजीवाः। भौमखजकरहरतनुहिममहिकाद्या उदकजीवा ॥३॥ तेजोजीवा ज्वालामुर्मुरशुद्धानलोल्कतडिदाद्याः। उद्भ्रामक उत्कलिकाघनवाताद्याः पवनजीवाः॥४॥ द्विविधाश्च वनस्पतयः प्रत्येकानंतकायभेदाभ्याम्। एकैकदेहभाजः प्रत्येका आम्रनिम्बाद्याः ॥५॥ एकैकस्मिन् देहेऽवस्थानादेहिनो ह्यनंतास्तु। कंदांकुरादिभेदैर्भिन्नाः साधारणाः प्रोक्ताः

॥६॥ लोकासंख्येयततमे भागे स्युर्बादराः पृथिव्याद्याः । प्रत्येकतरुं मुक्त्वा ते सूक्ष्माः सकललोकेऽपि ॥ ७ ॥ एते स्पर्शनयुक्ता एकाक्षाः स्थावराभिधानाश्च । द्वित्रिचतुःपंचाक्षा रसनादियुतास्त्रसा ज्ञेयाः ॥८॥ शंखकपर्दोलसशुक्तिमातृवाहा जलौकसः कृमयः । द्व्यक्षाः पूतरकाद्याः स्पर्शनरसनाजुषः ख्याताः ॥ ९ ॥ यूकामत्कुणमत्कोटकुंथुगुल्मीघृतेलिकालिक्षाः । इलिकोपदेहिकाद्यास्त्र्यक्षा घ्राणेन युक्ताश्च ॥१०॥ लूतापतंगतिड्डाषट्पददंशालिमक्षिकाः कपिलाः । मशकाद्याश्चतुरक्षाश्चक्षुर्युक्ताश्च विज्ञेयाः ॥११॥ तिर्यंचः पंचाक्षा जलभूमिखचारिणः श्रुतियुताश्च । मत्स्याहिगृध्रमुख्या गर्भजसम्मूर्छनजभेदाः ॥१२॥ मनुष्याश्च जंबूद्वीपलवणोदकधातकीखंडद्वीपकालोदाब्धिपुष्करद्वीपार्धेषु कर्म्माकर्म्मभूम्यंतरद्वीपसम्मूर्छनजभेदाच्चतुर्धा, तत्रैताः पंचदश कर्म्मभूमयः—पंच भरतानि पंचैरवतानि पंच विदेहाः, अकर्म्मभूमयस्त्रिंशत्—हैमवतहरिवर्षदेवकुरूत्तरकुरुरम्यकहैरण्यवतानि प्रत्येकं पंच पंच ३०, हिमवच्छिखरिपर्वतांताल्लवणोदधौ पूर्वापरदिग्द्वयविनिर्गतदंतकेषु चतुर्दशचतुर्दशैकोरुकादिद्वीपसद्भावात् षट्पंचाशदंतरद्वीपाः । भरतैरावतेषु सुषमसुषमादिः षड्विधः कालोऽयं—अवसप्पिणीइ छ अरा चउअयरकोडी सुसमसुसमाए । तिन्नि सुसमाइ कालो दुन्नि भवे सुसमदुसमाए ॥१॥ एगा कोडाकोडी बायालीसाइ जा सहस्सेहिं । वासाण होइ ऊणा दूसमसुसमाइ सो कालो ॥७॥ अह दुसमाइ कालो वाससहस्साइ इक्कवीसं तु । अइदूसम एवइया पडिलोमुस्सप्पिणी कालो ॥ ८ ॥ तिदुएगकोसपणधणुसयाइं करसत्तएगतणुमाणं । तिदुइगपलिओवमपुव्वकोडिवरिससयवीसाइं ॥९॥ विदिहेषु पुनः दुष्षमसुषमानुभावः,यदाह—मणुयाण पुव्वकोडी आउं पंचूसिया धणुसयाइं । दूसमसुसमाणुभावं अणुहवंति नरा निययकालं ॥१०॥ हेमवतादिष्वयं—सुसमदूसमसुसमसुसमसुसमा अओ य पडिलोमं । हेमवयाइसु कालो छस्सुवि नियओ मुणेयव्वो ॥ ११ ॥ अंतरद्वीपेषु तु यथा 'अंतरदीवेसु नरा धणुसयअट्ठुसिया सया मुइया ।

पालंति मिहुणभावं पल्लस्स असंखभागाऊ ॥१२॥ स्थापना चात्र द्वादशारकालचक्रस्य । सम्मूर्छनजमनुष्यास्तु प्रज्ञापनाऽऽलापकादवगंतव्याः, स चायं–कहिंणं भंते ! जीवा संमुच्छिममणुस्सा संमुच्छंति ?, गोयमा ! अंतो मणुस्सखेत्ते पणयालीसाइ जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पणरससु कम्मभूमीसु तीसाइ अकम्मभूमीसु छप्पणाइ अंतरदीवेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वन्तेसु वा पित्तेसु वा सुक्केसु वा सुक्कसोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा गामनिद्धमणेसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु संमुच्छिममणुस्सा संमुच्छंति अंगुलअसंखेज्जभागमित्ताए ओगाहणाए अस्सण्णी मिच्छदिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतमुहुत्तआउया चेव कालं करंति"त्ति, एवमागममाहात्म्यमवेत्य किं करोतीत्याह–उज्झित्तेत्यादि,ततश्च–तस्माद्धेतोः सर्वव्यापारमन्यत्र मनोवाकायनिवेशमयमुज्झित्वा तमागमं निशामयति–शृणोतीति ॥

अण्णं च जीवाईणं, कुणइ सद्दहणं तहा । ससंकियाण अत्थाणं, कुज्जा पुच्छं वियक्खणो ॥९३॥

अन्यच्चागममाकर्णयन् जीवादीनां नवपदार्थानां तथेति यथा सूत्रेऽभिहितानां श्रद्धानं–अवितथमेतदिति प्रत्ययरूपं करोति,ते चामी–जिव१ अजिव२ पुण्ण३ पावा४ सव५ संवर६ निज्जरा य७ बंधो य८ । मोक्खो य९ जिणवरुत्ता नव तत्ता तेसिमे भेया ॥१॥ दो चउदस२ वायाला ३ बासीइ४ बियाल ५ सत्तवन्ना य ६ । बारस ७ चउ ८ नव ९ कमसो तत्थ दुहा भवसिवत्थजिया ॥२॥ पढमा इगदुतिचउपणछण्णवचउदसदुतीसविह जीवा । चउसट्ठिविहा य तहिं चेयण्णेणं तु एगविहा ॥ ३ ॥ तसथावरत्ति दुविहा वेएहिं तिविहा गईहिं चउहा उ । पंचविहा करणेहिं काएहिं छव्विहा होंति ॥४॥ भूमीजलजलणानिलवणस्सई थावरा इमे पंच ।

वियतियचउपंचेंदिय तस चउहा नवविहा सव्वे ॥५॥ एगिंदियसुहुमियरा२ सण्णियरपणिंदिया य सवि१ तिर चऊ३ । अपज्जत्ता पज्जत्ता कमेण चउदस जियट्ठाणा॥६॥ सुहमियरभूजलानलपवणाणंतवण१० इयरवण ११ विगला १४ । सण्णिअसण्णिपणिंदी १६ अपजत्तपज्जत्त बत्तीसं ॥७॥ ते मुक्ककिण्हपक्खियभेएहिं अहव भव्वऽभव्वेहिं । चउसट्ठिविहा कम्मप्पगईभेएहिं बहुहा वा॥८॥ देहा१-उ२ गुणु३ वओगा४ मग्गण५ बंधु६ द७ दीरणा८ सत्ता९ । कायट्ठि१० अप्पबहुं११ वोच्छं चउदसविहजिएसु ॥९॥ जोयण-सहस्समाणो देहो चरिमंमि बारसंमि तहा । अहिओ इगिंदिबायरपज्जत्तेसुं च सो नेओ ॥१०॥ बारसजोयण एगं तिकोस दुचउरति-इंदिपज्जत्ते । सेसेसु जीवठाणेसु होइ अंगुलअसंखंसो ॥११॥ दारं १॥ बायर इगिंदिवितिचउरिंदिसु पज्जत्तएसु वरिसाणि । बावीस-सहस बारस उणपन्नदिणाइं छम्मासा ॥१२॥ पल्लस्स असंखंसो असण्णिपज्जत्तएसु परमाउं । तित्तीसउदही सण्णिसु अंतमुहुत्तं च सेसेसु॥१३॥ दारं २। पढमगुणदुगमिगिंदियबायर वितिचउअसण्णिअपज्जत्ते । सन्निअपज्जत्ते संममिच्छसासयणातिन्नि ॥१४॥ चउ-दसवि सण्णिपज्जे सत्तसु सेसेसु होइ मिच्छत्तं । दारं ३ । अट्ठसु उवओगतियं अचक्खुदंसणअनाणदुगं॥१५॥ चक्खुजुया ते चउसुं मण-केवलदुग विणा उ तेरसमे । चरिमे बारसवि दारं ४। अओ मग्गणठाणाणि वोच्छामि ॥१६॥ गइ४ इंदिए य५ काए६ जोगे३ वेए३ कसाय४ नाणे य८ । संजम७ दंसण४ लेसा६ भव२ संमे६ सन्नि२ आहारे२ ॥१७॥ तत्र—अपज्जत्तअसंनिंमि मणुयगई होइ तह य तिरियगई । चउगइ दुविहे संनिंमि हुंति सेसेसु तिरियगई॥१८॥ दारं १ । पढमा चउ एगिंदी दो दो वितिचउर सेसपंचिंदी। दारं २। पढमा चउरो थावरकाए सेसा उ तसकाए ॥१९॥ दारं ३ । चरिमे तिन्निवि जोगा पज्जत्तेसुं इगिंदिवज्जेसु । सन्निंमि य अपज्जत्ते तणुवय सेसेसु तणुजोगो ॥२०॥ दारं ४ । चरिमेसु दोसु तिन्निवि वेया उ नपुंसगो तहऽन्नेसु । दारं ५ । चउतिदुइगअकसाया

चरिमे सेसेसु चउरोऽवि ॥२१॥ दारं ६ । चरिमे अट्ठवि नाणा मणवज्जवकेवलेहिं रहिया उ । संनिंमि य पज्जत्ते सेसेसुं मइसुयअ-नाणा ॥२२॥ दारं ७ । सामाइयछेयपरिहारसुहुमअहक्खायदेसजयअजया । चरिमे सत्तवि एगो सेसेसु असंजमोऽविरई ॥२३॥ दारं ८ । अमणचउरिंदि दुविहे अचक्खु चक्खू य सन्निअपजत्ते । ओहिज़ुया चउ चरमे सेसेसु अचक्खुदंसणयं ॥२४॥ दारं ९ । चउपढमलेस बायरअपज्जत्ते छावि दुविहसन्नीसु । सेसेसु तिन्नि पढमा । दारं १० । भव्व अभव्वा य सव्वेसु ॥२५॥ दारं ११ । खउव-समखइयउवसमियमिस्ससासाणमिच्छ चरिमंमि । उवसमियमिस्सवज्जा सन्नि अपज्जत्तए चउरो ॥२६॥ सासणमिच्छाणि उ बायराइ अपज्जत्तएसु पंचसुवि । सेसेसु उ मिच्छत्तं दारं १२ । सन्नी दुविहोवि संनिंमि॥२७॥ सेसा असण्णिजीवा दारं १३ । आहारऽणहार संनिपज्जत्ता । तह सव्वे अपजत्ता सेसा आहारगा जीवा॥२८॥ दारं १४ । मूलदारं ५ । सत्तट्ठ अट्ठ सत्तट्ठ अट्ठ बंधुदउदीरणासत्ता । तेरससु जीवठाणेसु सन्निपज्जत्तए य इमं ॥२९॥ अडसत्तछएगअबंधगो य अडसत्तचउविहो उदओ । अडसगछप्पणदुन्नेवोदीरण अट्ठ सत्त चउसत्ता ॥३०॥ सत्तविहबंधगो सय अट्ठविहो आउबंधकालंमि । अप्पुव्वाइसु मिस्से न आउबंधुत्ति वा सत्त॥३१॥ सुहुमे न मोहबंधोत्ति छव्विहो तदुवरिं तु एगविहो । वेयणियबंधगस्स उ अबंधगो होइ हु अजोगी ॥३२॥ दारं ६ । सयउदओ अट्ठविहो सत्तविहो खीणमोहउवसंते । उदओ चउव्विहो खलु घाइखए जोगऽजोगीसु ॥३३॥ दारं ७ । अद्धावलियासेसे आउंमि न तं उदीरयंतंमि । सत्तविहो अन्नत्थ उ अठविहा तह य मिस्संमि ॥ ३४ ॥ अपमत्ताइसु छविहा अणुदीरंतस्स वेयणीयाऊ । पंचविहा सुहुमाइसु मोहाउयवेयणीय विणा ॥ ३५ ॥ दुविहा खीणसजोगिसु नामं गोयं उदीरयंतंमि । अणुदीरगो अजोगी सन्नीपज्जत्तओ नेओ॥३६॥ दार ८ । कम्मट्ठयस्स सत्ता जाव उ उवसंतमोहगुणठाणं । सत्तण्ह खीणमोहे सजोगजोगीण उ चउण्हं ॥३७॥ दारं ९ ।

कायठिई सुहुमेसुं उस्सप्पिणीउ असंखलोगसमा । अंगुलअसंखभागप्पमिया पुण बायरे ताओ ॥३८॥ संखसमसहस विगले संखिज्ज-
भवा पणिंदिपज्जत्ते । सत्तसुवि अपज्जत्तेसु होइ अंतोमुहुत्तं तु ॥३९॥ दारं१० । जिवट्ठाणमसंखासंखगुणं चरिमदुवालसं कमसो ।
दसमं संखगुणं तो छट्ठट्ठमगा विसेसहिया ॥४०॥ एगारसं असंखं नवसत्तगपंचमा विसेसहिया । तुरियमणंतमसंखं तइयाइमसं-
खगुण वीयं ॥४१॥ दारं ११ । (प्रत्यन्तरे—चउदसमं जियठाणं असंखजीवप्पमाणयं तत्तो । तेरसमं बारसमं कमसो अस्संखगुण-
माणं ॥४०॥ दसमं संखगुणं तो अहियं छट्ठं च अट्ठमं च कमा । इगदसममसंखगुणं तो जिण्णि इमे कमेणऽहिया ॥४१॥ नवमं
च सत्तमं पंचमं च तुरियं तओ अणंतगुणं । अस्संखगुणा तइयाइमा कमा संखगुणवीयं ॥४२॥) वुत्ता इय—किंचि भवत्था जीवा मुत्ता
मुत्ता उ भवप्पबंधेण । मुत्ताणंतचउक्कगजुत्ता तेऽमी पुरा वुत्ता ॥४२॥ जीवतत्त्वं ॥ तेसिं मेया लक्खणसंठाणपमाणअप्पबहु वुच्छं । भेया
तियतिगतिगइगचउरत्ति अजीवचउदसगं॥४३॥ धम्मत्थिकाय दव्वं१ तस्स य भागो विवक्खिओ देसो २ । अविभागो अ पएसो३
एवमधम्मे३ नभेऽवि तियं३ ॥४४॥ कालो एगविहोच्चिय१ भावपरावत्तिहेउ निच्छइओ । ववहारिओ उ रविगइगंमो समयाइऽणेग-
विहो ॥४५॥ पुग्गल चउरो खंधो१ देस२ पएसा३ तहेव परमाणू४ । केवलअणुओ सुहुमो दुफासइगवण्णगंधरसो ॥४६॥ दारं १ ।
गइलक्खणो य धम्मो पुग्गलजीवाण गतिपरिणयाणं । गमणोवग्गहहेऊ जलयरजीवाण सलिलंब ॥४७॥ ठिइलक्खणो अहम्मो
पुग्गलजीवाण ठिइपरिणयाणं । ठाणोवग्गहहेऊ पहियाण व वहलतरुछाया ॥४८॥ अपइट्ठं सव्वगयं अवगासपयं च होइ आगासं ।
भावपरवत्तिलक्खणमद्धादव्वं तु नेयव्वं ॥४९॥ उवचयअवचयआयाणमुक्खरसगंधवण्णमाईयं । छायायवतममाई लक्खणं पुग्ग-
लाणं तु ॥५०॥ दार २ । धम्माधम्मालोगागिई उ कालो उ वत्तणारूवो । नियसंठाणविमुक्को उवयारा दव्वपज्जाओ ॥५१॥ सब्बु-

सिरवडुलगोलगसरिसागारो अलोगआगासो । लोगो वेसाहट्ठियकडित्थकरजुगनरसरित्थो ॥ ५२ ॥ अच्चित्तमहाखंधो लोगसमाणो य अट्ठसमइओ । पुग्गल पेगागारा संखमसंखट्ठिई सेसा ॥५३॥ दा. ३ । एगजियपएससमो धम्मोऽधम्मो य लोगआगासो । कालद्दव्वं एगं अणंतया पुग्गल अलोगा॥५४॥ दारं ४। थोवो कालो लोगो धम्मोऽधम्मो असंख तिन्नि समा । दुन्नि अणंता पुग्गल अलोगखपएसया कमसो ॥५५॥ दारं ५। अजीवतत्त्वं २। सुहहेउ कम्मपगई पुण्णं दुहहेउ वुच्चई पावं। बायालीसं बासीइ तेर्सि भेया इमे कमसो ॥५६॥ तिरियाउ१ साय२ मुच्चं३ तित्थयर४ पणिंदिजाइ ५ तसदसगं ६। सुखगइ१६ सुवण्णचउगं २० आइम-संघयण २१ संठाणं २२ ॥५७॥ निमिणा२३ यव२४ नर२७ सुरतिग२९ परघा३१ उस्सास ३२ गुरुलहु३३ जोयं३४ । पणतणु ३९ वंगतिय४२ मिइ बायालं पुण्णपगईओ॥५८॥ पुण्यतत्त्वं३ । थावरदस१० निरयतिगं१३ सेससंघयण१८ जाइ२२ संठाणा २७। तिरिदुगु२९ वघाय३० कुखगइ३१ वण्णचउक्कं च अपसत्थं३५ ॥५९॥ नाणंतरायदसगं४२ नव बीए५४ नीयगोय५५ मस्सायं ५६ । मिच्छं५७ कसायपणवीस८२ पावपगईउ बासीई ॥६०॥ पापतत्त्वं४। भवभमणहेउ कम्मं जीवो अणुसमयमासवइ जेहिं। सो आसवोत्ति तस्स उ बायालीसं भवे भेया ॥६१॥ इंदिय५ अव्वय५ जोगा३ कसाय४ किरियाउ२५ तेसिमे भेया। कमसो पंच य पंच य तिन्नि य चउरो य पणवीसं ॥६२॥ सोयं चक्खू घाणं रसणा फरिसत्ति इंदिया पंच। तह अव्वय जियवहमोसदिण्णमेहु-ण्णपरिगहया ॥६३॥ मणवयतणुजोगतियं अपसत्थं तह कसाय चत्तारि। कोहो माणो माया लोभो किरियाउ अह वोच्छं ॥६४॥ काइय१ अहिगरणीया२ पाउसिया३ पारितावणी किरिया४ । पाणाइवाय५ रंभिय६ परिगहिया७ मायवत्ती य८॥६५॥ मिच्छादंसण-वत्ती९ अप्पच्चक्खाणा१० य दिट्ठि११ पुट्ठी य१२। पाडुच्चिय१३ सामंतोवणीय १४ नेसत्थि १५ साहत्थी १६ ॥६६॥ आणवणि

१७ वियारणिया१८ अणभोग१९ अणवकंखपच्चइया२० । अण्णप्पआग२१ रामुदाण२२ पिज्ज२३ दोसे२४ रियावहिया२५ ॥६७॥ एतासामर्थलेशोऽयं-कायेन परसत्केन निर्वृत्ता कायिकी क्रिया१ संयुक्ताधिकरणतया अधिकरणिकी२ जीवाजीवयोः प्रद्वेपेण प्राद्वेषिकी३ स्वपरयोः परितापनेन परितापनिकी प्राणातिपातेन प्राणातिपातिकी कृष्याद्यारंभेणारंभिकी धान्यादिपरिग्रहेण परिग्रहिकी मायया-परवंचनेन मायाप्रत्ययिकी जिनाज्ञोल्लंघनेन मिथ्यादर्शनमत्ययिकी अविरत्या अप्रत्याख्यानिकी कौतुकनिरीक्षणेन दृष्टिकी गवादीनां हस्तस्पर्शनेन स्पृष्टिकी बाह्यं वस्तु प्रतीत्य तदनुसारेण यत्क्रियते सा प्रतीत्यकी(५०००) लोकमेलापकस्य समंतादुपरि पातो यस्यां सा सामंतोपनिपातिकी राजाद्यादेशात् नितरां यंत्रशस्त्राद्याकर्षणेन नैःशस्त्रिकी, स्वहस्तेन जीवं धृत्वाऽन्येन घात्यते सा स्वहस्तिकी जीवाजीवानामानयनेनानयनिकी जीवाजीवानां विदारणेन वैदारिणिकी विस्मृत्या अनाभोगिकी इहपरलोकविरुद्धसमाचरणेना-नवकांक्षाप्रत्ययिकी कुलालादेर्घटादिनिर्मापणेनान्यप्रायोगिकी समुदायाद् गृहादिकरणेन सामुदानिकी प्रेमिकीद्वैपिक्यौ व्यक्ते ईर्या-पथेनाकपायिणां केवलयोगजकर्म्मबंधेन ऐर्यापथिकी२५, आश्रवतत्त्वं । पिहियदुवारे गेहे सोएण पविसइ जहा न रेणुजलं । तह पिहियासवदारे न विसइ जीवेऽवि पावमलं ॥६८॥ तो असुहासवनिग्गहहेऊ इह संवरो विणिद्दिट्ठो । सो पुण भेगविहोऽविहु इह भणिओ सत्तवण्णविहो ॥६९॥ तत्थ परीसह२२ समिई५ गुत्ती३ भावण१२ चरित्तधम्मेहिं १० । बावीसपणतिबारसपणदसभेएहिं जहसंखं ॥७०॥ खुहा१ पिवासा२ सी३ उण्हं४, दंसा५ चेला६ रइ७ त्थीओ ८ । चरिया ९ निसीहिया१० सेज्जा११,अक्कोस १२ वह१३ जायणा१४ ॥७१॥ अलाभ१५ रोग१६ तणफासा१७, मल१८ सक्कार१९ परीसहा । पन्ना२० अन्नाण२१ सम्मत्तं२२,इय बावीस परीसहा ॥७२॥ इरिया१ भासा२ एसण३ आयाणु४ स्सग्ग५ पंच समिईओ । मणगुत्ती वयगुत्ती तणुगुत्ती गुत्तितियमेयं

॥७३॥ भाविज्ज भावणाओ बारस ताओ अणिच्च१ असरणया २ । चउगइभवस्सरूवं३ एगत्त४ ऽण्णत्त५ असुइत्तं६॥७४॥ आसव७-
संवर८ निज्जर९ लोगसरूवाणि१० सुदेसियत्तं च । धम्मे जिणाण११ अइदुल्लहं च सम्मत्तवररयणं१२ ॥७५॥ सामाइयं च१ छेओ-
वट्ठावणियं च२ सुद्धपरिहारं३ । तह सुहुमसंपरायं४ अहखायं पंचम चरित्तं५ ॥७६॥ खंती१ य मद्दव२ ऽज्जव३ मुत्ती४ तव५ संजमे
य६ बोद्धव्वे ६ । सच्चं७ सोयं८ आकिंचणं च९ बंभं च१० जइधम्मो ॥७७॥ संवरतत्त्वं ६ । पुव्वनिबद्धं कम्मं महातवेणं सरंमि
सलिलं व । निज्जरइ जेण जिए बारसहा निज्जरा सा उ ॥७८॥ अणसण १ मूणोयरिया२ वित्तिसंखेवणं३ रसच्चाओ ४ । कायकि-
लेसो५ संलीणया उ६ बज्झो तवो होइ ॥७९॥ पायच्छित्तं१ विणओ२ वेयावच्चं३ तहेव सज्झाओ ४ । झाणं५ उस्सग्गोऽविय६
अब्भिंतरओ तवो होइ॥८०॥ निर्जरातत्त्वं ७। जह तप्पियस्स बंधो रएण पंसुट्ठियस्स होइ दढं । तह रागदोसजुत्तस्स कंमुणा होइ तं
चउहा॥८१॥ पुट्ठं बद्ध निधत्तं निकाइयं चेइ चउव्विहो बंधो । पयइट्ठिइअणुभागप्पएसमेएहिं वा चउहा॥८२॥ बंधतत्त्वं ८। जह कंच-
णोबलाणं अणाइसंजोगसंभुयाणंपि । पच्चलवण्हिपओगा अच्चंत भविज्ज हु विजोगो ॥८३॥ तह जियकम्माणंपि हु वरसुक्कज्झाणहु-
यवहवसेण । जो अच्चंतविओगो सो मुक्खो नवविहो सो उ ॥८४॥ संतपयपरूवणया १ दव्वपमाणं च२ खेत्त३ फुसणा य ४।
कालो य५ अंतरं६ भाग७ भाव८ अप्पाबहुं९ चेव ॥८५॥ संतं सुद्धपयत्ता विज्जंतं खकुसुमं व न असंतं। मोक्खत्ति पयं तस्स उ
परूवणा मग्गणाईहिं ॥८६॥ नरगइपणिंदितसभव्वसंनिअहक्खायखइयसंमत्ते । मोक्खोऽणाहारकेवलदंसणनाणे न सेसेसु ॥८७॥
दारं १ । दव्वपमाणे सिद्धाण जीवदव्वाणि हुंति णंताणि२। लोगस्स असंखंसे एगो सव्वेऽवि खित्तंमि३॥८८॥ फुसणा अहिया४
कालो इगसिद्धमविक्खं साइओऽणंतो ५ । पडिवायाभावाओ सिद्धाणं अंतरं नत्थि ६ ॥८९॥ सव्वजियाणमणंते भामे ७ ते तेसि

दंसणं नाणं। खइए भावे परिणामिए य पुण होइ जीयत्तं८ ॥९०॥ थोवा नपुंससिद्धा थीनरसिद्धा कमेण संखगुणा९। इय मुक्ख-तत्तमेयं नव तत्ता लेसओ वुत्ता ॥९१॥ इति नव तत्त्वानि ९ ॥ एतानि चेत्याकर्ण्य श्रद्दधतोऽपि चेत्कथंचित्कुत्रचिच्छंका स्यात्ततः किं विधेयमित्याह–सशंकितानामर्थानां कुर्यात् पृच्छां विचक्षणो–विचारविधिनिपुण इति ॥ तामेवाह—

संमं वियारियव्वं अत्थपयं भावणापहाणेहिं। विसए य ठावियव्वं बहुसुयगुरुणो सगासाओ ॥९४॥

संमंति–सम्यक् 'सुत्तत्थो खलु पढमो' इत्याद्यागमोक्तप्रकारेण, यद्वा पदवाक्यमहावाक्यभावार्थैः, तत्र न हिंस्यात् सर्वभूतानि मनोवाक्कायैरिति सामान्योपदेशपरः पदार्थः१ एवं च सामान्योक्तौ सत्यां जिनभवनविधापनलोचकरणाद्यभावप्रसंगः, तत्र ह्यारंभादिना हिंसासद्भावादित्येवं चालनारूपो वाक्यार्थः२ अविधिविधिकरणभावेन हिंसाऽहिंसासद्भावतो महावाक्यार्थः,चालितस्यार्थस्य समाधानदानरूपो महावाक्यार्थः,इह सर्वत्र भगवदुक्ताज्ञैव साध्या नापरं किंचिदित्येवंलक्षणमैदंपर्यं भावार्थः, तैर्विचारयितव्यं, किमित्याह–अर्थपदं–सशंकितसूत्रार्थपदं, भावनाप्रधानैः–पूर्वापरसूत्रार्थसंबंधाविस्मृतिप्रधानैः, न तु सूत्रबहुविधमात्रदर्शनान्मूढचित्तैः, मूढो हि स्वपरयोरसद्ग्रहमेव विधत्ते, उक्तं च–"विहि १ उज्जम२ वण्णय३ भय४ उस्सग्ग ५ववाय ६ तदुभयगयाइं ७। सुत्ताइं बहुविहाइं समये गंभीरभावाइं ॥१॥ तेसिं विसयविभागं अमुणंतो नाणवरणकंमुदया। मुज्झइ जीवो तत्तो सपरेसिमसग्गहं जणइ ॥२॥त्ति, अतः परस्पराविरोधेन द्रव्यक्षेत्रकालभावानपेक्ष्य स्याद्वादमुद्रामनुल्लंघयद्भिर्विचार्यं तत् सशंकितादिपदं,विषये च–विध्यादिसूत्रगोचरे यत्रानुपतति तत्र स्थापयितव्यं, कस्मादित्याह–बहु–प्रभूतमंगोपांगच्छेदग्रंथादिभेदभिन्नं स्वसमयपरसमयवक्तव्यतानुगतं स्यादस्ति स्यान्नास्तीत्यादिसप्तभंगिकानैपुण्योपेतं नैगमादिसप्तमूलनयनिश्चयव्यवहारद्रव्यास्तिकपर्यायास्तिकज्ञानचरणनया-

ध्यनेकविचारचातुर्ययुक्तमनेकांतवादात्मकं सूत्रार्थोभयरूपं श्रुतं-अर्हत्प्रवचन यस्य स बहुश्रुतः स चासौ गुरुश्च स तथा तस्य सकाशात्, तस्य च धर्म्मकथनार्हत्वात्, तथा चागमः-"भवसयसहस्समहणो विबोहओ भवियपुंडरीयाणं। धम्मो जिणपन्नत्तो पकप्पजइणा कहेयव्वो ॥१॥" संशयानुच्छेदे दूषणमाह—

**संसया जायए मिच्छं, मिच्छत्ताओ भवो भवे। भवोदहिंमि पत्ताणं, जीवाणं दुहसायरो ॥९५॥**

संशयात्-तत्त्वसंदेहलक्षणाद् जायते-भवति मिथ्यात्वं प्रथमगुणस्थाननिवर्त्तितत्त्वं, संशयो हि तत्त्वजिज्ञासानिरपेक्षो विपर्ययादिसमकक्षाजनकत्वान्मिथ्यात्वमेव, यदाह-"अभिग्गहियमणाभिग्गहं च तह अभिनिवेसियं चेव। संसइयमणाभोगं मिच्छत्तं पंचहा होइ ॥१॥"त्ति, मिथ्यात्वाच्च भवो-नारकतिर्यग्नरामरभवानुभवरूपः संसारो भवेद्, भवोदधौ च प्राप्तानां जीवानां दुःखसागरो-जन्मजरामरणादिक्लेशसमुद्रः स्यादिति ॥ उपसंजिहीर्षुराह—

**तम्हा उ नायतत्तेणं, सुत्तं अत्थं अहिज्जिउं। निस्संकिएण होयव्वं, अंबडो अभओ जहा ॥९६॥**

यस्मादेवं संदेहे दोषसंदोहस्तस्मात् स्थितमेतत्-ज्ञाततत्त्वेन सदुपायप्रवृत्तत्वाद्विदितपरमार्थेन सूत्रमर्थं चाधीत्य निःशंकितेन भवितव्यं, अंबडोऽभयश्च यथाऽभूदित्यक्षरार्थो, भावार्थस्तु कथाभ्यामवसेयः, तत्रेयमंबडकथा—

एकदा श्रीमहावीरो, विहरन् सपरिच्छदः। सुरासुरनरैः सेव्यो, ययौ चंपामहापुरीम् ॥१॥ पूर्णभद्राभिधे तत्र, चैत्येऽथ समवासरत्। तं वंदितुं पुरीलोकः, सर्वर्द्ध्याऽपि समागमत् ॥२॥ इतश्च स्वामिपादारविंदोपास्तिकृदाययौ। छत्री त्रिदंडभृत्तत्र, परिव्राडंबडाभिधः॥३॥ स त्रिः प्रदक्षिणीकृत्य,प्रणत्य च जिनेश्वरम्। रोमांचितवपुर्भक्त्या,रचितांजलिरस्तवीत्॥४॥"कृतार्थोऽपि जगन्नाथ!,

यत्त्वं विहरसे महीम्। तत् परस्योपकाराय, महतां हि प्रवृत्तयः ॥५॥ कपायतापतप्तानामतिगोशीर्षचंदना। वाणी जयति ते नाथ!, विश्वविश्वाभयप्रद! ॥६॥ आसर्वसंवरात् सार्वजनीनं मानसं तव। अनुत्तरसुराणां हि, संशयच्छिदुरं यतः ॥७॥ देव! त्वत्केवलज्ञानमहिमा नीयते कथम्?। त्रिलोकी यत्र संक्रांता, दर्प्पणे प्रतिबिंबवत् ॥ ८ ॥ भूरिभीमभवांभोधौ, मज्जतां जगतामिह। निश्छिद्रा शुभकाष्ठा च, त्वदाज्ञैव हि नान्यते ॥९॥ महामोहमहाकुंभिकुंभनिर्भेदकर्म्मणि। त्वत्पादपंकजोपास्या, नाथ! कंठीरवायते ॥१०॥ अतिकामगवीचिंतारत्नकल्पद्रुमो भव। नाथ! नाथामि किं यत्त्वमचिंत्यफलदायकः ॥११॥ तथापि जगदानंद!, विधेहि विहितादरम्। स्वपादकमले लीनं, भृंगवन्मानसं मम ॥१२॥" एवं जगद्गुरुं स्तुत्वा, यथास्थानं निपद्य च। देशनां स्वामिनोऽश्रौषीत्, स्वर्वासीवानिमेषदृक् ॥१३॥ देशनांते जिनं नत्वा, प्राचालीद् यावदंबडः। गंतुं राजगृहं तावदित्यूचे श्रीमदर्हता ॥ १४ ॥ नागस्य रथिनः पत्न्यास्तत्तद्धर्म्मप्रवृत्तिकाम्। सुलसाया मदादेशात्, पृच्छेस्त्वं हृद्यया गिरा ॥१५॥ इच्छामीत्यभिधायागात्तत्रासौ गगनाध्वना। दध्यौ चेति सुधीः स्थित्वा, सुलसाया गृहाद् बहिः ॥१६॥ जितांतरारिः श्रीवीरः, ससुरासुरपर्षदि। जग्राह सुलसानाम, परीक्षिष्ये ततस्तकाम् ॥१७॥ ततो वैक्रियलब्ध्या स, कृत्वा रूपांतरं गृहे। सुलसायाः प्रविश्योचे, भिक्षां मे देहि भक्तितः ॥१८॥ साधुभ्यः शीलशालिभ्यो, भक्त्या भिक्षां ददाम्यहम्। अन्येभ्यस्तु कृपौचित्यादित्यूचे सुलसाऽपि तन्॥१९॥ ततोऽसौ सुलसागेहान्, निःसृत्य नगराद् बहिः। विचक्रे ब्रह्मणो रूपं, प्राच्यां विद्याबलान्वितः॥२०॥ पद्मस्थो हंसयानश्च, जटी ब्रह्माक्षसूत्रभृत्। चतुर्भुजश्चतुर्वक्त्रः, सावित्रीसंयुतश्च सः ॥२१॥ धर्म्मं दिदेश पौराणां, साक्षात् ब्रह्मेति मानिनाम्। सुलसा तत्र नायासीदाहूताऽपि सखीजनैः ॥ २२ ॥ दक्षिणस्यां द्वितीयेऽह्नि, लक्ष्मीयुग् गरुडासनः। शंखचक्रगदासारस्तस्थौ विष्णुत्वरूपभृत् ॥ २३ ॥

विष्णुप्रवादतोऽप्येषा, मूढलोकैः प्रणोदिता । नाययौ सुलसा तत्र, सम्यक् सम्यक्त्वलालसा ॥२४॥ तृतीये त्वपरस्यां स, मस्तांगो वृषवाहनः । पिनाकशूलखट्वांगरुंडमालाकपालभृत् ॥२५॥ त्रिदृक्केंदुः सगौरीकः, कृत्तिवासा गणान्वितः । हरो भूत्वाऽदिशद्धर्ममेषा तत्रापि नागमत् ॥२६॥ उदीच्यां तु चतुर्थेऽह्नि,तीर्थनाथ इवाथ सः । स्थित्वा समवसृत्यंतराचख्यौ धर्ममार्हतम्॥२७॥ तत्राप्यनागतां तां तु, ज्ञात्वाऽऽह्वातुमसौ ततः । प्रैषीत् कंचिन्नरं सोऽपि, गत्वा तामित्युवाच च ॥२८॥ सद्धर्मानलसे! भद्रे, सुलसे विश्वविश्रुतः । जिनेशः समवासार्षीद्, बहिर्धर्म्मं दिदेश च ॥२९॥ तदेहि देहिनां भाग्यैः, प्राप्यमेतत्पदद्वयम् । वंदितुं त्रिजगद्वंद्यं, किमेवं त्वं विलम्बसे ? ॥३०॥ साऽब्रवीत्तं न खल्वेष, जगद्वित्तो जिनेश्वरः। चतुर्विंशो जिनः किंतु, श्रीवीरो विश्वविश्रुतः ॥३१॥ प्रत्यूचे सुलसां सोऽपि, मुग्धे ! मुह्यसि किं मुधा ? । प्रत्यक्षमीक्ष्यतामेष, पंचविंशो जिनेश्वरः ॥३२॥ कदाचित् पंचविंशोऽर्हन्नैव स्यादिति साऽभ्यधात् । अयं धूर्त्ताधिपः कोऽपि, मुग्धं गर्हयते जनम् ॥३३॥ बभाषे पुरुषः सोऽथ, मेदं तीर्थस्य मा कृथाः । एहि प्रभावनां धेहि, देहि वा मम निर्णयम् ॥३४॥ साऽप्यूचे कैतवैरेवं, न कदापि प्रभावना । किंत्वपभ्राजनैव स्यात्,तन्नैष्यामि कथंचन ॥३५॥ निष्प्रकंपामिति प्रेक्ष्य, सुलसामंबडोऽथ सः । निरस्तसंशयश्चैवं, चिंतयामास चेतसि ॥ ३६ ॥ सर्वज्ञः सुलसां सुष्ठु, सभायामुद्भावयत् । बह्वीभिरपि मायाभिः, सम्यक्त्वादचलन्न या ॥३७॥ ततः सर्वं स संहृत्य, प्रपंचं श्रावकाग्रणीः । प्राविशत् सुलसागेहे, वदन्नैषेधिकीमिति ॥३८॥ ससंभ्रममथोत्थाय, सा प्रोचे स्वागतं तव ? । धर्मबंधो ! यतोऽसि त्वं, जगद्बंधोर्हुपासकः ॥३९॥ पादौ प्रक्षालयामास, तस्य पाद्येन वारिणा । स्वीयानि गृहचैत्यानि, वंदयामास साऽऽदरात्॥४०॥ वंदित्वा तानि सोऽप्याख्यत्त्वं वंदस्व गिरा मम । नित्यानित्यानि चैत्यानि, ववंदे तानि सा मुदा ॥४१॥ सोऽभ्यधात् सुलसां भूयस्त्वं धन्या पुण्यवत्यसि।

यत्ते वार्त्ता जगन्नाथो, मन्मुखेनाद्य पृष्टवान् ॥४२॥ तद्वचः सुलसा श्रुत्वा, भूतलन्यस्तमस्तका। ववंदे मुदिता वीरं, प्रत्यक्षमिव भक्तिभाक् ॥४३॥ स भूयस्तामुवाचैवं भद्रे! ब्रह्मादयः स्वयम्। अत्रावतीर्य ते प्रोचुः, पौराणां धर्म्ममादृताः॥४४॥ सकर्णा श्रोतुमुत्कर्णा, तमाकर्णयितुं ततः। तत्र त्वं कौतुकेनापि, किं नायाः? सुलसे! वद ॥४५॥ सस्मिता साह साऽप्येवमज्ञवत्त्वं विदन्नपि। किं वावदीपि मामेवं?, केऽमी ब्रह्मादयो यतः? ॥४६॥ सायुधा सवधूकाश्च, रागद्वेषांकितास्ततः। कथं ते कथयिष्यंति, धर्म्मं मोहैकमोहिताः? ॥४७। वीतरागं गतद्वेषं, सर्वज्ञं त्रिजद्गुरुम्। वीक्ष्य वीरं ततश्चान्यान्, द्रष्टुमप्युत्सहेत कः? ॥४८॥ दृष्ट्वैवं सुलसास्थैर्यं, तुष्टोऽत्यर्थमथांबडः। स्ववृत्तांतं निवेद्योच्चैर्वर्णयामास तां मुहुः ॥४९॥ एवं ध्वस्तसमस्तसंशयरयः कालेन मृत्वाऽम्बडः, स्वर्गे पंचममीयिवान् शुभमनाः सेत्स्यत्यथातश्च्युतः। स्वः प्राप्ता सुलसाऽनुभूय च सुखं तत्र क्रमेण च्युता, भावी पंचदशो जिनेश्वरवरस्त्रैलोक्यवंद्यक्रमः ॥५०॥ इत्यंबडकथा॥ अभयस्य तु 'कश्चरमो राजर्षि'रित्यादि प्रच्छनं यथाऽभूत्तथा श्रेणिकचरिते प्रागुक्तमिति॥

श्रवणद्वार एव चैत्योद्धारचिंतादिकृत्यं द्विसूत्र्याऽऽह—

निसामित्ता य सिद्धंतं, तओ किचं निरूवए। एयं च एत्थ कायव्वं, एयं च धरियव्वयं ॥९७॥
तं तु सव्वं निरूवित्ता, करे जं करणिज्जयं। सओ य परओ चेव, कायव्वं जिनमंदिरे ॥९८॥

निशम्य च सिद्धांतं ततः कृत्यं—प्रस्तावाच्चैत्यसंबंधि कार्यं निरूपयति—चिंतयति, तदेवाह—एतच्चात्र मुखमंडपाद्यविद्यमानं कर्त्तव्यं, एतत्—प्रेक्षामंडपादि सदपि जीर्णत्वादुद्धर्त्तव्यमिति ॥ तत्तु सर्वं निरूप्य—सम्यग् विचिंत्य कुर्यात् यत्करणीयं, यतः स्वतश्च शक्तौ सत्यामात्मनैव, तदभावे परतश्चैव परसाहाय्येनापि कर्त्तव्यमेव जिनमंदिरे, जीर्णोद्धारादि इति गम्यमिति सूत्रद्वयार्थः॥ एतदेव गार्ह-

स्थ्यस्य सारं, तथा चाह—

तं नाणं तं च विन्नाणं, तं कलासु य कोसलं। सा बुद्धी पोरिसं तं च, देवकज्जेण जं वए ॥९९॥

तदेव ज्ञानं-शास्त्रार्थपरिज्ञानं, सारमिति गम्यते, तदेव च विज्ञानं-क्रियासु दक्षत्वं,तदेव कलासु च-वास्तुविद्यादिषु कौशलं-निष्णातत्वं, बुद्धिः-आयतिदर्शिता, तदेव च पौरुषं-शौंडीर्यं शारीरार्थसामर्थ्यमित्यर्थः,यत्किमित्याह-देवकार्येण-चैत्यादिप्रयोजनेन यत् ज्ञानादि व्रजति-उपयोगतामेतीति ॥ अधुना जीर्णोद्धारकरणे फलदर्शिकां दशसूत्रीमाह—

जिणभवणाइं जे उद्धरंति भत्तीइ सडियपडियाइं। ते उद्धरंति अप्पं भीमाओ भवसमुद्दाओ ॥१००॥
अप्पा उद्धरिउच्चिय उद्धरिओ तहय तेहिं नियवंसो। अन्ने य भव्वसत्ता अणुमोदंता उ जिणभवणं ॥१०१॥
खवियं नीयागोयं उच्चागोयं च बंधियं तेहिं। कुगइपहो निट्ठविओ सुगइपहो अज्जिओ य तहा ॥१०२॥
इहलोगंमि सुकित्ती सुपुरिसमग्गो य देसिओ होइ। अन्नेसिं सत्ताणं जिणभवणं उद्धरंतेहिं ॥१०३॥
सिज्झंति केइ तेणवि भवेण इंदत्तणं च पावंति। इंदसमा केइ पुणो सुरसुक्खं अणुभवेऊणं ॥१०४॥
मणुयत्ते संपत्ता इक्खागुकुलेसु तह य हरिवंसे। सेणावई अमच्चा इब्भसुया तेण जायंति ॥१०५॥
कलाकलावे कुसला कुलीणा,सयाऽणुकूला सरला सुसीला। सदेवमच्चासुरसुंदरीणं,आणंदयारी मणलोयणाणं॥
चंदोव्व सोम्मयाए, सूरो वा तेयवंतया। रइनाहोव्व रूवेणं भरहो वा जणइट्ठया ॥१०७॥
कप्पदुमोव्व चिंतामणिव्व चक्की य वासुदेवा य। पूइज्जंति जणेणं जिण्णुद्धारस्स कत्तारो ॥१०८॥

भोत्तूण वरे भोए काऊणं संजमं च अकलंकं । खविऊण कम्मरासिं सिद्धिपयं झत्ति पाविंति ॥१०९॥

जिनभवनादि ये उद्धरंति–समारचयंति भक्त्या–बहुमानेन, न तु कीर्त्यादिलिप्सया, शटितानि–जीर्णानि पतितानि–शिखरादिपातेन ते उद्धरंति–निस्तारयंति आत्मानं भीमात्–जन्मजरामरणादिदुःखौघग्राहग्रसनरौद्रात् भवसमुद्रात्–नरनारकतिर्यगमररूपसंसारसागरात् ॥ आत्मा उद्धृत एव जीर्णोद्धारादिसुकृत्यकरणात् ,उद्धृतस्तथा च तैर्निजवंशः–पितापितामहादिपूर्वसंतानः, कदाचित्तस्य स्वर्गादिगतिगतस्याप्यवधिज्ञानादिविदि तत्सुकृतानुमोदनात् पुत्रपौत्रादिर्वा सुकृत्यप्रवृत्त्यादिना, अन्ये च भव्यसत्त्वाः–स्ववंशव्यतिरिक्ता आसन्नसिद्धिका अनुमोदमानाः, तुशब्दस्य विशेषकत्वाच्छेपानुष्ठानविकला अपि, जिनभवनं तत् समारचितमिति शेषः ॥ क्षपितं–शुभपरिणामादुद्वलनाकरणादिना निर्णाशितं नीचैर्गोत्रं–कुत्सितकुलोत्पत्तिरूपं प्राग्बद्धस्पृष्टनिधत्तावस्थाभिः कृतसत्ताकमपि, उच्चैर्गोत्रं च बहुजनपूज्यताहेतुः सुकुलजन्मलक्षणं बद्धं–आसकलितं तैः कुगतिपथश्च–नरकाद्यध्वा निष्ठापितः–स्वगमनाविषयीकृतः सुगतिपथश्च–सुदेवगत्यादिमार्गोऽर्जितः, तथा इह लोके–अस्मिन् अपि भवे सुकीर्त्तिः–सुश्लाघा स्यात्तेषामिति शेषः, सत्पुरुषमार्गश्च–सगरचक्रिपुत्रादिकृताष्टापदप्रभृतिमहातीर्थोद्धाररूपो देशितः–करणद्वारेण प्रकटितः, केषामित्याह–अन्येषां भव्यानां, किं कुर्वद्भिः तैः ?–जिनभवनमुद्धरद्भिः ॥ सिध्यंति–केचिदशेषकर्म्मक्षीणांशास्तेनैव भवेन निर्वृत्तिं गच्छंति, अन्ये तु सावशेषकर्म्माण इंद्रत्वं च प्राप्नुवंति, इंद्रसमाः शक्रसामानिकाः स्युः केचित्, पुनःशब्दाच्छेपा अपि महर्द्धिकाश्च, तत्र च सुरसौख्यमनुभूय ॥ मनुष्यत्वे संप्राप्ता इक्ष्वाकुकुले तथा च हरिवंशे सेनापतयो–हस्त्यश्वरथपत्तिरूपचतुरंगचमूनाथाः,महानरेश्वरा इत्यर्थः,अमात्या–महामंत्रिणः इभ्यसुताश्चैव–श्रेष्ठिसार्थवाहपुत्राश्च जायंते ॥ कलाकलापे–लिपिगणितादिकलासमूहे कुशला–निष्णाताः, ताश्चेमाः–लेहं१ गणियं२ रूवं३

नट्टं४ गीयं५ वाइयं६ सरगयं७ पुक्खरगयं८ समतालं९ जूयं१० जणवायं११ पासगं१२ अट्ठावयं१३ पोरेकव्वं१४ दगमट्टियं१५ अंतविही१६ पाणविही१७ वत्थविही१८ विलेवणविही१९ सयणविही२० अज्जं२१ पहेलियं२२ मागहियं२३ गाहं२४ गीइयं२५ सिलोगं२६ हिरण्णजुत्तिं२७ सुवण्णजुत्तिं२८ गंधजुत्तिं२९ चुण्णजुत्तिं३० आभरणविही३१ तरुणीयपडिकम्मं३२ इत्थिलक्खणं३३ पुरिसलक्खणं३४ हयलक्खणं३५ गयलक्खणं३६ गोणलक्खणं३७ कूडलक्खणं३८ छत्तलक्खणं३९ दंडलक्खणं४० असिलक्खणं४१ कागणिलक्खणं४२ मणिलक्खणं४३ वत्थुविज्जं४४ नगरमाणं४५ खंधावारमाणं४६ चारं४७ पडिचारं४८ वूहं४९ पडिवूहं६० चक्कवूहं५१ गरुलवूहं५२ सगडवूहं५३ जुद्धं५४ निजुद्धं५५ जुद्धाइजुद्धं ५६ अच्छिजुद्धं ५७ मुट्ठिजुद्धं ५८ बाहुजुद्धं५९ लताजुद्धं६० ईसत्थं६१ तरुप्पवायं६२ धणुव्वेयं६३ हिरण्णपागं६४ सुवण्णपागं६५ वट्टाखिड्डं६६ सुत्तखिड्डं६७ नालियाखेड्डं६८ पत्ताच्छेज्जं६९ कडगच्छेज्जं ७० सज्जीवनिज्जीवं७१ सउणरुतमिति७२। तथा कुलीना–विशुद्धमातृपितृपक्षजाताः सदानुकूलाः सदैव सर्वेषां स्वपरानपेक्षतया हितकारिणः सरलाः–अवक्राः सुशीलाः–अपकारिण्यप्युपकरणशीलाः सदैवेत्यादि ॥ देवाश्च मर्त्याश्च असुराश्च देवमर्त्यासुराः सह देवमर्त्यासुरैर्वर्त्तंते ताः सदेवमर्त्यासुराः ताश्च ताः सुंदर्यश्च तास्तासां मनोलोचनानामतिशायिगुणयोगादानंदकारिणः। त्रीण्यपि सुगमानि,नवरं अकलंकसंयममिति कषायकालुष्यविकलं,यथाख्यातचारित्रमित्यर्थः ॥ जीर्णोद्धारं निगमयन्नाह—

इय जिण्णुद्धारो जिणवरेहिं सव्वेहिं वंनिओ गुरुओ। मुक्खंगनाणसुरसंपयाण इह कारणं परमं ॥११०॥

इति–पूर्वोक्तप्रकारेण जीर्णोद्धारो जिनवरैः–श्रुतादिजिनप्रधानैस्तीर्थंकरैरित्यर्थः, सर्वैः–समस्तैर्वर्णितो–व्याख्यातो गुरुको–बृहत्तरः, द्रव्यस्तवमध्ये अयमेव ज्यायानित्यर्थः, कथमित्याह–मुक्खंगेत्यादि, इह प्रवचने मोक्षस्यांगानि–अवंध्यकारणानि नाणत्ति

एकग्रहणे तज्जातीयग्रहणात् सम्यग्ज्ञानदर्शनचारित्राणि तल्लाभस्य इहभवे कारणं-निमित्तं परमं-प्रकृष्टं, श्रीमन्मल्लिजिनायतनोद्धार-कर्तृपुरिमतालपुरीयवागुरुश्रेष्ठ्यादीनामिव, तथाविधसंहननाद्यभावात्तद्भव एव सिद्धिमप्राप्नुवत्सु प्रेत्य सुरसंपदां च कारणमेवासौ, यथा-आयांत्यायतने यतो यतिजनाः कुर्वंति सद्देशनां, श्रुत्वाताममलाशयः श्रयति सज्ज्ञानं तथा दर्शनम् । चारित्रं खलु देशतः स लभते द्राक् सर्वतो वापि तज् ,जीर्णोद्धारकरः क्रमात् सुरशिवश्रीभाजनं जायते ॥१॥ इति जीर्णोद्धारचिंतानंतरं पुनः कृत्यांतरमाह—

पुणोऽवि चिंतए तत्थ, समुग्गाईण किच्चयं । अन्नं वा दुत्थियं जं तु, तं सव्वं सुत्थियं करे ॥१११॥

पुनरपि चिंतयति समुग्गाईणंति-सुरक्षणीयत्वेन रत्नसमुद्गको-देवगृहभांडागारः, आदिशब्दादायव्ययस्थानानि तेषां कृत्यं-सम्यग्रक्षणादि अन्यद्वा देवार्चकप्राहरिकादिकं दुःस्थितं-स्वस्वव्यापारातत्परं अल्पाजीविकया वा दुःखितं संतं तत्सर्वं सुस्थितं कुर्यादिति ॥ एवं च चैत्यचिंतां कुर्वतः कस्यचिच्चैत्यद्रव्यविप्रणाशोऽपि स्यादतस्तद्वक्तव्यतां सदृष्टांतं चतुर्दशसूत्र्याऽऽह—

भक्खेइ जो उवेक्खेइ, जिणदव्वं तु सावओ । पन्नाहीणो भवे जो य, लिप्पए पावकम्मणा ॥११२॥
धम्मं व सो न याणेइ, जिणं वावि जिणागमं । भक्खेइ जो उवेक्खेइ, जिणदव्वं तु सावओ ॥११३॥
अहवा नरयाउयं तेण, बद्धं चेव न संसओ । तत्तोऽवि सो चुओ संतो, दारिद्देण न मुच्चई ॥११४॥
पमायमित्तदोसेणं, जिणरित्था जहा दुहं । पत्तं संकाससड्ढेणं, तहा अन्नोऽवि पाविही ॥११५॥
संकास गंधिलावइ सक्कवयारंमि चेइए कहवि । चेइयदव्वुवओगी पमायओ मरण संसारे ॥११६॥
तण्हाछुहाभिभूओ संखिज्जे हिंडिऊण भवगहणे । घायणवाहणचुण्णणवियणाओ पाविउं बहुसो ॥११७॥

दालिद्दकुलुप्पत्तिं दरिद्दभावं च पाविओ बहुसो । बहुजणधिक्कारं तह मणुएसुऽवि पाविओ बहुसो ॥११८॥
तगराए इब्भसुओ जाओ तक्कम्मसेसयाओ य । दारिद्दमसंपत्ती पुणो पुणो चित्तनिव्वेओ ॥११९॥
केवलिजोगे पुच्छा कहणे बोही तहेव संवेओ । किं इत्थमुचियमिण्हिं ? चेइयदव्वस्स वुड्ढित्ति ॥१२०॥
गासच्छायणमित्तं मुत्तुं जं किंचि मज्झ तं सव्वं । चेइयदव्वं नेयं अभिग्गहो जावजीवाए ॥१२१॥
सुहभावपवित्तीओ संपत्तीऽभिग्गहंमि निच्चलया । चेईहरकारवणं तत्थ सयाऽऽभोगपरिसुद्धी ॥१२२॥
निट्ठीवणादिकरणं असक्कहाऽणुचियआसणाईया । आययणंमि अभोगो इत्थ य देवा उदाहरणं ॥१२३॥
देवहरयंमि देवा विसयविसविमोहियावि न कयावि । अच्छरसाहिंपि समं हासखिड्डाइ न कुणंति ॥१२४॥
इय सो महाणुभावो सव्वत्थऽविय विहियभाववाएण । चरिउं विसुद्धधम्मं अक्खलियाराहओ जाओ ॥१२५॥

कंठ्याः, नवरं भक्षणं देवद्रव्यस्य तदुपचारस्य वा स्वयमुपजीवनं, उपेक्षणं—तदेव परस्य कुर्वतः शक्तितोऽनिवारणं,प्रज्ञाहीनत्वं—अंगोद्धारदानादिना देवद्रव्यविनाशः ॥ ११२ ॥ सुगमः, नवरं भक्षणोपेक्षणयोः पुनर्ग्रहणमनयोरतिदुष्टताख्यापनार्थं ॥ ११३ ॥ सुगमः ॥११४—१५॥ संकाशकथानकं गाथादशकेनाह—इह संकाशो नाम श्रावकः, स्वभावादेव भववैराग्यवान् यथोदितश्रावकसमाचारसारव्यवहारः गंधिलावइत्ति गंधिलीवत्यां पुरि समस्ति स, स च शक्रावतारे चैत्ये प्रशस्तचित्तः संश्रितां चकार, अन्यदा च कथमपि गृहव्याक्षेपादिकारणैः चैत्यद्रव्योपयोगी—देवद्रव्योपजीवकः प्रमादतोऽज्ञानसंशयविपर्यासादिरूपात् संजातः सन्ननालोचिताप्रतिक्रांतो मरणमाप, ततः संसारो ॥११६॥ तृष्णाक्षुडभिभूतः संख्येयानि हिंडित्वा—भ्रांत्वा भवग्रहणानि तेषु च घातनवाहन-

चूर्णनरूपा वेदनाः प्राप्य बहुशः–अनेकवाराः,एकैकस्मिन् भवे इत्यर्थः,तत्र घातनम्–असिकुंतादिभिः छेदनं वाहनं-लवणगंत्र्याद्याकर्षणं चूर्णनं–मुद्गरादिकुट्टनम् ॥११७॥ दरिद्रकुलोत्पत्तिमाजन्मदरिद्रभावं च तत्र प्राप्य बहुशः, तथा यतःकुतोऽपि निमित्तादनिमित्ताच्च वह्नोर्जनाद् धिक्कारं–अवर्णवादं तथेति समुच्चये मनुष्येष्वपि समुत्पन्नो गर्हणीयमन्यदपि पुत्रकलत्रादिकं प्राप्य बहुशः–पुनः पुनः,, बहुशोग्रहणं धिक्कारादिदुःखप्राचुर्यख्यापनार्थं ॥११८॥ पश्चात्तगरायां पुरि इभ्यसुतः संजातः, कस्यां सत्यामित्याह–'तत्कर्मशेषतायां तु' तस्य–चैत्यद्रव्योपयोगकालोपार्जितस्य कर्म्मणो–लाभांतरायादेः शेषः–अवशिष्टता तस्य भावः तत्ता तस्यां सत्यामेव, परं तत्रापि दारिद्र्यं-निर्धनत्वं असंप्राप्तिर्वा वित्तस्य पुनः पुनः–असकृत् चित्तनिर्वेदो–हृदयोद्वेगरूपः अन्यदा च केवलियोगे जाते सति पृच्छा तेन कृता यथा भगवन् ! मया भवांतरे किं कर्म्म कृतं येन असंपद्यमानमनोरथोऽहं संभूतः ?, कथने संकाशादिभवग्रहण-वृत्तांतस्य केवलिना कृते बोधिः–जिनधर्म्मप्राप्तिः ततः संवेगस्तस्याजनि, पप्रच्छ च–किमत्र चैत्यद्रव्योपयोगापराधे मम कर्तुमुचितं इदानीं च ?, भणितं केवलिना,यथा–चैत्यद्रव्यस्य–जिनभवनबिंबयात्रास्नात्रादिप्रवृत्तिहेतोर्हिरण्यादेर्वृद्धिः कर्तुमुचिता,ततोऽस्य ग्रासाच्छादनमात्रं मुक्त्वा यत्किंचिदन्यन्ममाधिकं व्यवहरतः स्यात् तत् चैत्यद्रव्यं ज्ञेयं, न तन्मया भोक्तव्यमित्यभिग्रहो यावज्जीवमभूदिति ॥११९–१२०–१२१॥ तस्यैवं महात्मनो गृहीतमहाभिग्रहस्य शुभभावप्रवृत्तितोऽतीव चैत्यद्रव्यदित्सावशात् उल्लसद्विशिष्टाशयसंयोगाल्लाभांतरायक्षयोपशमः,तस्माच्च संपत्तिः–प्रभूतप्रभूततरविभूतिसंप्राप्तिः, तस्यां सत्यामपि अभिग्रहे निश्चलता–निजनियमे दृढता, न तु 'यथा लाभस्तथा लोभ' इतिवचनात् तस्य तद्द्रव्यविषये स्वप्नांतरेऽप्युपभोक्तुकाम्यता,ततः 'चेइहरकारवणं'ति तस्यामेव तगरायां पुरि जिनायतननिर्म्मापणं विहितं,'तत्थ सयाभोयपरिसुद्धी' आभोगः परतंत्रो विमर्शस्तत्पूर्वं भूम्यादेः परि–समंताच्छोधनं सदाभोगपरिशु-

द्धिः, यदुक्तं—"जिणभवणकारणविही सुद्धा भूमी दलं च कट्ठाई। भिइगाणइसंधाणं सासयवुद्धी च(वुड्ढी य) जयणा य ॥१॥ अस्याक्षार्थ-लेशः—शुद्धा भूमी द्रव्यतोऽस्थिशंकादिशल्यरहिता भावतः परानुपतापिनी दलं—काष्ठेष्टकादि तत्कारिभ्य उचितक्रयेण क्रीत्वा गवाद्यनाबाधया चानीतं भृतकानतिसंधानं—कर्म्मकराणां वेतनाऽवंचनं स्वाशयवृद्धिः—पश्चात्तापादिदोषरहितत्वेन निजचित्तोत्साहः, यतना च—वस्त्रपरिपूतोदकादिकेति, यद्वा तत्र—तस्मिन् चैत्यविधापने निषदनादौ क्रियमाणेऽपि सदा-नित्यं भोगपरिशुद्धिः-वक्ष्यमाणाशातनापरिहारः ॥१२२॥ निष्ठीवनादेः करणं—विधानं, आदिशब्दाच्छेषाशातनानामपि परिग्रहः, ताश्चेमाः—खेलं१ केलि२ कलिं३ कला४ कुललयं५ तंबोल६ मुग्गालियं७, गाली८ कंगुलिया९ सरीरधुवणं१० केसे११ नहे१२ लोहियं१३। भत्तोसं १४ तय१५ पित्त१६ वंत १७—दसणा१८ विस्सामणं१९ दामणं२०, दंत२१ च्छी२२ नह२३ गंड२४ नासिय२५ सिरो२६ सुत्त२७ च्छवीणं मलं२८ ॥१॥ मंतुम्मीलण२९ सिक्खयं२३ बिभजणं३१ भंडार३२ दुट्ठासणं३३, छाणी३४ कप्पड३५ दालि३६ कप्पड३७ बडीविस्सारणं३८ नासणं३९। अक्कंदं४० विकहं४१ सर४२ च्छघडणं४३ तेरिच्छसंठावणं४४, अग्गीसेवण४५ रंधणं ४६ परिखणं४७ निस्सीहियाभंजणं ४८ ॥२॥ साडेगुत्तरसंगभंग४९ मउडं५० मोलिं५१ सिरे सेहरं५२, छत्तो५३ वाहण५४ सत्थ५५ चामर५६ मणोऽणेगत्त५७ मब्भंगणं५८। सच्चित्ताणमचाय५९ चायमजिए६० दिट्ठीइ नो अंजली६१, हुड्डा ६२ जिंडुह६३ गुड्डियारमणयं६४ जोहार६५ मंडकीयं६६ ॥३॥ रिक्कारं६७ धरणं६८ रणं६९ विवरणं वालाण७० पल्हत्थियं७१, पाऊ७२ पायपसारणं७३ पुडपुडी७४ पंकं रओ७५ मेहुणं ७६। जूयं७७ जेमण७८ जुज्झ७९ विज्ज८० वणिजं८१ सिज्जं ८२ जले मज्जणं ८३, एमाईयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥४॥ तथाऽसत्कथा—राजकथाद्याः अनुचितासनादि च—अनुचितमासनं गुरुजनापेक्षयोच्चं समं वा, आदिशब्दात् पर्यस्तिकादिबंधपरिग्रहः,

असत्कथानुचितासनादीनामाशातनांतर्गतत्वेऽपि पृथग्ग्रहणमेषां महावज्ञाऽऽस्पदत्वेनातिशयवर्जनख्यापनार्थं,एतत् सर्वं किमित्याह–आयतने–जिनगृहे अभोगो वर्त्तते, नञः कुत्सार्थत्वात् कुत्सितो भोगश्चैत्यगृहोपजीवनमभोगः, तस्य महाशातनाफलत्वेन दुर्गतिहेतुत्वादिति भावः, अत्र भोगपरिसुद्धौ देवा–भवनपत्यादय उदाहरण ॥१२३॥ तदेव भावयति–देवगृहके–नंदीश्वरादिगतचैत्यभवनरूपे विषयविषविमोहिता अपि कदाचिदपि अप्सरोभिरपि स्वप्राणाधिकप्रेमपदप्राप्ताभिः समं हासः प्रतीत एव खेला–क्रीडा आदिशब्दाच्चित्रचर्च्चरीवचनग्रहः, अपिशब्दात् स्थूलाशेषापराधावरोधो दृश्यते ॥ १२४ ॥ इति–एवमुक्तनीत्या स–संकाशजीवो महानुभावः–समुद्घटितप्रशस्तसामर्थ्यः सर्वत्र–सर्वचैत्येष्वविधिभावत्यागेन–अनुचितप्रवृत्तिनिरोधेन चरित्वा–निषेव्य विशुद्धधर्मं श्रुतचारित्रलक्षणमस्खलिताराधको–निर्वाणस्य साधकः संजात इति गाथाचतुर्दशकार्थः ॥१२५॥ देवद्रव्यवक्तव्यतां सदृष्टांतामभिधाय सांप्रतं तस्य साधारणद्रव्यस्य च तुल्यतोद्विभावयिषयाऽऽह—

चेइयदव्वं साहारणं च जो दुहइ मोहियमईओ। धम्मं च सो न याणइ अहवा बद्धाउओ नरए ॥१२६॥

चैत्यद्रव्यं प्रसिद्धं साधारणं च–चैत्यपुस्तकापद्गतश्रावकादिसमुद्धरणयोग्यं ऋद्धिमच्छ्रावककृतसमुद्रकरूपं, ते द्वे अपि यो दुह्यति–विनाशयति दोग्धि वा–व्याजव्यवहारादिना तदुपयोगमुपभुङ्क्ते मोहितमतिकः–क्लिष्टकर्म्मोदयान्मूढीकृतचेतस्कः धर्मं चेत्यादि प्राग्वदिति ॥ अन्यच्च—

चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए। साहू उविक्खमाणो अणंतसंसारिओ भणिओ ॥१२७॥

चैत्यस्य–जिनायतनस्य द्रव्यं–हिरण्यसुवर्णादि तस्य विनाशे,तथा तस्य–चैत्यस्य द्रव्यं–दारूपलेष्टकादि तस्य–विनाशने–विध्वं-

सने, किंभूते ?–द्विविधभेदे–वक्ष्यमाणविनाशनीयद्विविधवस्तुविषयत्वेन द्विप्रकारे केनचित् क्रियमाणे सति साधुः–सर्वसावद्यव्यापारनिवृत्तोऽपि उपेक्षमाणो–देशनादिभिरनिवारयन्ननंतसंसारिको दुर्लभबोधिको भणितः, यदाहुः–"चेइयदव्वविणासे इसिघाए पवयणस्स उड्डाहे । संजइचउत्थभंगे मूलग्गी बोहिलाभस्स॥१॥"त्ति, विनाशो भक्षणोपेक्षणादिलक्षणोऽत्रावसेय इति ॥ द्वैविध्यमाह—

जोग्गं अईयभावं मूलुत्तरभेयओ अहव कट्ठं । जाणाहि दुविहमेयं सपक्खपरपक्खमाइं वा ॥१२८॥

योग्यं–चैत्यनिमित्तं नव्यमानीतं, अतीतभावं–लग्नोत्पादितं, अथवा मूलोत्तरभेदतः, तत्र मूलद्रव्यं स्तंभकुंभिकादि उत्तरद्रव्यं तु छादनादि, तत्किमित्याह–'कट्ठं'ति काष्ठं, अस्य चोपलक्षणत्वादिष्टकोपलादि च 'सपक्खपरपक्खमाइं वा'इति स्वपक्षपरपक्षजनितविनाशद्वैविध्याद्वा, तत्र स्वपक्षः–साधर्म्मिकवर्गः परपक्षो–वैधर्म्मिकलोकः, एवमनेकप्रकारं तच्चैत्यद्रव्यं जानीहि द्विविधभेदमिति ॥ चैत्यद्रव्यविनाशदोषं प्रसंगतो गुरुद्रव्यविनाशदोषं च व्यवहारभाष्यगाथादिभिर्दर्शयन्नाह—

चेइयदव्वं तु विभज्ज करिज्ज कोई नरो सयट्ठाए । समणं वा सोवहियं विक्किज्जा संजयट्ठाए ॥१२९॥
एयारिसंमि दव्वे समणाणां किं न कप्पए घेत्तुं ? । चेइयदव्वेण कयं मुल्लेण व जं सुविहियाणं ॥१३०॥
तेणपडिच्छा लोएवि गरहिया उत्तरे किमंग पुणो ? । चेइयजइपडिणीया जो गिण्हइ सोवि हु तहेव ॥१३१॥

चैत्यद्रव्यं चौराः समुदायेनापहृत्य तन्मध्ये कश्चिन्नर आत्मीयेन भागेन स्वयमात्मनोऽर्थाय मोदकादि कुर्यात्, कृत्वा च संयतानां दद्यात्, यो वा संयतार्थाय श्रमणं सोपधिकं विक्रीणीयात्, विक्रीय च तत् प्रासुकं वस्त्रादि संयतेभ्यो दद्यात् ॥ एतादृशेन द्रव्येण गाथायां सप्तमी तृतीयार्थे यत् आत्मार्थं कृतं तत् श्रमणानां किं ? ग्रहीतुं कल्पते ?, सूरिराह–यच्चैत्यद्रव्येण यच्च वा सुविहितानां

मूल्येनात्मार्थं कृतं तद्द्वितीयमानं न कल्पते, किं कारणमिति चेत्, उच्यते—स्तेनानां तस्य प्रतीष्ठा—प्रतिग्रहणं लोकेऽपि गर्हिता, किमंग पुनरुत्तरे ?, तत्र सुतरां गर्हिता, ततश्चैत्ययतिप्रत्यनीकात्—चैत्ययतिप्रत्ययनीकस्य हस्तात् यो गृह्णाति सोऽपि निश्चितं तथैव—चैत्ययतिप्रत्यनीक एवेति ॥ एनवमेवार्थं समर्थयन्नाह—

चेइयदव्वं गिण्हित्तु भुंजए जो उ देइ साहूणं । सो आणा अणवत्थं पावइ लिंतोऽवि दिंतोऽवि ॥१३२॥

चैत्यद्रव्यं उपलक्षणत्वाद् गुरुद्रव्यं पूर्वोक्तप्रकारं गृहीत्वा यः स्वयं भुङ्क्ते अन्येभ्यश्च साधुभ्यो ददाति स साधुर्गृह्णानोऽपि दददपि 'आण'त्ति भगवदाज्ञाभंगः—प्रवचननिषिद्धाचरणरूपस्तं तथा अनवस्था—तत्समाचारदर्शनादन्येषामपि दुष्प्रवृत्तिरूपा, यदुक्तं—"एक्केण कयमकज्जं पुणोऽवि तप्पच्चया कुणइ वीओ। सायाबहुलपरंपरवोच्छेओ संजमतवाणं ॥१॥"ति, तां च प्राप्नोति, उपलक्षणत्वान्मिथ्यात्वविराधने च, तत्र मिथ्यात्वं यथाप्रज्ञातस्याकरणादलीकत्वं, उक्तं च—"जो जहवायं न कुणइ मिच्छद्दिट्ठी तओ हु को अन्नो ?। वड्ढेइ य मिच्छत्तं परस्स संकं जणेमाणो ॥१॥ विराधना तु संयमात्मप्रवचनोपघातभेदात्त्रिधा, तत्र संयमविराधना अन्यायोपात्तवित्तोद्भूतवस्तु गृह्णानस्य तत्कृतासंयमानुमोदनरूपा आत्मविराधना—प्रत्यनीकदेवतादिच्छलनलक्षणा प्रवचनविराधना पुनः—प्रवचनमूलयतिचैत्योपद्रवेण स्तेनप्रतीष्ठया च सुप्रतीतैवेति ॥ सांप्रतमस्यार्थस्य पुष्टिकृत् स्थूलमतिनाऽपि वेदांतवादिनोक्तं श्लोकत्रयमुपदर्शयति—

देवद्रव्येण या वृद्धिर्गुरुद्रव्येण यद् धनम् । तद् धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत् ॥१३३॥

प्रभास्वे मा मतिं कुर्याः, प्राणैः कंठगतैरपि । अग्निदग्धाः प्ररोहंति, प्रभादग्धो न रोहति ॥१३४॥

प्रभास्वं ब्रह्महत्या च, दरिद्रस्य च यद् धनम्। गुरुपत्नी देवद्रव्यं च, स्वर्गस्थमपि पातयेत् ॥१३५॥

देवद्रव्येण प्रतीतेन या वृद्धिः—आपातमात्रेण समृद्धिः तथा गुरुद्रव्येण—स्वाराध्यसंबंधिवस्तुजातेन यद् धनं—विभूतिः तद् धनं कुलनाशाय—स्वसंतानोच्छेदाय स्यादेव, स तु देवद्रव्यादिभक्षको महापापोपहतचेताः मृतोऽपि नरकं व्रजेत् ॥१३३॥ द्वितीयश्लोकेन साधारणद्रव्यदोषं दर्शयति—प्रभास्वे लोकप्रतीते साधारणद्रव्ये मा मतिं—ग्रहणबुद्धिं मा कुर्याः प्राणैः कंठगतैरपि, मृत्युकोटिं गतोऽपी-त्यर्थः, कुत इत्याह—अग्निदग्धाः पादपादयः पुनर्जलसेकादिना प्ररोहंति—पल्लवयंति, प्रभादग्ध इत्यत्र पदैकदेशे पदसमुदायावगमात् प्रभास्वदग्धः—साधारणद्रव्यविनाशोग्रप्रापपावकनिर्दग्धस्तु समूलदग्धद्रुमवन्न रोहति, सदैव दुःखितत्वात् न सुखभाक्त्वेन पुनर्नवो भवतीत्यर्थः ॥१३४॥ तृतीयश्लोकेन उक्तानुक्तपापप्रौढिमानं दर्शयति—सुखोन्नेयः ॥१३५॥ एवं स्वपरसमयसंवादमुपदर्श्य देवद्रव्य-विनाशाविनाशयोर्दोषगुणदर्शिकां चतुःसूत्रीमाह—

एवं जो जिणदव्वं तु, सड्ढो भक्खे उविक्खए। विसं सो भक्खए बालो, जीवियट्ठो न संसओ ॥१३६॥

जे पुणो जिणदव्वं तु, वृद्धिं निंति सुसावया। ताणं रिद्धी पवड्ढेइ, कित्ती सुक्खं बलं तहा ॥१३७॥

पुत्ता य हुंति से भत्ता, सोंडीरा बुद्धिसंजुया। सव्वलक्खणसंपुन्ना, सुसीला जणसंमया ॥१३८॥

संकासो विव भेत्तूणं, कंमगंठिं सुनिव्वुडो। जाहीई सो उ निव्वाणं, महासत्तो न संसओ ॥१३९॥

सुगमानि, नवरं एवमिति स्वपरसमयोक्तमवेत्यापीति शेषो दृश्यः ॥१३६॥ वृद्धिरत्र सम्यग्रक्षणापूर्वापूर्वप्रक्षेपादिनाऽवसेया

॥१३७॥ सेत्ति वचनव्यत्ययात् तेषां ॥१३८॥ सुनिव्वुडोत्ति इहैव संयमरतत्वेन मुक्तिसुखास्वादकत्वात् सुनिर्वृत्तः, यदाहुः— "निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम्। विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥१॥" अत्र च 'जे पुणो' इत्यादौ बहुवचनोद्दिष्टानामप्येकवचननिर्देशोऽमुदृशो महासत्त्वः कश्चिदेव भवतीति ज्ञापनार्थः, इति सूत्रचतुष्टयार्थः ॥१३९॥ महासत्त्वतामेव द्विसूत्र्या भावयन्नाह—

नो माया नो पिया भज्जा, न सरीरं न बंधवा। पेच्छए जत्थ ठाणंमि, जत्थ अत्थं तु पेच्छइ ॥१४०॥

अलुद्धो जो उ दव्वंमि, जिणदव्वं नेइ वित्थरं। एएण महासत्तो, वुचए जिणसासणे ॥१४१॥

जीवः सर्वोऽपि सदैवानादिदुर्जेयलोभग्रहग्रस्तत्वात् प्रायो यत्र स्थाने रक्षणीयवर्धनीयत्वादिकेऽर्थमेव परमध्येयबुद्ध्या प्रेक्षते तत्र स्थाने न मात्रादीन् प्रेक्षते, यतस्तदर्थं जीवितमप्युपेक्षमाणोऽसौ दुरंतानायाससंघातान् संधत्ते, यथा—"यद्दुर्गामटवीमटंति विकटं क्रामंति देशांतरे, गाहंते गहनं समुद्रमतनुक्लेशांतरं कुर्व्वते। सेवंते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्प्पंति प्रधनं धनांधितधियस्तल्लोभविस्फूर्जितं॥१॥"मिति, यः पुनः संतोषसुधासारसंभारसिक्तस्वांतर्वृत्तित्वात्तस्मिन्नपि द्रव्येऽलुब्धः—सर्वथाऽप्यगृद्धः सन् जिनद्रव्यं सम्यग्रक्षणादिना विस्तारं नयति स एतेन कारणेन महासत्त्व उच्यते जिनशासने इति सूत्रद्वयार्थः ॥१४०-१४१॥ देवद्रव्यभक्षणादिषु स्वस्वफलं त्रिसूत्र्याऽऽह—

जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं। भक्खंतो जिणदव्वं अणंतसंसारिओ होइ ॥१४२॥

जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं। रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥१४३॥

जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं । वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो ॥१४४॥

सुवोधाः, नवरं सति हि देवद्रव्ये प्रत्यहं जिनायतने पूजासत्कारसंभवः, तत्र च प्रायो यतिजनसंपातस्तद्व्याख्यानश्रवणादेश्च जिनप्रवचनवृद्धिः,एवं च ज्ञानादिगुणानां प्रभावना च ॥१४२॥ परीत्तसंसारिक इति आसन्नमुक्तिगमनादल्पभवस्थितिकः ॥१४३॥ तीर्थंकरत्वलाभस्तु देवद्रव्यवृद्धिकर्तुरर्हत्प्रवचनभक्त्यतिशयात् सुप्रसिद्ध एव ॥१४४॥ उपसंजिहीर्षुराह—

एवं नाऊण जे दव्वं, वुड्ढिं निंति सुसावया । जरामरणरोगाणं, अंतं काहिंति ते पुणो ॥१४५॥

कण्ठ्यः, नवरं दव्वमिति प्रस्तावाद् देवद्रव्यम् ॥१४५॥ श्रवणद्वार एव विधिशेषमाह—

अह धम्मदेसणत्थं च, तत्थ सूरी न आगओ । पुव्वुत्तेण विहाणेणं, वसही गच्छए तओ ॥१४६॥

केनचित्कारणेन तत्र चैत्ये धर्मदेशनार्थं सूरिर्नागतः ततोऽसौ बुद्धिमान् श्रावकः पूर्वोक्तेन हयगजादिप्रकारेण इतरस्तु सामायिकप्रतिपत्तिविधिना वसतौ—साधूपाश्रये गच्छतीति॥१४६॥ चैत्य एव साधवः किं न तिष्ठंति इत्याद्याशंकां व्यवहारभाष्यगाथाभिर्निरस्यन्नाह—

जइवि न आहाकम्मं भत्तिकयं तहवि वज्जयंतेहिं । भत्ती खलु होइ कया जिणाण लोएवि दिट्ठंतो ॥१४७॥
वंधित्ता कासवओ वयणं अट्ठपुडसुद्धपोत्तीए । पत्थिवसुवासए खलु वित्तिनिमित्तं भया चेव ॥१४८॥
दुब्भिगंधपरिस्सावी, तणुरप्पेसऽण्हाणिया । दुहा वाउपहो चेव, तेण ठंति न चेइए ॥१४९॥
तिन्नि वा कड्ढई जाव, थुईओ तिसिलोइया । ताव तत्थ अणुन्नायं, कारणेण परेणवि ॥१५०॥

यद्यपि भक्तिकृतमायतनादि भगवतः, नाधाकर्म्म, तथापि तद्वर्जयद्भिः खलुः—निश्चयेन भक्तिर्जिनानां कृता भवति ॥१४७॥ इदं तु लोकेऽपि दृष्टं, तदेव दर्शयति—काश्यपः—कौटुंबिको वृत्तिनिमित्तं भयाद्वा, पार्थिवस्थानीयायास्तीर्थंकरप्रतिमाया भक्तिनिमित्तमायतनं साधवः प्रविशंति, न तु तत्रैव तिष्ठंति ॥१४८॥ कुत इत्याह—एषा तनुः स्नपिताऽपि दुरभिगंधप्रस्वेदपरिश्राविणी, तथा द्विधा वायुपथोऽधोवायुनिर्गम उच्छ्वासनिःश्वासनिर्गमश्च, तेन कारणेन चैत्ये—चैत्यायतने साधवो न तिष्ठंति, अथवा श्रुतस्तवानंतरं तिस्रः स्तुतीस्त्रिश्लोकिकाः—श्लोकत्रयप्रमाणा यावत् कर्षंति तावत् तत्र—चैत्यायनेऽवस्थानमनुज्ञातं, कारणेन—कारणवशात् परेणाप्यवस्थानमनुज्ञातमिति, 'उज्जितसेलसिहरे' इत्याद्यपि बहुश्रुताचीर्णत्वादविरुद्धमेव चतुर्थीपर्युषणाऽऽचरणवदिति, एवं चैत्यावस्थायित्वं व्युदस्य तत्रैव व्याख्यानविधिमाह—

निस्सकडे ठाइ गुरू कइवयसहिओ इयरा वए वसहिं। अह तत्थ अनिस्सकडं पूरिंति तहिं समोसरणं ॥१५१॥
ओसंनावि य तत्थेव, इंती चेइयवंदया। तेसिं निस्साइ तं भवणं, सड्ढाईहिं कयं परं ॥१५२॥
सेहाण मंदसड्ढाणं, दट्ठुं ताणं तु चिट्ठियं। मंदा सद्धा जओ होइ, अणुट्ठाणे जिणाहिए ॥१५३॥

चैत्यानि तावच्छाश्वतादीनि चतुर्धा, तत्र शाश्वतचैत्यं नंदीश्वरादिषु१ भक्तिचैत्यमनिश्राकृतनिश्राकृतभेदात् द्विधा, तत्र अनिश्राकृतं यत् साधुसत्तारहितं यथाऽष्टापदादिषु, निश्रीकृतं यत् साधुनिश्रया क्रियते२ मंगलचैत्यमुत्तरंगादिषु यथा मथुरायां३ साधर्म्मिकचैत्यं वारत्तिकप्रतिमादि ४, तत्र निश्राकृतचैत्ये गुरुर्व्याख्यानार्थं कतिपयपरिणतसाधुसहितस्तिष्ठति, इतरे शिक्षकादयो व्रजन्ति वसतिं, अथ च तत्रानिश्राकृतं चैत्यमस्ति 'पूरिंति तहिं समोसरणं'ति तत्र चैत्ये सपरिवारा आसते ॥१५१॥ किमेवं न निश्रा-

क्तेऽपीष्यत इत्याह—अवमग्ना अपि चैत्यवंदकास्तत्रायांत्येव, यतस्तद् जिनभवनं श्राद्धादिभिः परं तेषां निश्रया कृतमिति॥१५२॥ ततः किमित्याह—तत्र तेषां पुनरवमग्नानां चेष्टितं 'दगपाणं पुप्फफलं अणेसणिज्ज'मित्यादिकं दृष्ट्वा शैक्षाणां—अभिनवदीक्षितानां मंदश्रद्धानां चातिपरिणामिकादीनां मंदा श्रद्धा यतो भवत्यनुष्ठाने जिनाख्याते व्रतसमित्यादिके क्रियाकलापे ॥१५३॥ मंदश्रद्धत्वाच्च तत्र ते यदभिधारयंति तदाह—

एएवि साहुणो लोए, अम्हेऽवि मलकिण्णया। एएण कारणेणं तु, वसहिं पेसंति साहुणो ॥१५४॥

एवंविधा अप्येते साधवो लोके तावद्वंदनादिभिः सत्क्रियंते, वयं पुनरेवमेव मलक्लिन्नकाः—मलाविलगात्रोपधयः, एवं च तेषां भगवदाज्ञार्थमपह्नुवानानां भावचारित्रमप्यपैति तेनैव कारणेन तान् साधून् शैक्षकादीन् वसतिं सूरयः प्रेषयंति॥ प्रस्तुतमाह—

विहिणा तत्थ वंदित्ता, सुणित्ता धम्मदेसणं। तओ य घरवावारे, कुणइ सुद्धे सुसावओ ॥१५५॥

स द्विविधोऽपि श्रावकस्तत्र—वसतौ 'विधिने'ति नैषेधिकीत्रयकरणपूर्वकं प्रविश्य वंदनकस्थानद्विनवत्यधिकशतसत्यापनक्रमेण वंदित्वा गुर्वादीन् श्रुत्वा च गुर्वंतिकेऽवग्रहे धर्मदेशनां ततश्च स्वस्थानमागत्य गृहव्यापारान्—स्वकुलोचितव्यवसायान् वक्ष्यमाण-कर्म्मादानकूटक्रयादिदोषपरिहारेण शुद्धान् करोतीति ॥ द्वारं ॥ पूर्वाह्णकृत्यानुगतः सुरम्यः, सर्वज्ञवाक्यानुमृतेः सुगम्यः। सुश्राव-काणां दिनकृत्यवृत्तौ, प्रस्ताव एष प्रथितो द्वितीयः॥ इति श्रावकदिनकृत्यवृत्तौ पूर्वाह्णसमयसमाचरणीयचैत्यगृहगमना-दिद्वारसप्तकव्याख्यासंदर्शको द्वितीयः प्रस्तावः समाप्तः ॥ सर्वाग्रं० ५३८३ ॥

नमस्तीर्थाय । सांप्रतं श्रवणद्वारानंतरं चतुर्दशं व्यवहारशुद्धिद्वारं, तत्र प्रथमं पंचदशकर्म्मादानवर्जनाय द्विसूत्रीमाह—

लक्खं विसं च लोहं च, इंगालं वणछेयणं । भाडिं फोडिं विवज्जिज्जा, दंतसंखवणिज्जयं ॥१५६॥
वज्जे रसकेसवाणिज्जं, तहा जंताण पिल्लणं । सरदहतलायसोसं, दवग्गिदावणयं तहा ॥१५७॥

तत्र 'लक्खं'ति लाक्षामनःशिलानीलीधातकीटंकणादीनां विक्रयो लाक्षावाणिज्यं१, तद्विवर्जयेदिति योगः, 'विसं चे'ति विषायोऽस्त्रहलयंत्रहरितालादीनां विक्रयो विषवाणिज्यं, लोहस्य पृथगुपादानमतिसावद्यहेतुत्वख्यापनार्थं, चशब्दाच्छकटकर्म्म, तच्च शकटस्य घटनखेटनविक्रयरूपं३ 'इंगाल'त्ति अंगारभ्राष्ट्रकुंभायःस्वर्णकारिता ठठारत्वेष्टकापाकौ चेत्याद्यंगारकर्म्म४ 'वणछेयणं'ति छिन्नाच्छिन्नवनपत्रपुष्पफलविक्रयेण कणदलनादिना च वृत्तिर्वनकर्म्म 'भाडिं'ति शकटोक्षमहिषोष्ट्रखराश्वतरवाजिनां भारस्य वाहनाद् वृत्तिर्भाटककर्म६ 'फोडिं'ति सरःकूपादिखननशिलाकुट्टनादि स्फोटकर्म्म७ 'दंतसंखवणिज्जयं' दंतकेशनखशृंगत्वग्रोमकपर्दशंखशुक्त्यादिपंचेन्द्रियविकलेन्द्रियांगानामाकरे क्रयो दंतशंखवाणिज्यं८॥१॥ तथा 'रसकेसवणिज्जं'ति नवनीतवसामधुमद्यादिविक्रयो रसवाणिज्यं९ द्विपाच्चतुष्पाद्विक्रयः केशवाणिज्यं तच्च१० तथाशब्दस्यानुक्तसमुच्चयार्थत्वात् निर्लंछनकर्म्म च, तच्च नासावेधोऽकंनमुष्कच्छेदनपृष्ठगालनकर्णकंबलच्छेदादीति११ 'जंताण पीलण'त्ति तिलेक्षुसर्षपैरंडजलयंत्रादिपीडनं१२ 'सरदहतलायसोसं'ति सरोह्रदतटाकशोषः कृष्याद्यर्थं तच्च१३ 'दवग्गिदावणयं'ति व्यसनात् पुण्यबुद्ध्या वा दवाग्निप्रज्वालनं १४ तथाशब्दादसतीपोषश्च, शारिकाशुकमार्जारश्वकुर्कुटकलाप्यादीनां वित्तार्थं दास्याश्च पोषणं तच्च१५ । एतानि पंचदश कर्म्मादानानि, उपलक्षणत्वाच्चैषां बहुसावद्यगुप्तिपालादिनियोगांश्च वर्जयेदिति सूत्रद्वयार्थः ॥१५५॥ अधुना कूटवाणिज्यनिषेधार्थमाह—

'कूडमाणं तुलं चेव, वज्जे तप्पडियरूवयं । लोए लोउत्तरे चेव, निंदियं जं वणिज्जयं ॥१५८॥

मानं-सेतिकाकर्षादि तच्च कूटं-न्यूनाधिकं तुला च-तोल्यवस्तूपकरणं कूटत्वं तथैव, तथा तत्प्रतिरूपकं तेपु-व्रीहिघृतमंजिष्ठादिषु प्रतिरूपाणां-तत्सदृशानां पलंजीवसाचित्रकादीनां प्रक्षेपो यत्र व्यवहारे स तत्प्रतिरूपकस्तत्त्वं तच्च, किं बहुना?-लोके-प्राकृतजने कूटक्रयादि वाणिज्यं निंदितमल्पसावद्यमपि यद् गर्हितं लोकोत्तरे च तिलभांडशालादि कुत्सितं तच्च वर्जयेदिति॥१५८॥ व्यवहारशुद्धिमेवोत्तरगुणभूतां त्रिसूत्र्याऽऽह—

ववहारसुद्धी धम्मस्स, मूलं सव्वन्नु भासए । ववहारेणं तु सुद्धेणं, अत्थसुद्धी जओ भवे ॥१५९॥
सुद्धेणं चेव अत्थेणं, आहारो होइ सुद्धओ । आहारेणं तु सुद्धेणं, देहसुद्धी जओ भवे ॥१६०॥
सुद्धेणं चेव देहेणं, धम्मे जोग्गो उ जायइ । जं जं कुणई किंचं तु, तं तं से सफलं भवे ॥१६१॥

अनंतरोक्ता हि व्यवहारशुद्धिर्मनोवाक्कायावक्रतारूपा, सा च धर्मस्य मूलं-आद्यं कारणं सर्वज्ञः-तीर्थकृत् भाषते 'सोही उज्जुयभूयस्स, धम्मो सुद्धस्स चिट्ठई' इत्यादिव्यक्तवाग्भिर्ब्रूते,यतो व्यवहारशुद्ध्यैव अर्थशुद्धिरपि भवेदतः सैव धर्मस्य मूलम्॥१५९॥ शुद्धेन चैवार्थेन आहारः-अशनादिः 'नायागयाण'मित्यादिवचनबलात् शुद्धो-निर्दोषः, आहारेण पुनः शुद्धेन यतो देहशुद्धिर्भवेत्, बाह्यमलसद्भावेऽपि भगवदाज्ञावर्त्तित्वेन कर्ममलापगमात्,शुद्धेनैव च देहेन धर्मयोग्यस्तु जायते,यथा हि प्रक्षालितांगः सदलंकारार्हो भवति तथाऽयमपीत्थं शुद्धधर्मरत्नालंकारयोग्यः स्यात्। ततश्च यत् यत् करोति कृत्यं-देवार्चादानानुष्ठानादिकं तत्तत् 'से' तस्य सफलं-स्वर्गमोक्षफलप्रदमेव भवेत्, उक्तं च-"तवनियमसीलकलिया सुसावगा जे हवंति इह सुगुणा । तेसिं न दुल्लहाइं निव्वाणविमाणसुक्खाइं ॥१॥"ति सूत्रद्वयार्थः ॥१६०-१६१॥ व्यतिरेकमाह—

अन्नहा अफलं होइ, जं जं किंचं तु सो करे। ववहारसुद्धिरहिओ य, धम्मं खिंवासए जओ ॥१६२॥

अन्यथेति व्यवहारशुद्ध्यादिविकलस्याफलमेव भवति, नञः कुत्सार्थत्वात्, यत्कृत्यं स कुर्यात् तत्तस्य निरर्थकं स्यादित्यर्थः, यतो—यस्माद्धेतोः व्यवहारशुद्धिरहितश्च धर्म्मं—आर्हतमशाठ्यसाध्यं 'खिंसावइ'त्ति गर्हयत्यविवेकिलोकसार्थैरिति ॥ एनमेवार्थं भावयन्नाह—

धम्मखिंसं कुणंताणं, अप्पणो य परस्स य। अबोही परमो होइ, इइ सुत्तेऽवि भासियं ॥१६३॥

धर्म्मखिंसां—धर्म्मगर्हां कुर्वतां जंतूनामात्मनश्च परस्य च अबोधिः—दुर्लभबोधिता कृता परमा—प्रकृष्टा अनंतसंसारिकत्वरूपा भवति इति—एतत् सूत्रेऽपि—छेदग्रंथलक्षणे भाषितं, तथा च तत्सूत्रं—"तित्थयर पवयणसुयं आयरियं गणहरं महड्ढीयं। आसायंतो बहुसो अभिनिवेसेण पारंची ॥१॥" आशातनायाश्चात्र प्रवचनावर्णवादरूपायाः स्वयंकृताया आत्मनिमित्तायाः परकृतायाश्च परिहारोपाये प्रकर्षेण यतितव्यं, अत्र चार्थे श्रीमन्महावीरो निदर्शनं, तथाहि—क्षत्रियकुंडग्रामे नगरे पश्चिमतीर्थनाथः श्रीवर्धमानस्वामी मातापित्रोर्दिवं गतयोः ज्येष्ठभ्रातरं नंदिवर्धनमापृच्छ्य सांवत्सरिकमहादानेन भुवनजननिवहमानंद्य पटप्रांतविलग्नजरत्तृणमिव प्राज्यराज्यश्रियं परित्यज्य प्रव्रज्यां च प्रतिपद्य वायुरिवाप्रतिबद्धतया विहरन्नवनीतलमेकदा दुइज्जंतगाभिधानपितृवयस्यतापसकुलपतिप्रकृतप्रार्थनाभंगभीरुस्तद्वितीर्णाश्रमे वर्षारात्रमवतस्थे, तदा चान्यत्र निस्तृणत्वात् गवादीनाश्रमतृणान्याकर्षतस्ते तापसा यष्टिलेष्ट्वादिभिः निर्दयमाहत्य स्वानाश्रमानरक्षन्, प्रभोस्तु निष्प्रतिकर्म्मत्वेन स्वशरीरेऽपि निरपेक्षस्य प्रतिमास्थस्य स्तंभवन्निश्चलगात्रस्य तदाश्रमात्ते गवादयो निर्भयमानसाः सर्वतस्तृणान्याचकृषुः, दृष्ट्वा च तत्ते तपस्विनो गत्वा कुलपतेः पुरतः सासूयमिति शशंसुः—कीदृशोऽयं भगवन्! भवद्वल्लभो देवार्यो यः सम्मूर्च्छनजवद्विचेताः स्वाश्रममपि न रक्षति ?, ततोऽसौ साशंकः क्षिप्रं प्रभुसमीपमभ्येत्य

विनष्टग्रायमाश्रममवलोक्य मुग्धमतिः सोपालंभमिदमभ्यधात्–पश्य पश्य वत्सैते नीडजा अपि स्वनीडं रक्षंति, तत्किं न भवान् रक्षतीत्याद्यभिधाय गते कुलपतौ स्वस्थानं विश्वविश्वैकवत्सलः स्वाम्येवमचिंतयत्–वयं तावत्तितारयिषवो विश्वं, एते च वराका निर्विवेकास्तारयितुमशक्याः, प्रत्युत मदवर्णवादासादितदुर्लभबोधिकत्वाः संतो मा अनंतसंसारिकतां प्रापन्निति विचिंत्य वर्षारात्रस्य पक्षे व्यतिक्रांते निर्गत्य ततः स्थानात् अस्थिकग्राममगमत्, तत्र च ब्रह्मराक्षसं प्रतिबोधितवान्, इत्येवं श्रीवीरः सत्युपाये परस्यापि पापनिवारणाय प्रयतवानिति ॥१६३॥ एवं व्यवहारशुद्धिविषयेऽन्वयव्यतिरेकावुपदर्श्योपदेष्टुमाह—

तम्हा सव्वपयत्तेणं, तं तं कुज्जा वियक्खणो। जेणं धम्मस्स खिंसं तु, न करेअवुहो जणो ॥१६४॥

स्पष्टः ॥ अन्यच्च—

कुसीलाणं च संसग्गी, धम्मखिंसाइ कारणं। इहलोए परलोए य, महादुक्खाण दायगा ॥१६५॥

कंठ्यः, कुशीला–द्यूतकृत्पारदारिकविटनटादयः ॥ किंच—

वरं वाही वरं मच्चू, वरं दालिद्दसंगमो। वरं अरण्णवासो य, मा कुमित्ताण संगमो ॥१६६॥

स्पष्टः ॥ एनमेवार्थं सदृष्टांतमाह—

विसं हालाहलं भुत्तं, जहा पाणे विणासए। एवं कुमित्तसंजोगो, दुक्खहेऊ न संसओ ॥१६७॥

स्पष्टः ॥ अभ्युच्चयमाह—

इक्कंमि चेव जम्मंमि, मारयंति विसाइणो। कुमित्ताणं तु संजोगो, जम्मे जम्मे दुहावहो ॥१६८॥

स्पष्टः ॥ कुमित्रसुमित्रसंसर्गे दोषगुणाविष्करणपूर्वकं दृष्टांतप्रदर्शनायाह—

कुमित्तसंगओ य, लहंती पाणिणो दुहं । सुमित्ताओ परं सुक्खं, इत्थं नाओ दिवायरो ॥१६९॥

अक्षरार्थः सुगमः, भावार्थः संप्रदायगम्यः, स चायं–इह भरहे वंगासुं विस्सपुरीए जवस्स नरवइणो । चउअयपुरोहिय-सुओ नामेण दिवायरो आसि ॥१॥ विमलमइणावि तेणं पढिया विज्जा न सुट्ठ तरुणत्ते । परलोकपत्थिएणं पिउणा वुत्तो अहेवं सो ॥२॥ विज्जा सव्वजणाणं सुहया विप्पाण पुण विसेसेणं । जाएणवि पुत्तेणं किं निव्विज्जेण ! जं भणियं ॥३॥ "वरं गर्भश्रावो वरमृतुपु नैवाभिगमनं, वरं जातः प्रेतो वरमपि च कन्यैव जनिता । वरं वंध्या भार्या वरमगृहवासे प्रयतितं,न चाविद्वान् रूपद्रविण-बलयुक्तोऽपि तनयः ॥४॥" विज्जारहिओ उ तुमं सेविहिसि परं तओऽहमं मुत्तुं । सेविज्ज उत्तमजणं उत्तमगुणलाभमिच्छंतो ॥५॥ गुण-लाभलालसेणं गुणसंसग्गो सयावि कायव्वो । जं संकमंति लोए संगेण गुणा य अगुणा य॥६॥ जो जारिसेण मित्तिं करेइ अचिरेण तारिसो होइ । कुसुमेहिं सह वसंता तिलावि तग्गंधिया हुंति ॥७॥ अंबस्स य निंवस्स य दुण्हंपि समागयाइं मूलाइं । संसग्गीइ विणट्ठो अंबो निंबत्तणं पत्तो ॥८॥ इय नाउं दोसगुणे अहमुत्तमसंगमे तुमं वच्छ ! । उत्तमजण-संसग्गं करिज्ज निच्चं कुसलकामो॥९॥ पडिवन्नमिणं तेणं परलोगगए पिउंमि पयभट्ठो । सो चिंतइ नियचित्ते पढमं सेवेमि नीयजणं॥१०॥ तस्सोदर्कं नाउं उत्तमसेवं करेमि थिरचित्तो । इय चिंतिऊण पत्तो गामे एगंमि परदेसे॥११॥ तत्थ पयट्टो जरठक्कुरस्स सेवाइ पयइ-नीयस्स । विहिया तद्दासेणं पिंगलगेणं च सह मित्ती॥१२॥ घडिओ तहा सिणेहो तग्घडदासीइ मित्तसेणाए । भणिओ य ठक्कुरेणं दिवायरो अन्नदियहंमि ॥ १३ ॥ पहुणो वियारधवलस्स जयपुरे रायदारिगा होसु । कावि हु कहिंपि वित्ती जेणऽम्हवि होइ

कइयावि ॥१४॥ इय वुत्तो सो पत्तो दिवायरो तत्थ रायपमुहजणं । रंजवइ वयणविन्नाणकोसलेणं अणुदिणंपि ॥१५॥ अन्यदा च राज्ञा–'समानशीलव्यसनेषु सख्य'मिति तुर्यं वृत्तपादं विधाय भणितमिदम्–एईइ समस्साए आइल्ले अत्थसंगए पाए । तिन्निवि वियक्खणो लहु जो पूरइ तस्स देमि वरं ॥१६॥ भवियव्वयाइ केणवि न समस्सा पूरिया सुमइणावि । भणिया दिवायरेणं पइभागुणसायरेणेवं ॥१७॥ मृगा मृगैः संगमनुव्रजंति, गावश्च गोभिस्तुरगास्तुरंगैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशील-व्यसनेषु सख्यम् ॥१८॥ तो तुट्ठेण निवेणं भणिओ भो भद्द! देमि किं तुब्भ ? । सज्जणसिरोमणी सो जंपइ पहुकज्जसज्जमणो ॥१९॥ पहु! मह पहुणो जरठक्कुरस्स कप्पेसु वित्तिमविकप्पं । जं सामिपसाएणं दारिद्दं खिज्जइ खणेणं ॥२०॥ चुलसीइगामजोगस्स तस्स रण्णा विणा तदाभव्वं । अद्धट्ठमगामसएहिं संगयं सिरिउरं दिण्णं ॥२१॥ तत्तो ठक्कुरपासे पत्तो सो तस्स देइ गाममिमो । भणइ य अहंपि एक्कं तुह कज्जं किंचिवि करिस्सं ॥२२॥ अह पिंगलस्स दासस्स मज्जमत्तस्स दुट्ठभासिस्स । कुविएण ठक्कुरेणं जीहा-छेओ समाढत्तो ॥२३॥ तो सायरेण तोसायरेण एसो दिवायरेण लहुं । तेण वरेणं मोयाविऊण मेत्ती कया सहला ॥२४॥ अह जाया गब्भवई दासी तीसे मयूरमंसंमि । संपत्तो दोहलओ दिअस्स अक्कोसिउं कहिओ ॥२५॥ सो भणइ नत्थि अन्नो रण्णो की-लाकलाविणं मुत्तुं । ता तं चिय गिहपत्तं निहणिस्सं तुह सिणेहेणं ॥२६॥ अह भवणंगणपत्तं पुरओ दासीइ गिण्हिउं मोरं । बाहिं गंतूण इमं दिवायरो ठवइ देवकुले ॥२७॥ अन्नं मंसं दासीइ देइ सा पुण्णदोहला तुट्ठा । इत्तो य गवेसिज्जइ मोरो लब्भइ न जा ताव ॥२८॥ कुविएण दाविओ ठक्कुरेण पडहो मयूरवुत्तंतं । जो कहइ तस्स दिज्जइ दम्मट्ठसयं च अभयं च॥२९॥ अह न कहइ तो पच्छा नायंमि सरीरनिग्गहो दंडो । सोऊण इमं चित्तंमि चिंतए मित्तसेणावि ॥३०॥ संपइ कहिज्जमाणे लाभो पच्छा उ निग्गहो

होही । तत्तो वरं इयाणिं कहेमि तो कहियमेयाए ॥३१॥ रुट्ठो य ठक्कुरो माहणस्स पुण पडहगंमि वज्जंते । कहिउं सब्भावं पिंगलस्स गेहंमि स निलुक्को ॥३२॥ तो ठक्कुरेण कहियं को तं लहु लहइ जंपए दासो । देव ! लहेमि अहं तो दिवायरो तेण आणीओ ॥३३॥ अविय–अणुवकए उवयारं कुणंति जं तं जए सलहणिज्जा । उवयारिणि अवयारीण पुण न नामंपि घित्तव्वं ॥३४॥ अह ठक्कुरो पयंपइ कयग्घनिलओ दिवायरस्स लहुं । उप्पाडह नयणाइं छिंदह हत्थे तहा पाए ॥३५॥ जं आणवेइ देवो तं करे इ-य पयंपए दासो । विण्णवइ परियणो देव ! खमसु अवराहमम्हमिमं ॥३६॥ न खमेइ ठक्कुरो परियणेण भणियं पुणोऽवि वयण-मिमं । जं आणवेइ देवो दव्वं देमो बहुंपि तयं ॥३७॥ सो भणइ न होइ इमं तो पुणरवि परियणस्स निब्बंधे । भणइ इमो जइ एवं ता तं चिय मोरमाणेऊ ॥३८॥ तो झत्ति अप्पिओ आणिऊण मोरो इमस्स विप्पेण । अह तेण दिओ भणिओ तुह अवराहो इमो खमिओ ॥३९॥ पुण एवं मा काहिसि पडिवन्नमिणं दिवायरदिएण । दिट्ठो दोसो खलसंगमेत्ति सो निग्गओ तत्तो ॥४०॥ पत्तो समग्गमंगलनिलए मंगलउरे जणो जत्थ । देहावयवं मोत्तुं वाहं अन्नं न याणेइ ॥४१॥ तत्थऽत्थि पुण्णचंदो राया पणययण-कुमुयवणचंदो । पडिवक्खअन्नकंदो वरनीइलयाइ गुरुकंदो ॥४२॥ गुणचंदो तस्स सुओ विस्ससस्सवि विस्सुओ बहुसुएऽवि । उत्तमगुणत्ति तो तं दिवायरो सेवए कुमरं ॥४३॥ कुणइ मणोरहदत्तेण पयइविसिट्ठेण सिट्ठिणा सद्धिं । पीई पणंगणाए वसंत-सेणाए तह एसो ॥४४॥ अह अण्णया कुमारो हरिओ विवरीयसिक्खतुरएण । तस्साणुमग्गलग्गो दिवायरो धाविओ रण्णे ॥४५॥ वच्चंतेणं तेणं पक्काऽऽमलगाइ तिन्नि गहियाणि । खीरामलगाणि लहुं कसवट्टीए य खित्ताणि ॥४६॥ अह निव्विण्णकुमारेण मुक्का वग्गा ठिओ तुरंगो सो । अविणीओत्ति सहसा परिचत्तो जीविएणावि ॥४७॥ अह दिट्ठो कुमरेणं दिवायरो दोऽवि तो नियत्तंति ।

सपुराभिमुहं कुमरेण जंपिओ तो दिओ एवं ॥ ४८ ॥ आणित्तु कुओऽवि जलं पायह अहवा जलंजलिं दिज्ज । अइतिसियस्स उ पाणा वयंस ! वच्चंति मेऽवस्सं॥४९॥ तत्तो दिवायरो तरुवरंमि चडिउं निएइ जा सलिलं। सद्दूलसदरुद्दं ता पिच्छइ सव्वओ रण्णं॥५०॥ तुरियं ओयरिऊणं घित्तुं बाहाहिं रायअंगरुहं । जा चलिओ ता कुमरो कंठागयजीविओ जाओ ॥ ५१ ॥ सरिऊण तओ तेणं एगं आमलगमप्पियमिमस्स । आसासिओ य तेणं पुणोऽवि बीयं पुणो तइयं ॥५२॥ वरआसवारपमुहं मिलियं निवपेसियं तओ सिण्णं । रण्णा महुस्सवेणं नयरंमि पवेसिओ कुमरो ॥५३॥ तो तेण चिंतियं नत्थि मुल्लमेयस्स आमलगतिगस्स । जइ न कयग्घो रे जिय ! ता मा विसरेसु सयकालं॥५४॥ कालेण निवो जाओ गुणचंदो जणियजणमणाणंदो । तेण य मंती ठविओ दिवायरो सायरं भणिउं ॥५५॥ वच्चइ सुहेण कालो दियस्स तह तेण सेट्ठिणा पीई । गणियाए य विरूढा उत्तमसंगयमजिज्झं हि ॥५६॥ संपुण्णाइं अंतेउराइं पवराइं रायमंतीणं । रायस्स सुओ जाओ रूवेणं सुरकुमारोव्व ॥५७॥ सो पुरिसवग्गुराए परियरिओ पायघग्घररवेणं । रमणीओ रमणत्थं वहुसो वच्चेति सच्चिवगिहे ॥५८॥ चिंतइ मंती एवं जइ राया खमइ मज्झ गुरुदोसं । मण्णामि उत्तमत्तं इमस्स तोऽमुं परिक्खेमि॥५९॥ अह अण्णदिण्णे मंती गिहागओ तेण लद्धलक्खेण । पच्छन्नं भूमिहरे नेऊण सुहेण संठविओ ॥६०॥ भोयणसमए रण्णा कुमरो सद्दाविओ नविय दिट्ठो । तो तस्स मूलसुद्धी कारविया भाणुउदयाओ ॥६१॥ कहियं च परियणेणं देव-कुमारोव्व देव ! कुमरो सो । पविसंतो मंतिगिहे दिट्ठो न य नीहरंतो य ॥६२॥ पुच्छावियं च रण्णा जंपइ मंती इहागओ नवरं । तइयावि पडिनियत्तो पडिवण्णमिणं निवेण तओ ॥६३॥ दावाविओ य पडहो इण्हिं सुद्धिं कहेह कुमरस्स । लेसेणवि पुण नाए पच्छा सारीरिओ दंडो ॥६४॥ जाओ जणप्पवाओ जह मंतिगिहा न निग्गओ कुमरो । तो भीउव्व मणोरहदत्तसमीवे गओ सच्चिवो,

॥६५॥ कयसम्माणो पुट्ठो य तेण सो कहइ मज्झ भज्जाए। गब्भवईए कुमरस्स आमिसे दोहलो जाओ ॥६६॥ उम्मत्तेणेव मए क-ज्जाकज्जं अचिंतिउं तत्तो। ही अप्पवेरिएणं कुमरो वावाइओ रभसा ॥६७॥ अविय–सगुणमपगुणं वा कुर्वता कार्यजातं, परिणति-रवधार्या यत्नतः पंडितेन। अतिरभसकृतानां कर्म्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥६८॥ वरमित्त! कहसु संपइ किं कायव्वंति? तो कहइ सिट्ठी। मा कुणसु इत्थ संकंपि सव्वमेयं भलिस्सामि॥६९॥ अह उट्ठिऊण मंती वसंतसेणाए मंदिरं गंतुं। साहइ तहेव तं चिय तीइवि सिट्ठिव्व पडिभणियं ॥७०॥ अच्चायरेण पडहे ठाणे ठाणंमि वज्जमाणंमि। सिट्ठी विसिट्ठसत्तो नियचित्ते चिंतए एवं ॥७२॥ निरर्थका ये चपलस्वभावा, यास्यंति सद्यः स्वयमेव नाशम्। त एव यांति क्रिययोपयोगं, प्राणाः परार्थे यदि किं न लब्धम्? ॥७२॥ इइ चिंतिऊण छित्तो पडहो सो तेण तो निवनरेहिं। नीओ नरिंदपासे तप्पुट्ठो जंपए एवं ॥७३॥ पहु! इह पत्तेण मए कुमरं घेत्तूण ओयरंतेण। पक्खलियदद्दरेणं दलिओ एसो हयासेणं ॥७४॥ जावेयं कहइ इमो गणियावि तहेव ताव संपत्ता। कहइ इअ कुमरकहं कहेमि नरवर! निसामेहि॥७५॥तिलयावसरे इहमागयाइ कुमरो कडीइ मे गहिओ। सहसा पक्खुलियाए निहओ मम्माहओ एसो॥७६॥ भणइ निवो एस वणी कुमरो निहओ मए कहेइ इमं। सा भणइ एस वुड्ढो तो जंपइ वाउलो एसो॥७७॥ राया चिंतइ मइमं एगो पुत्तो कहं हओ दोहिं?। तो आहूओ मंती रण्णा पुट्ठो किमेयंति? ॥७८॥ भणियं दिवायरेणं इमं वि-सिट्ठाण नणु विसिट्ठत्तं। राया पभणइ एयं न मुणेमि फुडक्खरं कहसु ॥७९॥ जंपइ मंती पत्तीइ वइयरेणं मए हओ कुमरो। एएसिं पुण दुण्हवि संरंभो एस मज्झ कए ॥ ८० ॥ भणियं च परियणेणं पुरिसाहम! निवपसायदुल्ललिय!। धिद्धी निहओ किह ते? देवाणवि दुल्लहो कुमरो ॥८१॥ रण्णा वुत्तं जो कोऽवि एयमकोसए मम अरी सो। सिट्ठी गणिया य तओ जंपंति महापसाउत्ति

॥८२॥ रण्णा भणिओ मंती पविट्ठमामलगमित्तिएणेगं । एवंति भणिय तत्तो दिवायरो नियगेहे पत्तो ॥ ८३ ॥ कयमयकिच्चो राया कमेण माणइ तहेव रज्जसिरिं । उचियसमएवि मंती न एइ तो तग्गिहंमि गओ ॥ ८४ ॥ सचित्रविहिओवयारो जंपइ राया भुयाहिं तं घेत्तुं । पत्थेमि किंपि जइ मह दाहिसि अभयंति तो भणइ ॥ ८५ ॥ विस्सरिओ मह कुमरो तुमंपि विस्सारिऊण मह देसु । तारिसियच्चिय वीसत्थयत्ति तो जंपए मंती ॥८६॥ उत्तमसत्तोसि तुमं उत्तमजणगणसिरोमणी तंसि । को अन्नो तुह सरिसुत्ति जंपिउं उट्ठिओ सहसा ॥८७॥ सव्वालंकारविभूसियं तु काउं दिवायरो तत्तो । आणेऊणं मिल्हइ निवउच्छंगे निवंगरुहं ॥८८॥ रायावि विम्हइयमणो भणइ किमेवंति ? तेण वुत्तंतो । आमूलाओ सव्वो सिट्ठो परितुट्ठचित्तेण॥८९॥ राया जंपइ वरमंति ! केरिसी होज्ज मज्झ उत्तमया ? । आमलगकित्तणे(कीयत्ते)णं उच्छं छल(वलि)ओ अथक्के जो ॥९०॥ एसो सिट्ठी गणिया उत्तमत्तं लहंति निब्भंतं । अणुवकएऽविहु तइया पडिवन्नं जेसि निव्वडियं ॥९१॥ मा भणसु देव ! एवं सचिवो जंपइ जगुत्तमो तंसि । एवं पेम्मपराणं सुहेण तेसिं दीणा जंति ॥९२॥ अह अन्नदिणे मंती चिंतइ चित्तंमि पच्छिमनिसाए । मण्णेमि होज्ज कत्थवि नूणं सव्वोत्तमो कोऽवि ॥९३॥ विहिया उत्तमसेवा संपइ सव्वोत्तमंपि सेवेमि । जाणामि जइ कहंपिहु इय सुहचिंताइ गमइ निसिं ॥९४॥ तस्स पडिबोहसमयं नाउं नाणेण नयरउज्जाणे । कयभवियजणाणंदो आणंदो आगओ सूरी ॥९५॥ तत्तो मंती पत्तो बहुभत्तिजुओ नमित्तु गुरुपाए । समए विण्णवइ इमं साहसु सव्वोत्तमं मज्झ॥९६॥ वागरइ गुरू एयं जइ नाउं महसि भो महाभाग ! । तो मित्तत्तयनायं सुणसु तुमं सावहाणमणो ॥९७॥ नयरंमि खिइपइट्ठे जियसत्तुनिवेण सोमदत्तक्खो । दक्खोत्ति कओ मंती पुरोहिओ चिंतइ स एवं ॥९९॥ काके शौचं द्यूतकारे च सत्यं, सर्प्पे क्षांतिः स्त्रीषु कामोपशांतिः । क्लीबे धैर्यं मद्यपे तत्त्वचिंता, राजा

मित्रं केन दृष्टं श्रुतं वा ?॥९९॥ को नरवइंमि रुट्ठे मज्झ परित्तायगो हविज्जत्ति। धीमंतेणं तेणं मित्तत्तयमप्पणो विहियं ॥१००॥ तत्थेगो सहमित्तो लालिज्जइ पइदिणं पगिट्ठेहिं। वत्थाहरणविलेवणपाणासणखाइमाईहिं॥१०१॥ बीओ उ पव्वमित्तो सो तिहिपव्वूसवे निमंतित्ता। गाढं संमाणिज्जइ मल्लालंकारमाईहिं ॥१०२॥ तइओ पणाममित्तो खत्तियपुत्तो पहाणतरसत्तो। तस्स पणामो किज्जइ महुरालावो य भत्तीए ॥ १०३ ॥ कुविओ य अन्नदियहे राया मंतिस्स कम्मिवि विणासे। अणिवत्तिओ य कोवो नाओ अणेण निवइस्स ॥१०४॥ तो भयभीओ रत्तिं एगागी निग्गओ नियगिहाओ। दीणमुहो संपत्तो गिहे लहुं निच्चमित्तस्स ॥१०५॥ रुट्ठो राया मह अज्ज तुब्भ गेहे खिवामि विसमदसं। जाणिज्जइ खलु मित्ती विहुरे संधीरयंताणं ॥ १०६ ॥ सहमित्तो भणइ इमं मित्ती संपइ न अम्ह ईसिंपि। ता मित्ती ताविक्कं जाव न नरवइभओ हुंतो ॥१०७॥ किंच तुहिकस्स कए अप्पं घाएमि किहणु सकुडुम्बं ?। गच्छसु अन्नत्थ लहुं खणमवि मा इत्थ चिट्ठेसु ॥१०८॥ इय निट्ठुरवयणेणं तेणं अविमाणिओ नियमणंमि। चिंतइ मंती तत्तो माणसदुक्खेण संतत्तो ॥१०९॥ जस्स कए नहु गणियं गम्मागम्मं च कज्जऽकज्जं च। भक्खाभक्खं च हहा अवसाणं एरिसं तस्स ॥ ११० ॥ अइविमणदुम्मणो कंपमाणगत्तो भएण तरलच्छो। तो सोमदत्तमंती गिहे गओ पव्वमित्तस्स ॥१११॥ सोऽविहु जंपइ पेम्मं पयामयंतुव्व संकिओ हियए। हा मित्त ! हिययवल्लह ! दीसइ किं ते दसा विसमा ?॥११२॥ गग्गयसरेण तेणवि सिट्ठं रुट्ठो अईव मह राया। तो तुह गेहनिलुक्को लंघेमि इमं महावसणं ॥११३॥ अवगयतत्तेण तओ पडिभणियं तेण पव्वमित्तेणं। कंदंतेणं मित्तीइ निक्कयं काउकामेणं ॥११४॥ पव्वेसु तेसु तेसुं आजंमकएहिं नेहसारेहिं। सक्कारणसम्माणणसंभासणआसणाईहिं ॥ ११५ ॥ न भवामि तुब्भ अरिणो वयंस ! सव्वस्ससंपयाणेऽवि। तुब्भ कए अप्पंपि हु चए कुडुंबं तु

किह काहं ? ॥११६॥ चिरकालवल्लहो तं कुडुंबमवि वल्लहं इमं मज्झ । ता वग्घदुत्तडीसंकडंमि पडिओमि कह होहं ? ॥११७॥ एएहिं बालगेहिं अहमम्हि सकीडिओ पलासोव्व । तो तेसि कुणसु करुणं कत्थवि अन्नत्थ तं वयसु ॥११८॥ सक्कारिओवि एसो निराकओ तग्गिहाउ नीहरिओ । अहवा दइवे रुट्ठे को नाम न होज्ज विवरीओ ? ॥ ११९ ॥ आचचरं च अणुगम्म पव्वमित्ते गयंमि सो मंती। चिंतइ नियचित्तेवं वसणावडिओ निरालंबो ॥१२०॥ जेसि मए उवयरियं दुण्हवि तेसिं इमो परीणामो। सव्वोपायविहूणो संपइ गच्छामि किं सरणं ? ॥१२१॥ अज्जवि पणाममित्तं सरामि तत्थवि न अत्थि पच्चासा। वायापणाममित्ता मित्ती वयणेण सह जम्हा ॥१२२॥ अहव विगप्पेहिं अलं निग्गइओऽहं तमेव गच्छामि । उत्तमपुरिसो सो खलु खलिही मह आवई एया ॥१२३॥ इय चिंतिऊण तत्तो पणाममित्तस्स मंदिरे पत्तो । अब्भुट्ठिऊण वुत्तं ससंभमं सागयं तेण ॥१२४॥ पुट्ठं च सायरेणं किं दीसइ एरिसी अवत्था भो ? । कज्जं च मह कहिज्जउ गुरुयंपि हु जेण तं काहं ॥१२५॥ सो सोमदत्तमंती सोमसुओ कहइ मह निवो कुविओ । साहिज्जं कुणसु तुमं इमस्स सामीचयंतस्स ॥१२६॥ सो भणइ तुह रिणत्तो विणयपणामेहिं तेहिं तेहिं अहं। संपइ पुण साहिज्जं काउं निरिणो भविस्सामि ॥१२७॥ मा बीहिसि एसोऽहं तुह पिट्ठीरक्खगो मइ जियंते । तुह रोमस्सवि अहियं सक्कोऽवि न सक्कए काउं ॥१२८॥ पिट्ठुत्तंसियतूणो धिज्जीकयधणुहविहियटंकारो । चलिओ पणाममित्तो पुरोहियं तं पुरो काउं॥१२९॥ पत्तो सो तेण समं पुरोहिओ मणसमीहियं ठाणं । तत्थवि अणुहवइ सुहं निस्संको सुबहुं कालं॥ १३० ॥ इत्थोवणयं निसुणसु जीवो भो सोमदत्तमंतिसमो । सहमित्तमित्तसरिसो जीवस्स इमो हवइ देहो ॥१३१॥ सो कम्ममहीवइनिस्सियाइ मरणावईइ जीवेण। सद्धिं पयंपि न चलइ सुचिरंपि हु लालिओ अहमो ॥१३२॥ तह पव्वमित्ततुल्ला सव्वेवि य सयणबंधवा हुंति । ते कंदंता पिइवणभूमिं

मंतुं नियत्तंति ॥१२३॥ जो पुण पणाममित्तो धम्मो सो सम्मकारणमवंझं । परलोगपत्थिएणं वच्चइ जीवेण जो सद्धिं ॥ १२४ ॥ सव्वोत्तमो महायस ! धम्मो सव्वन्नुदेसिओ इत्थ। सो सव्वसंगचागाउ सिज्झए सिवसुहत्थीणं ॥१२५॥ आयन्निऊण एयं सम्मं पडिवोहिऊण पुहइवइं। सहुत्ते संठविउं दिवायरो गिण्हए दिक्खं ॥१२६॥ पुव्विं उत्तमसेवं पच्छा सव्वोत्तमंपि सो धम्मं । काउं नरसुररिद्धिं पाविय तो सिवसुहं लहिही ॥१२७॥ एवं उत्तमसंगमिक्कसुहयं सव्वोत्तमाराहयं, सोऊणं च दिवायरस्स चरियं संवेगसोक्खालयं । भो भव्वा ! ववहारसुद्धिनिरया सेवेह संते सया, जं भुत्तुं सुरसुक्खमक्खयसुहं पावेह मोक्खं लहुं ॥१२८॥ उत्तमसेवायां दिवाकरकथा ॥ एवं कुमित्रसुमित्रसंसर्गफलं दृष्टांतमुपदर्श्य सत्संगमुपदिशन्नाह—

तम्हा जे सीलसंजुत्ता, गीयत्था पावभीरुणो । ते मित्ता सव्वहा कुज्जा, इच्छंतो हियमप्पणो ॥१७०॥

तस्माद्—अनंतरोक्तकारणात् ये गृहस्थाः, किंविशिष्टाः ?—'शीलसंयुक्ताः' सदाचारवंतः सद्व्रता वा, तत्र—लोकापवादभीरुत्वं, दीनाभ्युद्धरणादरः । कृतज्ञता सुदाक्षिण्यं, सदाचारः प्रकीर्तितः ॥१॥ तथा—विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभंगेऽप्यसुकरम्। असंतो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ?॥१॥ तथा गीतार्थाः—सूत्रार्थवेदिनः साधवः, उक्तं च—"गीयं भन्नइ सुत्तं अत्थो पुण तस्स होइ वक्खाणं । गीएण य अत्थेण य गीयत्थं तं वियाणाहि ॥१॥ तत्पर्युपासनेन, श्रावका अप्युपचाराद् गीतार्थाः, प्रवचनकुशला इत्यर्थः,यदाह—"सुत्ते१ अत्थे य२ तहा उस्सग्ग३ ववाय४ भाव५ ववहारे६ । जो कुसलत्तं पत्तो पवयणकुसलो तओ छद्धा ॥१॥" तथा पापभीरवो—गाढकर्म्मबंधभीरुत्वेन तीव्रारंभत्यागिनः, तदुक्तं—"वज्जइ तिव्वारंभं कुणइ अकामो अनिव्वहंतो य । थुणइ निरारंभजणं दयालुओ सव्वजीवेसु॥१॥" तानेवं-

विधान् परमधार्म्मिकान् मित्राणि–विश्वासस्थानानि सर्व्वथा–मनोवाक्कायैः कुर्यात् इच्छन् उभयलोकपथ्यमात्मन इति, द्वारं १५ ॥

अधुना पंचदशं भोजनद्वारं विवृण्वन्नाह—

**तओ भोयणवेलाए, आगयाइ सुसावओ । पूइत्ता जहसत्तीए, गिहबिंबाणि वंदए ॥१७१॥**

ततो–न्याय्यव्यवसायानंतरं भोजनवेलायां मध्याह्नसमयरूपायां वा आगतायां–प्राप्तायां सुश्रावकः गृहबिंबानि यथाशक्त्या प्रागुवत् पूजयित्वा वंदते प्रसिद्धचैत्यवंदनविधिनेति ॥ ततश्च—

**ढोइत्ता अग्गकूरं तु, तओ साहू निमंतए । दिट्ठा नियघरे इंता, तओ गच्छिज्ज संमुहो ॥१७२॥**

निष्पन्नायां च रसवत्यां ढौकयित्वा अग्रकूरं–पुनर्गृहबिंबानामग्रे प्रधानशाल्योदनाद्याहारं ततः साधून्निमंत्रयते,अत्र च उक्तार्थ-वक्ष्यमाणार्थसंदर्शिका आवश्यकचूर्ण्युक्तेयं सामाचारी–जाहे देसकालो ताहे अप्पणो सव्वं सरीरस्स विभूसं अविभूसं वा काऊण साहुपडिस्सयं गओ निमंतेइ- भिक्खं गिण्हहत्ति, साहूणं का पडिवत्ती ?, ताहे अन्नो पडलं अन्नो भायणे पडिलेहेइ, मा अंतराइयदोसा ठवियगाइदोसा य भविस्संति, सो य पढमाए पोरिसीए निमंतेइ अत्थि य नमोकारइत्ता ताहे घिप्पइ, जइ नत्थि ताहे न घिप्पइ, तं धरियव्वयं होहित्ति, सो य जइ घणं लगिज्जा ताहे घेप्पइ, संचिक्खाविज्जइ, जो उग्घाडपोरिसीए पारेइ पारणगइत्तो अन्नो वा तस्स विसज्जिज्जइ, तेण सावएण सह गम्मइ, संघाडओ वच्चइ, एगो न वट्टइ, साहू पुरओ सावगो पच्छा, तो घरं नेऊण आसणेणं निमंतेति, जइ न निविट्ठा विणओ पउत्तो, ताहे भत्तपाणं सयं देइ, अहवा भायणं धरेइ भज्जा देइ, अहवा ठिओ अच्छइ,जाव दिण्णं, सावसेसियं च गिण्हियव्वयं, पच्छाकम्माइपरिहरणट्ठा, दाऊण वंदित्ता विसज्जेइ, अणुगच्छइ य जाव, जं च किर साहूणं न दिन्नं

तं सावएण न भोत्तव्वं, जहिं पुण साहू नत्थि तत्थ देसकालवेलाए दिसालोओ कायव्वो विसुद्धेणं भावेणं—जइ साहुणो हुंता तो मि नित्थारिओ होंतित्ति'। अथ साधवः स्वयमेवाष्टगोचरचर्याक्रमेणोचनीचगृहाण्यटंतः श्रावकेण निजगृहमागच्छंतो दृष्टास्ततोऽसौ गच्छेत् संमुखमिति ॥ गृहांतर्गतानां साधूनां प्रतिपत्तिपूर्वकं प्रतिलाभनविधिं पद्सूत्र्याऽऽह—

आसणेण निमंतित्ता, तओ परियणसंजुओ। वंदए मुणिणो पाए, खंताइगुणसंजुए ॥१७३॥
देसं खित्तं तु जाणित्ता, अवत्थं पुरिसं तहा। विज्जोव्व रोगियस्सेव, तओ किरियं पउंजए ॥१७४॥
संथरणंमि असुद्धं दुण्हवि गिण्हंतदिंतयाणऽहियं। आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥१७५॥
एवं देसं तु खित्तं तु, वियाणित्ता य सावओ। फासुयं एसणिज्जं च, देइ जं जस्स जोग्गयं ॥१७६॥
असणं पाणगं चेव, खाइमं साइमं तहा। ओसहं भेसहं चेव, फासुयं एसणिज्जयं ॥१७७॥
वत्थं पत्तं च पुत्थं च, कंवलं पायपुंछणं। दंडं संथारयं सिज्जं, अण्णं जं किंचि सुज्झइ ॥१७८॥

आदिशब्दान्मार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मचर्याणां परिग्रह ॥ १७३ ॥ देशं—मगधावंत्यादिकं साधुविहार-योग्यायोग्यरूपं क्षेत्रं—संविग्नभावितमभावितं वा, तुशब्दात् द्रव्यमिदं सुलभं दुर्लभं वा, अवस्थां—सुभिक्षदुर्भिक्षादिकां पुरुषं—आचार्योपाध्यायबालवृद्धग्लानसहासहादिकं च ज्ञात्वा 'विज्जोव रोगियस्स'त्ति वैद्यवद्रोगिणां, यथा किल भिषग् देशकालादि विचार्य व्याधिमतश्चिकित्सां करोति एवं श्रावकोऽपि ततः क्रियां—आहारादिदानरूपां प्रयुंक्त इति ॥ १७४ ॥ दानक्रियायामेवोत्सर्गाप-

वादप्रदर्शयानाह- संस्तरणे प्रासुकैषणीयाहारादिप्राप्तौ साधूनां निर्वाहे सति अशुद्धं-द्विचत्वारिंशद्दोषदूषितमाहारादि द्वयोरपि-ग्रहीतृदात्रोः अहितं-संसारप्रवृद्धेरल्पायुष्कतायाश्च हेतुत्वादपथ्यं स्यात्, यदागमः-"जो जह व तह व लद्धं गिण्हइ आहारउवहिमाईयं। समणगुणमुक्कजोगी संसारपवड्ढओ भणिओ ॥१॥" तथा-"कहं णं भंते! जीवा अप्पाउत्ताए कम्मं करंति?, गोयमा! पाणे अइवाइत्ता भवइ, मुसं वइत्ता भवइ, तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवइ, एवं खलु जीवा अप्पाउयत्ताए कम्मं करंति"त्ति, ते द्विचत्वारिंशद्दोषास्त्वमी-सोलस उग्गमदोसा सोलस उप्पायणाय दोसा उ। दस एसणाइ दोसा बायालीसा इह हवंति ॥१॥ आहाकम्मु१ देसिय२ पूईकम्मे य३ मीसजाए य४। ठवणा५ पाहुडियाए६ पाओयर७ कीय८ पामिच्चे९ ॥२॥ परियट्टिए१० अभिहडु११ ब्भिन्ने१२ मालोहडे य१३ अच्छिज्जे१४। अणिसिट्ठ१५ ज्झोयरए१६ सोलस पिंडुग्गमे दोसा ॥३॥ तत्र प्रथमदोषस्य आधाकर्म्माधःकर्म्मात्मघ्नात्मकर्म्मरूपाणि चत्वारि नामानि, तत्र यतिमाधाय-संकल्प्य कर्म्मषट्कायारंभेणाशनादिकरणमाधाकर्म्म१ एतद्दोषदुष्टं भुंजानः साधुरधःसंयमस्थानेभ्यः अधोगतौ वा क्रियतेऽनेनेत्यधःकर्म्म २ साधोः संयममात्मानमेतद्धंतीत्यात्मघ्नं३, एतद्भोजी साधुरष्टाप्यशुभानि कर्म्माणि बध्नाति प्रकारोत्यवचिनोति चेत्यात्मकर्म्म४, यदुक्तं भगवत्यां-"आहाकम्मं णं भुंजमाणे समणे किं बंधइ किं पकरेइ किं उवचिणाइ?, गोयमा! आहाकम्मं णं भुंजमाणे समणे निग्गंथे आउयवज्जाउ सत्त कम्मपगडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ हस्सकालठिइयाओ दीहकालठिइयाउ पकरेइ मंदाणुभावाओ तिव्वाणुभावाओ पकरेइ अप्पपएसग्गाओ बहुपएसग्गाओ करेइ, आउयं च णं कम्मं सिय बंधइ सिय नो बंधइ, अस्सायावेयणिज्जं च णं कम्मं भुज्जो२ उवचिणाइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं अणुपरियट्टइ, से केण-

आहार-
दोषाः

ट्ठेणं एवं वुच्चइ-आहाकम्मंणं भुंजमाणे जाव अणुपरियट्टइ?, गोयमा! आहाकम्मंणं भुंजमाणे आयाए धम्मं अइक्कमइ, आयाए धम्मं अइक्कममाणे पुढविकायं नावकंखइ जाव तसकायं नावकंखइ, जेसिंपि य णं जीवाणं सरीराइं आहारेइ ते जीवे नावकंखइ, से एएणट्ठेणं गोयमा! एवं वुच्चइ-आहाकम्मंणं भुंजमाणे जाव अणुपरियट्टइ''त्ति, तच्च लिंगेन-साधुवेषेण प्रवचनेन च-द्वादशांगी-काररूपेण यः साधर्म्मिकस्तदर्थाय कृतमाधाकर्म्म, तत्रायं कल्प्याकल्प्यविधिः-साध्वर्थमशनादि कर्तुमारब्धं तस्मिंश्च निष्ठितमकल्प्यं१, साध्वर्थं कृतमात्मनि निष्ठितं कल्प्यं२ आत्मार्थं कृतं साधौ निष्ठितमकल्प्यं३ आत्मार्थं कृतमात्मनि च निष्ठितं कल्प्यमेव४, किंच-साध्वर्थमुप्ताः शालयो यावत् द्विः खंडितास्तावत् कृता उच्यंते, तृतीयां तु वारामात्मार्थं खंडिताः पक्काश्च कल्प्यंते, यदि साध्वर्थं तृतीयवारां खंडिताः पक्कास्तु साध्वर्थमात्मार्थं वा (तदा) निष्ठां गतत्वान्न कल्प्यंते, एवं पानकादिष्वपि भावनीयं, यादृशादिभेदवक्तव्य-ताऽत्र पिंडनिर्युक्त्यादेरवसेयेत्युक्तो लेशतः प्रथमो दोषः १। औद्देशिकं तु द्वेधा-ओघतो विभागतश्च, तत्र दुर्भिक्षादेरुत्तीर्णस्य क-स्यचिद् गृहिणः स्वार्थं भक्ते पच्यमाने यः कश्चिदेष्यति तदर्थं कतिचिद्भिक्षाकल्पनमोघौद्देशिकं, तासु च स्वयोगेन पृथगनुद्धृतासु तदकल्प्यं, विभागौद्देशिकं तूद्दिष्टकृतकर्म्मलक्षणमूलभेदानां प्रत्येकमुद्देशसमुद्देशादेशसमादेशभेदचातुर्विध्याद् द्वादशधा, तत्र संखडि भक्तोद्धरितयावदर्थिकपापंडिश्रमणनिर्ग्रंथानां देयमिदमित्युद्देशनादुद्दिष्टौद्देशिकं ४ एवं यावदर्थिकाद्यर्थमेव दध्यादिव्यंजनेन मिश्री-कृते कृतौद्देशिकं ४ तथा तदर्थमेव चाग्नितापादिना पुनः संस्करणं कर्म्मौद्देशिकमिति २। उद्गमकोटिकणेनापि स्पृष्टं पूतिकर्म्म, तच्च द्वेधा-सूक्ष्मबादरभेदात्, तत्राधाकर्मिकगंधाग्निधूमादिस्पृष्टं सूक्ष्मं, तच्च न दुष्टं, इतरत्तूपकरणाहारभेदात् द्विधा, तत्राधाकर्म्मिकचुल्लयु-खादिस्थमुपकरणपूति, तच्च स्वयोगेन पृथक्कृतं कल्पते, द्वितीयं त्वाधाकर्म्माद्यविशोधिकोटिलवेनापि स्पृष्टं भक्तपानपूति, तथाऽऽधा-

कर्म्मकृतपाकदिनादूर्ध्वं,दिनत्रयं च पूति स्यात् ३। यावत्पाषंडिकं साध्वर्थमात्मार्थं च यत्पक्कं तत् त्रिधा मिश्रजातं ४। स्वस्थान-परस्थानाभ्यां परंपरानंतराभ्यां चिराचिराभ्यां च त्रिधा स्थापना,तत्र साध्वर्थमशनादेश्चुल्ल्युखादौ स्थापनं स्वस्थानस्थापना, अन्यत्रे-तरा, क्षीरादेः परंपरा, घृतादेरितरा, पूर्वकोटिं यावच्चिरा,गृहत्रयांतरे दीयमाना मिक्षा त्वचिरा,सा च न दुष्टा ५। प्राभृतिका द्विधा—साध्वर्थं बालकभोजनदानादेरर्वाक्करणात् परतः करणाद्वा सूक्ष्मा,विवाहादेस्त्वितरा ६। प्रादुष्करणं द्विधा—प्रकटकरणप्रकाशकरणभेदात्, तत्र तमश्छन्ने गृहे साध्वर्थं बहिश्चुल्लेर्देयस्य वा करणं प्रकटकरणं, तमःस्थस्य तु देयस्य कुड्यच्छिद्रेण मणिप्रदीपादिना वा उद्योतनं प्रकाशकरणं ७। साधोः स्वद्रव्येण तीर्थनिर्माल्यदानमस्तकगंधप्रक्षेपादिरूपेण परद्रव्येण गृहिसत्ककार्षापणादिना स्वभावेनावर्ज्जनार्थं धर्मकथादिना परभावेन मंखगीतादिना अशनादेः क्रयणाच्चतुर्धाक्रीतं ८। श्रमणार्थमुच्छिद्योद्धारेण गृहीत्वा ददतस्तैलदातृभगिनी-वदपमित्यकं ९। साध्वर्थं स्वद्रव्येणान्यद्रव्यादानं परावर्त्तितं १०। साध्वर्थं स्वग्रामादेरानीतमभ्याहृतं ११। जतुच्छगणादिनोपलिप्त-स्यापरिभोग्यकपाटादेर्व्वोद्घाटनमुद्भिन्नं १२। ऊर्ध्वाधउभयतिर्यक्षु मालभूमिगृहकुंभीगवाक्षादिभ्यः करदुर्ग्राह्यं ददतश्चतुर्धा मालाप-हृतं १३। कर्म्मकरादेराच्छिद्य—बलाद् गृहीत्वा स्वामिनृपस्तेनानां ददतामाच्छिद्यकं १४। बहुसाधारणं कर्म्मकरादियोग्यं हस्तियोग्यं च द्रव्यं तैरननुज्ञातं ददतस्त्रिधाऽनिसृष्टं १५। स्वार्थमधिश्रयणादिकृते यावदर्थिकपाषंडिकसाध्वर्थं पुनरधिकधान्यप्रक्षेपात्त्रिधाऽध्यवपूरकः १६ ॥ एषु चाधाकर्म्मपाषंडिकश्रमणनिर्ग्रंथकर्म्मौद्देशिकत्रयं आहारपूतिबादरप्राभृतिकामिश्राध्यवपूरकयोरंत्यौ द्वौ द्वौ भेदौ चावि-शोधिकोटिः, एषा च सहस्रघातिविषवत्सहस्रांतरिताऽप्यकल्प्या, एतद्युक्तं पात्रमपि करीषाघृष्टमकृतलेपत्रयं च न कल्पते, शेषा तु विशोधिकोटिरात्मार्थीकृता कल्पत इत्यर्थः,इत्युक्ता उद्गमदोषाः। उत्पादनादोषास्त्वमी—धाई१ दूइ२ निमित्ते३ आजीव४ वणीमगे५

तिगिच्छा य ६। कोहे७ माणे८ मायाए९ लोभे य१० हवंति दस एए ॥१॥ पुव्विपच्छासंथव११ विज्जा१२ मंते य१३ चुण्ण१४ जोगे य १५। उप्पायणाय दोसा सोलसमे मूलकम्मे य१६ ॥ २ ॥ तत्र क्षीर१ मज्जन२ मंडन३ रमणां४ कथात्रीत्व५ करणाद् धात्रीपिंडः१ स्वग्रामादौ प्रकटप्रच्छन्नसंदेशकथनाद् दूतीपिंडः२ अतीतादिकाले लाभालाभादिकथनान्निमित्तपिंडः३ जातिकुलगणकर्म्मशिल्पप्रधानेभ्यस्तद्गुणमात्मानं शंसत आजीविकापिंडः४ बौद्धादिभक्तानामात्मानं तद्भक्तं दर्शयतो वनीपकपिंडः५, वमनविरेचनादि सूचयतः कारयतश्च सूक्ष्मेतरचिकित्सापिंडः ६ विद्यातपःप्रभावनादिना दायकं भापयतो घृतपूरक्षपकस्येव क्रोधपिंडः७ भक्ताद्यर्थं गृहिणोऽभिमानमुत्पादयतः सेवतिक्षुल्लकस्येव मानपिंडः८ विविधवेषादि कुर्वाणस्यापाढभूतेरिव मायापिंडः९ मोदकाद्यर्थं लोभेन बहु पर्यटतः केसरकसाधोरिव लोभपिंडः१० जननीजनकश्वशुरश्वश्रूद्वारेण परात्मवयोऽनुरूपं संबंधं घटयतः पूर्वपश्चात्संस्तवपिंडः११ जपहोमादिसाध्यां विद्यां१२ पाठमात्रसिद्धं मंत्र१३ चूर्णान्यंतर्धानादिफलानि१४ योगांश्च सौभाग्यादिकरान् प्रयुंजानस्य विद्यादिपिंडाः१५ गर्भस्तंभनादि कुर्वतो मूलकर्म्म१६,इत्युत्पादनादोषाः ॥ एषणादोषाः पुनरमी—संकिय१ मक्खिय२ निक्खित्त३ पिहिय४ साहरिय५ दायगु६ म्मीसे ७। अपरिणय८ लित्त९ छड्डिय१० एसणदोसा दस हवंति ॥१॥ तत्राधाकर्मादिशंकाकलुषितस्य ग्रहणभोगाभ्यां चतुर्धा शंकितं, तत्र द्वितीयचतुर्थभंगौ निःशंकितभोगाच्छुद्धौ, शेषयोस्तु यं दोषं शंकते तमापद्यते१ म्रक्षितं द्विधा—सचित्ताचित्तम्रक्षितभेदात्, तत्राद्यं करमात्रयोर्भूदकवनैर्म्रक्षणात्त्रिधा, द्वितीयं तु गर्हितागर्हितभेदात् द्विधा, तत्र गर्हितं मज्जाऽसृग्मूत्रादिभिर्म्रक्षणात् लोकागममध्ये निंदितं, एकेन्द्रियादिसत्त्वसंभूतियुक्तदधिद्राक्षापानकादिभिस्त्वगर्हितं २ भूदकाग्निमरुत्प्रत्येकानंतवनस्पतित्रसेष्वनंतरपरंपरेषु स्थापितं निक्षिप्तं३ सचित्ताचित्तपिधेयपिधानाभ्यां चतुर्धापिहितं, तुर्यभेदे तु

गुरुलघुभेदाच्चतुर्भंगी, तत्र द्वितीयतुर्यौ लघुपिधानत्वात् शुद्धौ४ मात्रकादयोग्यमन्यत्र संहरतः सचित्ताचित्तपदाभ्यां चतुर्द्धा संहृतं, तुर्यभेदे पुनः स्तोकबहुत्वाभ्यां चतुर्भंगी, तत्र चाद्यतृतीयभंगौ स्तोकस्य संहरणात् शुद्धौ ५ बालवृद्धाप्रभुपंडककंपमानक्षुरितांधमत्तोन्मत्तच्छिन्नकरचरणनिगडितांदुकत्वग्दुष्टपेपकादिषट्कायप्रमर्दकगुर्विणीबालवत्साद्यनेकधा तुद्यतो दायकदोषः ६ सचित्तेन मिश्रमुन्मिश्रं७ अपरिणतं द्रव्यभावभेदात् द्विधा, तत्राद्यमधुनाधौततंदुलोदकादि, भावापपरिणतमेकस्य साधोर्मनसि शुद्धं, नत्वितरस्य८ दध्यादिलिप्तकरमात्राभ्यां सावशेषनिरवशेषद्रव्येण चाष्टधा लिप्तं, अत्र चावशेषद्रव्यत्वात् प्रथमतृतीयपंचमसप्तमाः शुद्धाः ९, परिशाटियुक्तं ददतो मधुबिंदूदाहरणवद् बहुदोषकृत् छर्दितं१० इत्युक्ता द्विचत्वारिंशद्दोषाः, उत्सर्गतस्तावदेतद्दोषदुष्टं ग्रहीतृदात्रोरहितमेव, अपवादतस्तु 'आउरे'त्यादि, आतुरो–रोगी तस्य दृष्टांतस्तेन, यथा हि रोगिणः काममप्यवस्थामाश्रित्य पथ्यमप्यपथ्यं स्यात्, किंचित् पुनः समाश्रित्यापथ्यमपि पथ्यं, एवमत्र 'तं चेव'त्ति तदेवाशुद्धमपि गृहीतृदात्रोर्हितं–अवस्थोचितत्वात्पथ्यं स्यात्, केत्याह–असंस्तरणे–अनिर्वाहे दुर्भिक्षग्लानाद्यवस्थायामित्यर्थः, अयमभिप्रायो–यद्यप्येतत्कर्मबंधहेतुर्वर्णितं तथापि 'सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायाओ पुणोवि सोही नयाविरई ॥१॥' इत्याद्यागमाभिज्ञैर्यथावसरं बहुतरगुणलाभकांक्षया गृह्यमाणं दीयमानं च न दोषाय, तथा चागमः–"अप्पेण बहुमेसेज्जा, एयं पंडियलक्खणं। सव्वासु पडिसेवासु, एयं अट्ठपयं विऊ ॥१॥ काहं अच्छित्तिं अदुवा अहीहं, तवोवहाणेसु य उज्जमिस्सं। गणं व नीईइ व सारविस्सं, सालंबसेवी समुवेइ मुक्खं ॥२॥"ति, दायकस्य तु यथा–"समणोवासयस्स णं भंते! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ?, गोयमा! बहुतरिया से निज्जरा कज्जइ, अप्पतराए से पावे कम्मे कज्जइ'त्ति गाथार्थः ॥१७५॥ एव-

मित्यातुरदृष्टांतेन पूर्वोक्तं देशं क्षेत्रं च, तुशब्दादवस्थां पुरुषं च विज्ञाय पुनः श्रावकः यस्य ग्लानबालादेर्यद्योग्यं प्रासुकं-निर्जीवं एषणीयं च उद्गमादिदोषरहितं तद्ददातीति ॥१७६॥ अशनं-सूपौदनादि पानकं-सौवीरादि खादिमं-शुष्कभक्षिकादि स्वादिमं-नागरमरिचादि, तथा औषधम्-एकमेव द्रव्यं भेषजं-बह्वौषधसंयोगः, पुनः प्राशुकादिग्रहणं शुद्धदानस्यैवैकांतनिर्जराहेतुत्वख्यापनार्थं, यदुक्तं प्रज्ञप्त्यां-"समणोवासगस्स णं भंते! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ?, गोयमा! एगंतसो निज्जरा कज्जइ, नत्थि य से पावे कम्मे कज्जइ"त्ति॥१७७॥ एवं देहोपकारहेतुदानमुपदर्श्य संयमोपकारहेतुदानप्रदर्शनायाह—वस्त्रादीनां तावत् स्वरूपं प्रमाणं ग्रहणकारणं च किंचिदुच्यते, तत्र वस्त्रं-आच्छादनं क्षौमिकौर्णिककल्पत्रयादिरूपं, एषां तु प्रमाणं 'कप्पा आयप्पमाणा अड्ढाइज्जा य वित्थडा हत्था। दो चेव सुत्तिया उण्णिओ य तइओ मुणेयव्वो ॥१॥' कारणं पुनः 'तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाणमरट्ठया चेव॥१॥' तथा पात्रं द्विधा-पतद्ग्रहो मात्रकं च, तच्च 'तुंबयदारुयमट्टीपत्त कंसाइदोसपरिमुक्कं। उत्तममज्झजहन्नं जईण भणियं जिणवरेहिं ॥१॥ तिन्नि विहत्थी चउरंगुलं च पत्तस्स मज्झिमपमाणं। इत्तो हीण जहन्नं अइरेगयरं तु उक्कोसं॥२॥ उक्कोसे तिसमासे दुगाउमद्धाणमागओ साहू। भुंजइ एगट्ठाणे एयं किर मत्तगपमाणं ॥३॥ छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पन्नत्तं। जे य गुणा संभोगे भवंति ते पायगहणेऽवि॥४॥ आयरिए य गिलाणे पाहुणए दुल्लहे सहसलाभे। संसत्तभत्तपाणे मत्तगगहणं अणुन्नायं॥५॥' पुस्तकं तु पंचविधमप्यापवादिकं, यथा-गंडी१ कच्छवि२ मुट्ठी३ संपुडफलए४ तहा छिवाडी य५। घिप्पइ पुत्थयपणगं कालियनिज्जुत्तिकोसट्ठा ॥१॥' तत्र 'बाहुल्लपुहुत्तेहिं गंडीपुत्थो उ तुल्लगो दीहो। कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो॥२॥ चउरंगुलं तु दीहो वट्टागिइ मुट्ठिपुत्थगो अहवा। चउरंगुलदीहोच्चिय चउरंसो होइ

विन्नेओ॥३॥ संपुड दुगाइफलओ४ छिवाडि तणुपत्तओसिओ होइ ।अहवा दीहो हस्सो य अप्पपिंडो य पुण पिहुलो॥४॥' कंबलमिति चिलिमिन्यादियोग्यं कंबलं, चिलिमिली तु पंचधा-सुत्तमई१ रज्जुमई२ वागमई चेव३ दंड४ कडमई य५ । पंचविह चिलिमिली पुण उवग्गहकरी भवे गच्छे ॥ १ ॥ हत्थपणगं तु दीहा तिहत्थरुंदोन्निया असइ खोमा । एयं पमाणगणणिक्कमिक्क गच्छं व जा वोदा ॥ २ ॥ सागारिय १ सज्झाए २ पाणिदय ३ गिलाण ४ सावय५ भए वा६ । अद्धाण७ मरण८ वासासु९ चेव सा कप्पई गच्छे ॥३॥ तथा पादप्रोञ्छनं-रजोहरणमौत्सर्गिकौत्सर्गिकादि,यथा-घणं मूले थिरं मज्झे, अग्गे मद्दवजुत्तया । एगंगियं अझुसिरं, पोरायामं तिपासियं ॥४॥ अथुल्लं मिउ पम्हं च, पडिपुण्णं हत्थपूरिमं । रयणीप्पमाणमित्तं, कुज्जा पोरपरिग्गहं ॥५॥ बत्तीसंगुल-दीहं चउवीसं अंगुलाइं दंडो से। अट्ठंगुला दसाओ एगयरं हीणमहियं वा ॥६॥ आयाणे१ निक्खेवे२ ठाण३ निसीयण४ तुयट्ट५-संकेए६ । पुव्विं पमज्जणट्ठा७ लिंगट्ठा चेव रयहरणं८ ॥७॥' दंडकस्तु पंचधा, यथा-डंडग१ विदंडए य२ लट्ठि३ विलट्ठी य ४ नालिया चेव ५ । वेणुमय वेत्त दारुय बहुअप्पअहागडो दंडो ॥८॥ विसमाइं वड्ढमाणाइं दस य पव्वाइं एगवन्नाइं । दंडेसु अपो-ल्लाइं समाइं सेसाइं असुहाइं ॥९॥ लट्ठी आयपमाणा१ विलट्ठि चउरंगुलेण परिहीणा २ । दंडो बाहुपमाणो३ विदंडओ कक्खमित्तो य४ ॥१०॥ लट्ठीए चउरंगुल समूसिया नालिया उ पंचमिया ५। नइपमुहजलुत्तारे तीए उ पमिज्जए सलिलं ॥११॥ वज्झइ लट्ठीए जवणिया विलट्ठीइ कत्थइ दुवारं । घट्टिज्जए उवस्सयतणयं तेणाइरक्खट्ठा ॥१२॥ उउबद्धंमि उ दंडो विदंडए घिप्पए वरिसयाले । जं सो लहुओ निज्जइ कप्पंतरिओ जलभएणं ॥ १३ ॥ दुपयचउप्पयबहुपयनिवारणट्ठाऽऽयरक्खणगहेउं । अद्धाणमरणक्षयवुड्ढवास-मवत्थंभणा कप्पे॥१३॥' तथा संस्तारक इति संस्तारकपट्टः कंबलमयः सोत्तरपट्टः शयनोपकरणं१,यथा-'संथारुत्तरपट्टा अड्ढाइज्जा य

आयया हत्था। दोण्हंपि उ वित्थारो हत्थो चउरंगुलं चेव ॥१४॥ अस्य चोपलक्षणत्वाद्रजोहरणोपरिवर्त्तिहस्तप्रमाणक्षौमिकौर्णिक-निषद्याख्यपट्टद्वयं च। पाणाइरेणुसारक्खणट्टया हौंति पट्टगा चउरो। छप्पइयरक्खणट्टा तत्थुवरिं खोमियं कुज्जा ॥ १ ॥ यद्वा अर्धतृतीयहस्तप्रमाणः काष्ठमयः संस्तारकः शय्या तु सर्वांगीणा, तथा अन्यदप्यौधिकौपग्रहिकभेदभिन्नं मुखवस्त्रिकादंडप्रोंछनकादिकं यत्किंचित् शुध्यति-संयमोपकारे वर्त्तते तदुपकरणं, इतरत्त्वधिकरणं, तदुक्तं-"जं वट्टइ उवयारे उवगरणं तं सि होइ उवगरणं। अइरेगं अहिगरणं अजओ अजयं परिहरंतो ॥१॥" त्ति, एवमेतत्सर्वमेवोपकरणमुद्गमादिदोपरहितं सुसंयतेभ्यः श्रावको ददातीति गाथार्थः ॥१७८॥ किमित्येतावत्सुपात्रदाने यत्न इत्यत आह—

जओ सुपत्तदाणेणं, कल्लाणं बोहि उत्तमा। देसिया सुहविवागंमि, अक्खाया दस उत्तमा ॥१७९॥

यतो-यस्मात् कारणात् सुपात्रदानेन कल्याणं-सुरमनुष्येषु विशिष्टविशिष्टतरसुखानुभवनं तथा बोधिश्चोत्तमा-प्रतिजन्मोत्तमधर्म्मप्राप्तिः स्यादिति शेषः, अस्मिन्नर्थे देशितानि सुखविपाके-एकादशांगस्य विपाकश्रुतनाम्नः सुखविपाकाख्ये द्वितीयश्रुतस्कंधे आख्यातानि दशाध्ययनरूपाणि उत्तमानि-प्रधानानि इति ॥ तान्येवाह—

सुबाहु१ भद्दनंदी य२ सुजाय३ वासव४ तहेव जिणदासा ५।
धणवई६ महब्बला७ भद्दनंदी८ महचंद९ वरदत्ता१० ॥१८०॥

'सुबाहु'त्तिवक्तव्यताप्रतिपादिका ग्रंथपद्धतिः सुबाह्वाख्यानकं, एवमन्यान्यपीत्यक्षरार्थः। भावार्थस्तु तच्चरितेभ्योऽवसेयः॥ तत्रेदं सुबाहुचरितं-अत्थित्थ भरहखित्ते नयरं नामेण हत्थिसीसं तु। जं वरसंखं कमलालयं व वरमणिइकलियं च ॥१॥ उत्तर-

पुरच्छिमाए दिसाइ तत्थत्थि पवरमुज्जाणं । पुप्फकरंडगनामं सव्वोउगरुक्खरमणीयं ॥२॥ सन्निहियपाडिहेरस्स तत्थ जक्खस्स अत्थि आयतणं । कयमालगनामस्स उ सेविज्जंतं बहुजणेणं ॥३॥ वरचित्तो बहुसत्तो लावण्णमओ अमुक्कमज्जाओ । उदहिव्वऽदीणसत्तू तत्थ पुरे अत्थि पुहइवई ॥४॥ देवीणं तु सहस्सं पवरं तस्सऽत्थि तासुवि विसिट्ठा । नामेण धारिणी तह समग्गगुणधारिणी देवी ॥५॥ राया अदीणसत्तू दीणीकयसव्वसत्तुसंताणो । तीए सह विसयसुहं सेवंतो गमइ बहुकालं ॥६॥ अह वासगिहे सह सयणसंगए धारिणी सुहपसुत्ता । पासित्तु सीहसुमिणं पडिबुद्धा अक्खए पइणो ॥७॥ सो जंपइ तुज्झ सुओ समग्गगुणसंगओ धुवं होहि । तो तं तहत्ति पडिइच्छिऊण सा गमइ निसिसेसं॥८॥ गोसे राया ण्हाओ सव्वालंकारभूसियसरीरो । सिंहासणे निसन्नो सद्दावइ सुमिणसत्थविऊ ॥९॥ तेऽवि तओ लहु ण्हाया कयकोउयमंगला समागम्म । वद्धावित्तु जएणं विजएण निवं सुहनिसन्ना ॥१०॥ भद्दासणंमि पवरे देविं ठावित्तु जवणियंतरियं । राया पुप्फफलकरो तं सुमिणं अक्खए तेसिं ॥११॥सत्थाइं वियारेउं निवपुरओ ते कहिंति जह सत्थे । बायालीसं सुमिणा तीसं वुत्ता महासुमिणा ॥१२॥ चउदसगयमाईए नियंति जिणचक्किमायरो तेसिं । सत्त हरिमायरो तह चउरो बलदेवजणणीओ ॥१३॥ मंडलियमायरो पुण एगं दो वा नियंति तह सुमिणे । दिट्ठो उ धारिणीए सीहो सुमिणे इमीइ तओ ॥१४॥ वररूवकंतिजुत्तो पुत्तो सूरो समत्तरज्जधरो । संजमरज्जधरो वा होही समणो समियपावो ॥१५॥ विउलं पीईदाणं दाऊणं जीवियारिहं तेसिं । परितुट्ठमणो राया निमित्तिए तो विसज्जेइ ॥१६॥ देवी पहिट्ठचित्ता पसत्थसंपुण्णदोहला गब्भं । तं वहइ सुहसुहेणं । पवराहारेहिं पोसंती ॥१७॥ वररायलक्खणधरं संपुण्णदिणेहिं पसवए पुत्तं । कंतीए दिप्पंतं विदुरभूमिव्व वररयणं ॥१८॥ तत्तो वद्धावणयं राया काउं महाविभूईए । विहियं सुबाहुकुमरोत्ति तस्स नामं सुबाहुस्स॥१९॥ पंचहिं

धाईहिं इमो लालिज्जंतो महापयत्तेणं । सियपक्खससहरो इव परिवड्ढइ नवनवकलाहिं॥२०॥ समए समप्पिओ सो लेहायरियस्स तेणवि सुहेणं । अज्झाविओ कलाओ अह पत्तो पवरतारुण्णं ॥२१॥ पासायसए पंच उ कारिय परिणाविओ इमो पिउणा। पंचसयरायकन्नाओ पुप्फचूलापमुक्खाओ ॥२२॥ देवोव्व देवलोए नाणाकीलाहिं कीलमाणो सो । ताहिं समं विसयसुहं अणुत्तरं सेवए कुमरो ॥२३॥ अन्नदिणे संपत्तो पुत्तो सिद्धत्थराइणो तत्थ। पुप्फकरंडुज्जाणे वीरजिणो चरिमतित्थयरो ॥२४॥ पुरिसेण पउत्तिनिउत्तएण वद्धाविओ निवो गंतुं । रायावि हरिसवसओ तत्थेव ठिओ जिणं नमए॥२५॥ अद्धत्तेरस लक्खे पीईदाणं दलित्तु तस्स निवो । वीरं वंदिउकामो निग्गच्छइ कूणिउव्व तओ॥२६॥ नाऊण जिणागमणं सुबाहुकुमरोऽवि संदणारूढो । तित्थयरवंदणत्थं पत्तो बहुभत्तिसंजुत्तो ॥२७॥ राया जुवरायओऽविय विहिपुव्वं वंदिउं महावीरं । उचियट्ठाणनिविट्ठा सुणंति धम्मं पहिट्ठमणा ॥२८॥ सामीवि कहइ ससुरासुराइ परिसाइ जह इमे जीवा । बज्झंति सहंति दुहं कम्मेहिं जहा विमुच्चंति ॥२९॥ इय सोऊण सुबाहू भणइ पहुं पवयणं तु निग्गंथं । सच्चमणुत्तरमिच्चाइ सद्दहामी तहिच्चाइ ॥३०॥ किंतु जहा राईसरमाई बहवे इमे कुणंति वयं। न चएमि तहा इण्हिं गिहिधम्ममहं तु गिण्हिस्सं॥३१॥ भणइ जिणो गिण्ह तुमं तो सो सम्मत्तसंजुयं सम्मं। धम्मं गिहीण गिण्हित्तु हरिसिओ सगिहमणुपत्तो ॥३२॥ अह गोयमगणहारी वीरं वंदित्तु पुच्छए एवं । एस सुबाहू कुमरो भयवं ! अमरुव्व रूवधरो ॥३३॥ सोमो कंतो य पिओ सोहग्गनिही य सयलजणइट्ठो। साहूणंपि विसेसेण संमओ केण कम्मेण ? ॥३४॥ अह भणइ जिणवरिंदो इह भरहे आसि हत्थिणपुरंमि। सुहुमो नाम गिहवई रिद्धिसमिद्धो सया सुहिओ ॥३५॥ सहसंबवणुज्जाणे अह तत्थ कयाइ धम्मघोसगुरू। पंचसयसाहुसहिओ समोसढो सव्वसत्तहिओ ॥३६॥ थेराण तेसिमेगो सुदत्तनामो महायसो सीसो। मासक्खवओ खं-

तीइ सायरो सायरो चरणे ॥३७. अह सो मासक्खमणस्स पारणे पुच्छिऊण आयरियं । अंतो पुरस्स पविसइ पसंतमुत्ती महासत्तो ॥३८॥ नीउच्चमज्झिमेसुं अणाउलो सो कुलेसु पविसंतो । गाहावइस्स सुहुमस्स गिहसमीवंमि संपत्तो ॥३९॥ पंचसमियं तिगुत्तं गुणमणजुत्तं मुणिं सगिहमिंतं । दट्ठुं सुतुट्ठचित्तो सिट्ठी इय चिंतए तत्तो ॥ ४० ॥ मन्ने मम संपन्ना चिंतामणिकामधेणुकप्पतरू । जं एस मुणी मासस्स पारणे मह गिहं पत्तो ॥४१॥ इय चिंतिऊण गंतुं सत्तट्ठ पयाइं संमुहं सुहुमो । तिपयाहिणा करेउं वंदइ साहुं विगयमोहं ॥४२॥ आसणदाणेण निमंतिऊण पंजलिउडो भणइ एवं । आहारग्गहणेणं अणुग्गहं कुणह मह नाह ! ॥४३॥ तुम्ह पसाएण लहुं अहंपि भवसायरं तरिस्सामि । लाउयफलपडिलग्गो पासाणोऽवि हु न किं तरइ ? ॥४४॥ तो सो पसंतचित्तो सुदत्तसाहूवि संजमपवित्तो । दव्वाइसु उवउत्तो पत्तं धरिउं समाढत्तो ॥४५॥ अह सो सुहुमो सिट्ठी हरिसवसुल्लसियबहलरोमंचो । विप्फारियनयणजुओ वियसियसयवत्तसमवयणो ॥४६॥ आहारेण वरेणं पडिलाभइ परमभत्तिसंजुत्तो । कयकिच्चं अप्पाणं मण्णंतो मणवयतणूहिं ॥४७॥ चित्तं वित्तं पत्तं तिन्निवि एयाइं लहिय दुलहाइं । पडिलाभंतेण तया समज्जियं तेण फलमेयं ॥४८॥ पुन्नाणुबंधिपुन्नं उत्तमभोगा य सुलभबोहित्तं । मणुयाउयं च बद्धं कओ परित्तो य संसारो ॥४९॥ अण्णं च तहिं तइया पाउब्भूयाइं पंच दिव्वाइं । पहया उ दुंदुहीओ चेलुक्खेवो सुरेहि कओ ॥५०॥ मुक्का हिरण्णवुट्ठी वुट्ठी कुसुमाण पंचवन्नाणं । गयणंगणंमि घुट्ठं अहो सुदाणं सुदाणंति ॥५१॥ मिलिओ य बहू लोओ रायप्पमुहो य तत्थ तेणावि । सो सुहुमो सुहुममई पसंसिओ हरिसियमणेणं ॥५२॥ भोत्तूण बहुं कालं सुहुमो भोए समाहिणा मरिउं । सोहग्गाइगुणजुओ सुबाहुकुमरो इमो जाओ ॥५३॥ पुच्छइ पुणिंदभूई किं एसो गिण्हिही समणधम्मं ? । भणइ जिणो गिण्हिस्सइ समयंमि समाहिओ संमं ॥५४॥ विहरइ अन्नत्थ पहू कुमरोऽवि हु

कुणइ सावगं धम्मं । अट्ठमिचउद्दसिमाइसु पालंतो पोसहमखंडं ॥५५॥ अह अण्णया कयाई अट्ठमिमाईसु पव्वदियहेसु । गंतुं पोसहसालं पासवणुच्चारभूमीओ ॥५६॥ पडिलेहिउं पमज्जिय रइउं संथारयं च देसस्स । तंमि दुरूढो अट्ठमभत्तजुयं पोसहं कुणइ ॥५७॥ तो सो सुबाहुकुमरो अट्ठमभत्तंमि परिणमंतंमि । पुव्वावरत्तकाले चिंतिउमेवं समाढत्तो ॥५८॥ धन्ना ते गामपुरा धन्ना ते खेडकव्वडमडंबा । मिच्छत्ततमपणासो वीररवी विहरए जत्थ ॥५९॥ तेच्चिय धणसंपुण्णा रायाणो रायपुत्तमाईया । वीरजिणदेसणं निसुणिऊण जे लिंति सामन्नं ॥६०॥ इत्थंपि जइ समिज्जा वीरो तेलुक्कबंधवो अन्थ । तोऽहं तप्पयमूले गिण्हिस्सं संजमं रम्मं ॥६१॥ तस्सऽज्झत्थं नाउं पभायसमए समोसढो भयवं । पुप्फकरंडुज्जाणे कयमालगजक्खआययणे ॥६२॥ राया अदीणसत्तू सुबाहुकुमरो य पुव्वविहिणा उ । गंतुं नमित्तु वीरं सुणंति तद्देसणं तत्तो ॥६३॥ राया गिहंमि पत्तो कुमरो अह जंपए जिणं नमिउं । पव्वज्जं गिण्हिस्सं पियरो आपुच्छिऊण परं ॥६४॥ मा पडिबंधं कुणसुत्ति सामिणा सो पयंपिओ तत्तो । पत्तो पिऊण पासे नमिऊण कयंजली भणइ ॥६५॥ वीरसगासे रम्मो धम्मो अज्जऽम्मताय! निसुओ मे । सद्दहिय पत्तिओ रोइओ य सो इच्छिओ य मए ॥६६॥ तेऽविहु भणंति धन्नो सुकयत्थो सुकयलक्खणो तंसि । एवं दुच्चं तच्चंपि जंपिए जंपए कुमरो ॥ ६७ ॥ तुम्भेहिं अणुन्नाओ पव्वज्जं संपयं पव्वज्जिस्सं । सोउं एयमणिट्ठं वयणं देवी गया मुच्छं ॥६८॥—सत्थीकया य कलुणं विलवंती भणइ दीणवयणमिणं । जाय! तुमं मह जाओ बहुओवाइयसहस्सेहिं ॥६९॥ ता कह ममं अणाहं पुत्तय! मुत्तुं गहेसि सामण्णं ? । सोयभरभरियहियया वच्चिहि हा मज्झ जीयंपि ॥७०॥ ता अच्छह जावऽम्हे जीवामो तो पवुड्ढसंताणो । पच्छा कालगएहिं अम्हेहिं तुमं गहिज्ज वयं ॥७१॥ भणइ इमो मणुयभवे अम्मो! अधुवे असासएऽनियए । संझब्भरागसरिसे कुसग्गजलबिंदुयसमाणे ॥७२॥ वसणसयसमभिभूए विज्जु-

लयाचंचले सुमिणतुल्ले । खणभंगुरे अणिचे पुव्विं पच्छा व चइयव्वे ॥७३॥ अन्नं च न याणामी अम्मो! मरणं धुवं भविस्संपि। किं पुव्विं पच्छा वा तुज्झेहिंतो महं होइ ?॥ ७४ ॥ जम्हा मच्चू न मुयइ बालं वुड्ढं जुवाणयं निस्सं । धणवंतं वा धणियं जलिओ जलणुव्व जणनिवहं ॥७५॥ ता अणुजाणह अम्मो! इण्हिंपि हु संजमं पवज्जामि ।—तो तं अम्मापियरो जंपंति पुणो वयणमेयं॥७६॥ जाया! सरीरगं ते इणमो सव्वंगसुंदरमुदारं। वरलवणिमसंपुण्णं समग्गसोहग्गगुणकलियं॥७७॥ कइवय दिणाइं तो माणिऊण भोए अणुत्तरे पुत्ता!। अणुहविउं नियतणुरूवसंपयं पव्वइज्ज तओ॥७८॥ अह कुमरो भणइ इमं दुक्खाययणं खु अम्मताय! तणू। ण्हारु-सयसंपिणद्धं अट्ठियकट्ठुच्छिंय असुइं ॥७९॥ विविहाहिवाहिगेहं तहय अणिट्ठेट्ठविसयसंठप्पं। जज्जरघरं व जं सडणपडणविद्धंसणसहावं ॥८०॥ दुब्बलयं मट्टियभंडयं व एयं पुरा व पच्छा वा । चइयव्वमवस्सं तो इण्हिंपि हु पव्वयामि अहं ॥८१॥—पियरो पिम्मपराइं पुणोऽवि कुमरं इमं पयंपंति। सुंदरसरित्तयाओ सरिव्वयाओ सुरूवाओ॥८२॥ भत्ताओ अणुरत्ताओ सुविणयजुत्ताओ तुज्झ भज्जाओ। पंचसयाइं इमाओ कहं मुंचसि तं अणाहीओ ? ॥८३॥ अह कुमरो भणइ इमे भोया असुइब्भवा असुहणो य। वंतासवा य पित्तासवा य तुच्छा अणिच्चा य ॥८४॥ किंच मए बहुसोऽवि हु भुत्ता भोगा सुरासुरनरेसु । नय मणयंपि हु तत्तो नइनियरेणं व नीरनिही ॥८५॥ अण्णं च इमे आवायसुंदरे परिणईय दुहजणए। किंपागफलसरिच्छे को सेवेज्जाऽविय सयण्णो ? ॥८६॥—तो तं पुणोवि पियरो भणंति मणिरयणकंसमाईओ । अत्थो अज्जयपज्जयपमुहेहिं समज्जिओ बहुओ ॥८७॥ आसत्तमकुलवंसा दाउ भुत्तुं पकाममवि होही । तं अणुभुंजिय पच्छा पुत्तय! गिण्हिज्ज पव्वज्जं॥८८॥ भणइ सुबाहू सुबहूवि संचिओ अत्थसंचओ अथिरो। जलजलणरायतक्करमच्चु-प्पमुहाण साहीणो ॥८९॥ दुहसज्झो दुहरक्खो वहबंधकिलेसकारओ सययं। अत्थो अणत्थभवणं इह परलोए य जी-

वाणं॥९०॥-अह तं अम्मापिउणो जाणित्ता सव्वहा विसयविमुहं। संजमभयजणणीहिं वग्गूहिं वयंति तो एवं ॥९१॥ वच्छ ! इमं निग्गंथं पावयणमणुत्तरं तहा सच्चं। केवलियं मुत्तिकरं किंतु सुदुक्करतरं सुणसु ॥ ९२ ॥ चावेयव्वा जह लोहनिम्मिया दुक्करं जवा इहइं। चंकमियव्वं निसियग्गखग्गधारोवरिं अहवा ॥९३॥ इच्चाइ दुक्कराइं हवंति जह वच्छ! जीवलोगंमि । तह तारुण्णे सुहलालियस्स समणत्तणंपि जओ ॥९४॥ समणाण न कप्पंती आहाकम्माइं भत्तपाणाइं। सहियव्वा य अवस्सं बावीस परीसहा दुसहा ॥९५॥ लुंचेयव्वा केसा न वीहियव्वं तहोवसग्गेहिं। इच्चाईहिं चरित्तं मुहुत्तमवि दुक्करं काउं ॥९६॥ तत्तो जंपइ कुमरो जं तुब्भे भणह दुक्करं चरणं। तं सच्चं किं पुण कायराण कीवाण पुरिसाणं ॥९७॥ धीरस्स निच्छियस्स उ नय किंचिवि इत्थ दुक्करं मण्णे। ता अणुमण्णह जं वीरअंतिए पव्वयामि लहुं ॥९८॥ जाहे अम्मापियरो नहु से चायंति तं नियत्तेउं। ताहे अकामयाए निक्खमणं तस्स मण्णिरथा ॥९९॥ पभणंति पुणो एवं एक्कदिणं पुत्त! ताव माणेसु। रज्जसिरिं तो कुमरो अणुयत्तंतो कुणइ मोणं ॥१००॥ तो राया तं कुमरं सहिओ सामंतमंतिमाईहिं। रयणासणंमि ठविउं अहिसिंचइ कणयकलसेहिं ॥१०१॥ एवं सुबाहुकुमरं सव्विड्ढीए निवेसितुं रज्जे। भणइ निवो तव जाया! किं कुणिमो ? किं च दलयामो ?॥१०२॥ भणइ सुबाहू दिज्जउ रयहरणपडिग्गहं तत्तो राया। लक्खदुगेणं दुन्निवि आणावइ कुत्तियावणओ ॥ १०३ ॥ लक्खेणं कासवयं सद्दावेऊण भणइ जत्तेणं। कुमरस्स अग्गकेसे कप्पह निक्खमणपाउग्गे ॥१०४॥ सो सुइभूओ अट्ठप्पुडाइ पुत्तीइ काउ मुहकोसं। कप्पइ केसे देवी हंसपडेणं पडिच्छेइ ॥१०५॥ गंधोदएण ण्हविउं चच्चेउं चंदणेण सियवत्थे। बंधिय रयणसमुग्गे काउं ते ठवइ उस्सीसे ॥१०६॥ राया सुबाहुकुमरं कंचणकलसा-इएहिं पुण ण्हविउं। लूहइ अंगाइं सयं अइसुकुमालेण वत्थेणं॥ १०७॥ गोसीसचंदणेणं विलिंपिऊणं तणुं अतणुरागो । परिहावइ

वत्थजुयं नासानीसासवसवुज्झं ॥१०८॥ एगावलिकणगावलिपत्तावलिरयणमालवणमालं। हारद्धहारकुंडलमाबंधइ जाव वरमउडं ॥१०९॥ भूसइ दसद्धवण्णेण सुरहिणा हरिसनिब्भरो कुमरं। गंथिमवेढिमपूरिमसंघाइममल्लदामेणं ॥११०॥ खंभसयसन्निविट्ठं मणिमयपंचालियासहस्सजुयं। कारावइ वरसीयं पुरिसहस्सेहिं वहणीयं ॥१११॥ तत्थारुहिउं कुमरो निविसइ सिंहासणंमि पुव्वमुहो। दाहिणपासे भद्दासणंमि कुमरस्स पुण जणणी ॥११२॥ घित्तुं रयहरणाई वामे पासे तहंबधाई से। छत्तं घित्तुं एगा वरतरुणी पिट्ठओ य ठिया ॥११३॥ चामरहत्थाओ दुवे उभओ पासे तहेव पुव्वाए। बीयणगकरा तह हुयवहाइ भिंगारवग्गकरा ॥११४॥ समरूवजुव्वणाणं समसिंगाराण हरिसियमणाणं। उक्खित्ता अह सीया रायसुयाणं सहस्सेण ॥११५॥ अह सुत्थियाइ संपत्थियाइं से अट्ठमंगलाइं पुरो। तहऽलंकियाण हयगयरहाण पत्तेयमट्ठसयं॥११६॥ चलिया बहवे असिलट्ठिकुंतधयचिंधपमुहगाहा तो। अत्थत्थिया य बहवे जयजयसद्दं पउंजंता ॥११७॥ मग्गणजणस्स दिंतो दाणं कप्पदुमोव्व सो कुमरो। दाहिणहत्थेण तहा अंजलिमाला पडिच्छंतो ॥११८॥ दाइज्जंतो मग्गे सो करअंगुलियासहस्सेहिं। पिच्छिज्जंतो य तहा लोयणमालासहस्सेहिं ॥११९॥ पत्थिज्जंतो अहियं हिययसहस्सेहिं तह य थुव्वंतो। वयणसहस्सेहिं इमो संपत्तो जा समोसरणं ॥१२०॥ सीयाओ उत्तरिउं जिणपयमूलेऽभिगंम भत्तीए। तिपयाहिणीकरेउं वंदइ वीरं सपरिवारो ॥१२१॥ अह वंदिउं जिणिंदं भणंति पियरो इमं जहेस सुओ। अम्हं एगो इट्ठो भीओ जरजम्ममरणाणं ॥१२२॥ तो तुम्हं पयमूले निक्खमिउं एस इच्छइ तओ भे। देमो! सचित्तभिक्खं पूज्जा! पसिऊण गिण्हं तु ॥१२३॥ भणइ पहू पडिबंधं मा कुज्जह तो सुबाहुकुमरोऽवि। गंतुं ईसाणदिसिं मुंचइ सयमेवऽलंकारं ॥१२४॥ लुंचइ केसकलावं पंचहिं मुट्ठीहिं तो तहिं देवी। तं च पडिच्छइ हंसगपडेण अंसूणि मुंचंती ॥१२५॥ भणइ य अस्सिं अट्ठे जइज्ज मा पुत्त!

तं पमाइज्ज । इय वोत्तुं सट्ठाणे पत्ता सा अह कुमारोऽवि ॥१२६॥ गंतुं भणइ जिणिंदं आलित्तपलित्तयम्मि लोयम्मि । भयवं ! जराइमरणेण देसु तत्तारिणिं दिक्खं ॥१२७॥ तो दिक्खिऊण विहिणा जिणेण एसो इमं समणुसिट्ठो। बंधसि पावं न तुमं जयं चरे एवमाईहिं ॥१२८॥ इच्छामुत्ति भणंतो थेराण समप्पिओ इमो तेसिं। पासे तवचरणरओ गिण्हइ इक्कारसंगाइं ॥१२९॥ छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं । खममाणो सामण्णं काऊण बहूणि वासाणि ॥१३०॥ आलोइयपडिकंतो मासं संलेहणं च काऊणं । सोहम्मे उप्पण्णो मरिऊण महड्ढिओ देवो॥१३१॥ भोत्तूण तत्थ भोए तत्तो आउक्खए चुओ संतो । होऊण उत्तमकुले मणुओ भोत्तूण वरभोए ॥१३२॥ पव्वज्जं काऊणं होही देवो सणंकुमारंमि । एवं बंभे सुक्के आणयकप्पे य आरणए ॥१३३॥ तो सव्वट्ठे एवं चउदससु भवेसु सुरनरेसु इमो । उत्तमभोए भोत्तुं महाविदेहे नरो होही ॥१३४॥ पव्वज्जं पडिवज्जिय खविउं कम्माइं केवली होउं । लहिही सुबाहुजीवो अक्खयसोक्खं धुवं मोक्खं ॥१३५॥ इति सुबाहुज्ञातं १ ॥

नयरंमि उ उसभपुरे थूभकरंडं तु तत्थ उज्जाणं । तम्मि य धण्णो जक्खो राया उ धणावहो नाम ॥१॥ देवी सरस्सई मे ताण सुओ भद्दनंदिवरकुमरो । सिरिदेवीपामुक्खो पंचसओ तस्स ओरोहो॥२॥ सोऽविय बहुजणइट्ठो सुसंमओ सममणाणविमुणीणं । सो पुण महाविदेहे पुव्वभवे पंडुरगिणीए ॥३॥ विजओ नाम कुमारो तेणं पडिलाभिओ उ तित्थयरो । छउमत्थो विहरंतो जुगबाहू परमभत्तीए ॥ ४ ॥ तद्दाणपभावेणं सव्वं जाणिज्ज जह सुबाहुस्स । दियलोए मणुएसु य सव्वहा जाव मोक्खत्ति ॥५॥ भद्दनंदित्ति गयं २ ॥

वीरपुरे उज्जाणं मणोरमं वीरकण्हमित्तनिवो । सिरिदेवी से देवी ताणं पुत्तो सुजाउत्ति ॥१॥ तस्सवि पंचसउच्चिय

ओरोहो बलसिरिप्पमुक्खो य। सो पुव्विं उसुयारे गिहवइ आसी उसभदत्तो ॥२॥ तेणं पडिलाभिओ पुप्फदंतसाहू तओ इमो ज़ाओ। कुमरो सुजायनामा सेसं तु सुबाहुसरिसं से ॥३॥ सुजायत्ति गयं ३ ॥

विजयपुरे नंदणवणमुज्जाणं वरअसोगजक्खोत्ति। वासवदत्तो राया कण्हादेवी य ताण सुओ॥१॥ वासवनामो भद्दापमुहो से पंचसयग अवरोहो। पुव्विं कोसंबीए सो धणपालोत्ति आसि निवो ॥२॥ पडिलाभिओ य नेणं समणो वेसमणभद्दअभिहाणो। तद्दाणाओ तस्सवि सुबाहुगस्सेव सव्वंपि ॥३॥ वासवेत्ति गयं ४ ॥ (ग्रंथाग्रं ६०००)

सोगंधीइ नीलासोगुज्जाणं सुकालओ जक्खो। अप्पडिहउत्ति राया तस्स सुकण्हाभिहा देवी ॥१॥ ताण सुओ महचंदो तस्स य भज्जा य अरिहदत्तत्ति। तीइ सुओ जिणदासो गुणेहिं जुत्तो सुबाहुव्व ॥२॥ पुव्विं जिणदासजिओ मज्झिममित्ताइ आसि मेहरहो। राया सुधम्मसाहुं पडिलाभइ जाव मोक्खेत्ति ॥३॥ जिणदासित्ति गयं ५ ॥

कणयपुरे सियऽसोगुज्जाणं जक्खो य वीरभद्दोत्ति। पियचंदो पुण राया सुभद्ददेवी य ताणं तु ॥१॥ पत्तो वेसमणो से पंचसया सिरिपमुक्खदेवीणं। वेसमणसिरीण सुओ धणवइनामेण वरकुमरो॥२॥ पुव्विं तु मणिचयाए मित्तनिवो आसि तेण लंभियओ। संभूयविजयसाहू सेसं तु जहा सुबाहुस्स ॥३॥ धणवइत्ति गयं ६ ॥

रत्तासोगुज्जाणं महापुरे रत्तपायजक्खो य। बलरायस्स सुभद्दादेवीइ महब्बलो पुत्तो ॥१॥ रत्तवईपामोक्खो पंचसओ आसि तस्स ओरोहो। सो मणिपुरम्मि नयरे पुव्वभवे गिहवई आसि॥२॥ नामेण नागदत्तो तेणं पडिलाभिओ य भत्तीए। साहू य इंददत्तो सुबाहुगमएण सेसं तु ॥३॥ महाबलित्ति गयं ७ ॥

नयरे सुपासनामे उज्जाणं देवरमणमइरम्मं । जक्खो य वीरसेणो अज्जुणराया पिया तस्स ॥१॥ तत्तवई तीइ सुओ भद्द-नंदित्ति तस्स पंचसओ। ओरोहो सिरिपमुहो पुव्विं नयरे महाघोसे॥२॥ सो आसि धम्मघोसो गाहावइ तेण धम्मसीहमुणी। पाराविओ य सम्मं तब्भावा जाव मोक्खेत्ति ॥३॥ भद्दनंदित्ति गयं ८ ॥

चंपाइ पुण्णभद्दंमि चेइए पुण्णभद्दजक्खो य । राया दत्तो दत्तवइदेवी पुत्तो य महचंदो ॥१॥ रूवाइगुणजुओ सो ओरोहो तस्स पंचसयगोत्ति । सिरिकंतापामोक्खो पुव्विं तेगच्छीनयरीए ॥२॥ आसि जियसत्तु राया तेणं पडिलाभिओ य भत्तीए। धम्मविरउत्ति साहू तद्दाणा जाव सिद्धित्ति ॥३॥ महचंदित्ति गयं ९ ॥

साकेए उत्तरकुरुवणंमि जक्खो उ पावसमिउत्ति। राया य मित्तनंदी सिरिकंता तस्स वरदेवी ॥१॥ ताण सुओ वर-दत्तो ओरोहो तस्स पंचसयमाणो। वरसेणापामोक्खा पुव्विं नयरे सयदुवारे ॥ २ ॥ सो आसि विमलवाहणनामनिवो तेण धम्मरुइसाहू। पडिलाभिओ य तस्सवि अवसेसं पढमगसरिच्छं ॥३॥ एएसु जं न भणियं पोसहतिगधम्मचिन्तमाईयं। सव्वंपि निरवसेसं सुबाहुनायाउ तं नेयं ॥४॥ सुबाहुमाईण दसण्ह वित्तयं, सुणित्तु दाणस्स फलं पवित्तयं। सुपत्तदाणंमि सुसावया! सया, सत्तीएँ होहेसु समुज्जया मया ॥५॥ दाने सुबाह्वादिज्ञातानि ॥ सुपात्रदानस्यैहिकं फलं सदृष्टांतमाह—

इहइं चेव जम्मंमि, उत्तमा भोगसंपया। सेज्जंसोविव पाविंति, मूलदेवो जहा निवो ॥१८१॥

अक्षरार्थः सुगमः, भावार्थस्तु कथागम्यः, तत्रेयं श्रेयांसकथा—

धणवइमइनिम्माया आसि विणीया पुरी परमरम्मा। मरुदेविनाभिपुत्तो पढमनिवो तीइ उसहजिणो ॥१॥ सो पुत्तसयं

रज्जे ठविउं चउनिवसहस्सपरियरिओ। पव्वइओ कयमोणो विहरइ गामाणुगामं तु॥२॥ नवि ताव जणो जाणइ का भिक्खा? केरिसा व भिक्खयरा?। ते भिक्खमलभमाणा वणमज्झे तावसा जाया॥३॥ भयवंपि अदीणमणो संवच्छरमणसिओ विहरमाणो। कन्नाहिं निमंतिज्जइ वत्थाभरणासणाईहिं ॥४॥ तत्तो गयउरनयरे संपत्तो तत्थ बाहुबलिपुत्तो। सोमपहो अत्थि निवो सेयंसो नाम तस्स सुओ ॥५॥ तीइ निसाइ निरिक्खइ सो सुविणो जह मए सुवन्नगिरी। अइसामलो जलेणं सिंचित्ता निम्मलो विहिओ ॥६॥ पेक्खइ सोमपहनिवो किरणसहस्सं चुयं दिणयराओ। तं सिज्जंसेण पुणो संठवियं तो स दिप्पेइ ॥७॥ पिच्छइ सुबुद्धिसिट्ठी एगो सुहडो अरीहिं बहुएहिं। रुद्धो सिज्जंसेणं साहिज्जेणं जयं पत्तो ॥८॥ तिन्निवि रायसभाए कहिंति सुमिणे पभायसमयंमि। तेसिं पुण भावत्थं अमुणंता नियगिहेसु गया ॥९॥ अह तंमि पुरे सामी भिक्खाइ कए गिहेसु पविसंतो। वरिसंते मज्झण्हे सेयंसगिहंमि संपत्तो ॥१०॥ आगच्छंतं दट्ठुं तिजयवरिट्ठं इमोऽवि तुट्ठमणो। ओयरिउं उवरितला सेयंसो आगओ समुहं ॥११॥ गेहंगणंमि पत्तस्स भगवओ पायपंकयं नमिउं। मज्जइ अलिकुलसामलकेसकलावेण नियएण ॥१२॥ काउं पयाहिणतियं भत्तीइ पुणोवि पणमइ पहुस्स। हरिसंसुनीरपूरेण खालयंतोव्व पयजुयलं ॥ १३ ॥ उट्ठेऊणं पमुइयहियओ मुहपंकयं तिजयपहुणो। अवलोइउं पयट्टो पुन्निमचंदं चकोरुव्व ॥१४॥ एरिसलिंगं पुव्विं कत्थ मए पिक्खियंति चिंततो। बीयं विवेगतरुणव्व जाइसरणं समणुपत्तो ॥१५॥ इत्थंतरंमि कुमरस्स केणई ढोयणीयकज्जेण। आणीया बहुकुंभा वरइक्खुरसेण संपुन्ना ॥१६॥ तो कुमरो भणइ इमं अवगयनिद्दोसभिक्खदाणविही। मं अणुगिण्हित्तु इमो गिण्हिज्जउ कप्पणिज्जरसो ॥१७॥ कयउवओगो दव्वाइएसु सामीवि अंजलिं धरइ। सेज्जंसो रसकुंभे उक्खिविउं खिवइ तत्थ रसं॥१८॥ बहुओवि पाणिपत्तो संमाइ रसो अचिंतसत्तिस्स। पहुणो सेज्जंसस्स उ हियए हरिसो न संमाइ

॥१९॥ पहुणा तेण रसेणं विहियं संवच्छरस्स पारणयं । तद्दंसणामएणं पुण नरसुरअसुरनित्तेहिं ॥२०॥ गयणंमि दुंदुहीओ नदंति पडिसद्दपूरियदियंता। सेयंससेयसाणं खाइकरा मागहगणव्व ॥२१॥ कोडीओ अद्धतेरस वुट्ठाओ हिरण्णपवररयणाणं। गंधोदगं च वुट्ठं कुसुमाणि य पंचवन्नाणि ॥२२॥ चेलुक्खेवो य कओ सुरेहिं अंबरतलंमि इय घुट्ठं। भरहंमि पढमदाणं अहो सुदाणं महादाणं ॥२३॥ तह सोमप्पहपमुहा मिलिया लोया भणंति सेयंसं। धण्णो कयपुण्णो तं पुरिसाण सिरोमणी तंसि ॥२४॥ जेण तए इक्खुरसो पहुणा गिण्हाविओ पहाणरसो। दिज्जंतं निच्चंपि हु नो सव्वस्संपि अम्हेहिं॥२५॥ सिज्जंसो भणइ इमं भो भो मूढा ! किमेवमुल्लवह ?। पुव्विं व एस संपइ न परिग्गहसंगओ सामी ॥२६॥ वट्टइ भवपरियट्टा नियट्टिओ तुट्टविसयसुहतण्हो। कयसयलपावविरई महाजई मोहजोहजई ॥२७॥ जत्तासंजमहेउं आहारं एस फासुएसणियं। गिण्हइ न किंचि अन्नं ममत्तरहिओ सदेहेऽवि ॥२८॥ अह ते भणंति पहुणा जं पुव्विं दंसियं तयं नायं। न उणो अदिट्ठपुव्वं एयंति कहं तए नायं ?॥२९॥ सो भणइ मज्झ जायं जाईसरणं पहुस्स दंसणओ। भमिओ सयंपभाई अट्ठ भवे सामिसहिओऽहं ॥३०॥ इत्तो पुण तइयभवे पुव्वविदेहे इमो वइरनाहो। चक्की तस्सासि अहं तु सारही पुंडरगिणीए ॥३१॥ तत्थ मए तस्स पिया एरिसलिंगो जिणो वइरसेणो। दिट्ठो तस्स य पासे पव्वइओ एस अहयंपि ॥३२॥ तित्थयरमुहाउ सुयं मए इमं तत्थ वइरनाहमुणी। होही भरहे उसहो नामेणं पढमतित्थयरो ॥ ३३ ॥ तह तत्थ मए नायं कप्पाकप्पं जईण सव्वंपि। तुब्भेऽवि भिक्खमित्थं मुक्खत्थं देह सुपसत्थं ॥३४॥ तह मज्झ तायपायाण तहय सिट्ठिस्स तेसि सुविणाणं। पच्चक्खं चिय पिच्छह अज्झक्खित्ता फलं इण्हिं ॥ ३५ ॥ सामी उग्गतवेणं खामो मेरुव्व सामलो सो मे। सित्तो इक्खुरसेणं नीरेण ततो स दिप्पेइ ॥३६॥ रायसुमिणंमि पहुणो आइच्चस्स व चुयं किरणजालं। तं च मए पहुदेहे संठवियं पारणेणिण्हिं ॥३७॥ सिट्ठिसुमिणंमि

सामी रुद्धोऽसुहपुव्वकम्मसिन्नेहिं । पारणरूवेण पुणो मह साहिज्जेण तं जिणिही ॥ ३८ ॥ इय सोउं सुहचित्ता ते सव्वे निवसुयं पसंसंता । दाणफलं वन्नंता नियनियठाणंमि संपत्ता ॥३९॥ सिज्जंसगिहाउ पहू कयपारणओ गओ विहारेण । अण्णत्थ न एगत्थ उ चिट्ठइ छउमत्थतित्थयरो ॥४०॥ पहुपारणठाणस्स उ मा कुणउ अइक्कमं नरो कोऽवि । इय रयणमयं पीढं सेज्जंसो तत्थ कारवई ॥४१॥ पहुपाएहिं पवित्तीकयं तमेसो तिसंझमच्चेइ । आइकरमंडलमिणं पुट्ठो लोएहिं कहइ इमो ॥४२॥ तो जत्थ जत्थ सामी गिण्हइ भिक्खं तहिं तहिं पीढं । कुणइ जणो तं जायं कमेण आइच्चमंडलयं ॥४३॥ अह वरिससहस्संते उसभजिणिंदस्स घाइकम्मखया । लोयालोयपयासं केवलणाणं समुप्पण्णं ॥४४॥ तो सिज्जंसकुमारो धम्मं सोऊण सामिपासंमि । चइउं उत्तमभोए अणवज्जं कुणइ पव्वज्जं ॥४५॥ घोरं तवं तवंतो कमेण उप्पाडिऊण वरनाणं । सिद्धिसुहं संपत्तो सुपत्तदाणप्पभावेणं ॥४६॥ भणियं च–"भवणं धणेण भुवणं जसेण भयवं रसेण पडिहत्थो । अप्पा निरुवमसुक्खे सुपत्तदाणं महग्घवियं ॥४७॥" सिज्जंसवित्तं सुणिउं पवित्तं,दाणप्पसित्तं सुहदाणसत्तं । तं देह भव्वा इह धूअगव्वा, संपत्तभद्दा जह होह सव्वा ॥४८॥ दानस्यैहिकफले श्रेयांसकथा ॥

मूलदेवकथा त्वियं–अस्त्यत्र भरते देशे, विबुधव्रातसंयुतः । अप्सरस्तोमसंकीर्णोऽवंत्याख्यः स्वर्गसन्निभः ॥१॥ पुर्यस्त्युज्जयिनी तत्रायामे द्वादशयोजना । विस्तारे च नवाशेषक्षोणीमंडलमंडनम् ॥२॥ जनोऽनन्धो धनैर्यत्र,भोजने तु न च क्वचित् । सरोवृंदं सदंभश्च, न पुनर्यतिनां व्रजः ॥३॥ अनागश्चरितं यत्र,सतां पृथ्वीपतिर्नतु । तरीणामनयो गात्रं, न पुनः कोऽपि चापरः॥४॥ तत्रास्ति देवदत्ताख्या, वेश्या रूपश्रियोर्वशी । या कलाकौशलेनान्यं, तृणायापि न मन्यते ॥५॥ अचलो नाम तत्रास्ति, सार्थवाहो महाधनः । यस्य स्वं वीक्ष्य यक्षेशो, निःस्वं स्वं ननु मन्यते ॥६॥ रम्यते च तयाऽप्येष, श्रीवशाद्देवदत्तया । अमूलमंत्रतंत्रं हि,

कार्मणं श्रीर्यथोदितम् ॥७॥ ये शूराः समरे महाकविसभामध्ये च ये वाग्मिनो, ये मानैकधना मनोरमतया ये कामकीर्तिच्छिदः। तेऽप्याज्ञां शिरसा वहंति सततं तस्य प्रसन्नाननाः, ये लक्ष्म्या नवलीलनीरजदृशा विश्रब्धमालोकिताः ॥ ८ ॥–इतश्च पाटलीपुत्रे ,मूलदेवो नृपात्मजः। कलावित्त्वेन तत्स्रष्टा, रूपेण तु रतिप्रियः ॥९॥ स समग्रगुणैर्युक्तोऽप्येकदोषेण दूषितः। द्यूताख्येन गरिष्ठेन, रत्नदूषी ह्हा विधिः ॥१०॥ पित्राऽपमानितः सोऽथ, निर्गत्य नगरात्ततः। क्रमेण पृथिवीं क्रामन् ,ययावुज्जयिनीं पुरीम् ॥११॥ निर्मितानेकरूपेण, गुटिकादिप्रयोगतः। तत्राश्चर्यैः कलाभिश्च, तेन विस्मापितो जनः॥१२॥ तेनेति श्रुतमत्रास्ति, देवदत्ता पणांगना। रज्यते विदुषिंमन्या, केनापि विदुषा न सा ॥१३॥ रंजनीया विरूपेण, सा मयेति विचिंत्य सः। चक्रे गुटिकयाऽऽत्मानं, विवर्णं वामनं तथा ॥१४॥ स ततस्तद्गृहाभ्यर्णे, देवतायतनस्थितः। जगौ गीतं चमच्चक्रे, देवदत्ता निशम्य तत् ॥१५॥ चेटीं निरीक्षितुं प्रैषीत्तमेषा साऽपि वीक्ष्य तम्। निवृत्त्याकथयत्तस्यै, स श्रुतेनैव सुंदरः॥१६॥ तमाह्वातुं पुनः प्रैषीच्चेटीं कुब्जीं स माधिकाम्। सा गत्वा तत्र तं प्राह, विनम्रा रचितांजलिः ॥१७॥ स्वामिन्! मत्स्वामिनी देवदत्ताऽऽह्वयति वो मुदा। अनाकर्णितकं कृत्वा,चक्रे गीतं तथैव सः॥१८॥ पुनः प्रोक्तस्तयाऽवादीत्, केयं वः स्वामिनी ननु?। साऽऽख्यत् ख्यातामपीहैनां, न वित्थ गणिकाग्रणीम्?॥१९॥ विधाय कर्णौ स प्राह, सप्रहासं प्रगल्भवाक्। वेश्यासंगोऽपि शिष्टानां, प्रतिक्रुष्टस्तथोदितम् ॥२०॥ “नयणिहिं रोयइ मणि हसइ, जणु जाणइ सउ सच्चु। वेस विसिट्ठह तं करइ, जं कट्ठह करवत्तु ॥२१॥” तयोक्तं द्रव्यवश्याः स्युर्वेश्या ईदृश्य एव हि। न पुनर्देवदत्तेयं, गुणागुणविदग्रणीः ॥२२॥ एवमुक्तस्तयाऽचालीत्, पृष्ठतोऽस्या महामतिः। मुष्टिनाऽऽहत्य पृष्ठे तां, कुब्जीं सज्जां चकार सः ॥२३॥ देवदत्ताऽपि वृत्तांतं,तं ज्ञात्वाऽतिविसिष्मये। वरासनप्रदानादि,स्वागतं तस्य सा व्यधात्

॥२४॥ वीणाकरोऽथ तत्राऽऽयात्, कलां दर्शयितुं स्वकाम्। जितशत्रुनृपो दानं, दत्ते यत्तत्परीक्षया ॥२५॥ प्रवीणोऽवादयद्वीणां, वैणिको निपुणं ततः। देवदत्ताऽवदद् भद्राऽविकलैव कला तव॥२६॥ स्मित्वाऽथ वामनः साह, श्रुतमुज्जयिनीजनः। भव्याभव्यांतरं वेत्ति, यत्तत् संप्रति वीक्षितम् ॥२७॥ लज्जिता देवदत्ताऽऽख्यत्, क्षूणमाख्याहि मंक्षु मे। स जगाद सगर्भेयं, तंत्री वेणुश्च नैकक्रम् ॥२८॥ ततस्तां पाणिनाऽऽदाय, तंत्रीगर्भगतं कचं। कृष्ट्वा कर्करकं वंशाद्दर्शयामास सूक्ष्मधीः॥२९॥ समादायाथ तां सद्यः, सोऽनवद्यामवीवदत्। सकलां निष्कलां चापि, वल्लकीं करपल्लवैः ॥३०॥ देवदत्ता ततो दध्यौ, वीणानादेन रंजिता। खचरः किंनरो वाऽयं ?, किं वाऽयं देवगायनः ? ॥३१॥ कृतांजलिरथोत्थाय, तं सप्रश्रयमभ्यधात्। प्रसद्य सद्य उत्कायाः, स्वं रूपं दर्शयाद्य मे ॥३२॥ ततः स्वाभाविकं रूपं, प्रपन्नं तं नृपात्मजम्। मूलदेवमिति ज्ञात्वा, देवदत्ता व्यजिज्ञपत् ॥३३॥ समग्रगुणसंपूर्ण !, गुणग्रामानुरागिणी। निजागमनतो नित्यमनुग्राह्याऽहमुन्मनाः ॥३४॥ तथैव विदधे सोऽपि, केवलं न यथा तथा। अचलाशंकया तत्र, प्रविवेश विशारदः ॥३५॥—राज्ञोऽग्रे वादितस्तेनानको नृत्तं तयाऽन्यदा। राज्ञा दत्तो वरोऽमुष्यै, तया न्यासीकृतश्च सः॥३६॥ मूलदेवः पुरेऽत्रापि, द्यूतव्यसनदूषितः। हारयामास वासोऽपि, रममाणो दिवानिशम् ॥३७॥ स देवदत्तयाऽभाणि, भक्तिनिर्भरया गिरा। सुधांशोरिव ते स्वामिन् !, द्यूतमेतत् कलंकति ॥ ३८ ॥ एवमुक्तोऽपि तन्मोक्तुं, शक्तः कुव्यसनं न सः। स्नेहसारस्तयोश्चैवं, ययौ कालः कियानपि ॥३९॥ अथोचे साऽक्कया धूर्तं, मुंच निःस्वं भजस्व तम्। अचलं निश्चलस्वांता, धनैर्द्धनदसंनिभम् ॥४०॥ साऽऽख्यान् न द्रव्यरक्तैव, किं त्वहं गुणरागिणी। ते चात्रैव ततो धूर्तं, मातर्मुंचाम्यमुं कथम् ?॥४१॥ परीक्षार्थमथाभाणि, चेटीं प्रेष्याक्कयाऽचलः। अद्येक्षुभक्षिकाभिस्ते, प्राणेशायाः प्रयोजनम् ॥४२॥ देवदत्तागृहेऽनेन, प्रैष्यनः पूर्णमिक्षुभिः। तद् दृष्ट्वोवाच साऽप्यंब !,

किमहं हस्तिनी ननु ? ॥४३॥ तथैव मूलदेवोऽपि, याचितस्तास्तयाऽथ सः। सरसाः सरसा इक्षुयष्टीर्जग्राह धीधनः ॥४४॥ आदावंते च तांश्छित्त्वा, निस्त्वचीकृत्य मध्यतः। कृत्वा द्व्यंगुलखंडानि, शूलाप्रोतानि स व्यधात् ॥४५॥ वासयित्वा तथैलाद्यैः, क्षिप्त्वा मल्लकसंपुटे। देवदत्ताकृते प्रैषीत्तद् दृष्ट्वा साऽप्यवोचत ॥ ४६ ॥ विवेकं पश्य निःस्वस्य, मातर्नातः परं वदेः। ततस्तयाऽक्कयाऽऽख्यायि, प्रच्छन्नमचलाय तत् ॥४७॥ देवदत्तामथापृच्छ्य, मायया सोऽन्यदाऽगमत्। ग्रामांतरेण साऽप्याशु, हृष्टा धूर्त्तमवेशयत् ॥४८॥ श्रेष्ठ्यथागात्ततो धूर्त्तः, खट्वाऽधो देवदत्तया। कृतस्ततोऽसौ पृष्टश्च, श्रेष्ठ्यागमनकारणम् ॥४९॥ स प्रोचे स्नातवान् स्वप्ने, पल्यंकेऽत्र स्थितः प्रिये !। तद्दुःस्वप्ननिघातार्थं, स्नास्याम्यत्रैव संस्थितः ॥५०॥ सोचेऽत्र तूलिका धूली, स्यात्ते स्नानेऽथ सोऽभ्यधात्। किं कार्पण्येन ते शुभ्रे !, द्रमकस्येव योषितः ? ॥५१॥ भविष्यंत्यचले पत्यौ, भूयसोऽपि हि तूलिकाः। लवणेन स किं सीदेद्, यस्य तस्याकरः सुहृत् ॥५२॥ अक्काऽप्यूचे भवत्वेवं, पत्युस्ते पुत्रि ! भद्रकृत्। अभ्यंगोद्वर्त्तनस्नानान्यकार्षीत्तत्र सोऽप्यथ ॥५३॥ श्रेष्ठ्यंगरक्षकास्तत्र, समीयुरथ संज्ञिताः। अक्कयाऽसौ खलिन्यासमधस्ताद् धूर्त्तमाक्षिपन् ॥५४॥ केशेष्वादाय तं साह, क्षत्रिय ! क्षत्रकोविद !। कर्म्मणाऽस्यानुरूपस्ते, को दंडः क्रियतां वद ? ॥५५॥ भो वेश्या परवश्या हि, तद् भूरिद्रव्यदानतः। ग्रामं ग्रामाधिकारीव, गृह्णीयाः किं न तास्ततः ? ॥५६॥ मूलदेवस्तदा दध्यौ, न कालो विक्रमस्य मे। द्वीपीव विफलस्फालस्ततः सोऽस्थादवाङ्मुखः ॥५७॥ विधेर्वशान्महात्माऽयमवस्थामीदृशीं गतः। न वधार्ह इति ध्यात्वाऽचलो मुक्त्वा तमूचिवान् ॥५८॥ अग्रेऽहमपि मोक्तव्यो, दैवादापद्गतस्त्वया। यस्माज्जगति जंतूनां, व्यसनं न सुदुर्लभम् ॥५९॥ रणभग्नकरीवैष, गृहान्निर्गत्य तत्क्षणात्। गत्वा पुर्या बहिः स्नात्वा, सरसीरं व्यचिंतयत् ॥६०॥ मानभ्रंशे तनुस्त्याज्या, न चेद्देशं त्यजेत्ततः। मा दुर्जनकराग्रेण, दश्यमानो भ्रमेत् पुमान् ॥६१॥

विचिंत्येति प्रतस्थेऽसौ,पुरं वेन्नातटं प्रति । द्वादशयोजनायामां,क्रमात् प्रापाटवीं पुनः॥६२॥ स यावन्मार्गयन्नस्ति,द्वितीयं वाक्सखं पथि । सपथ्यादनमद्राक्षीत्तावत्तत्रागतं द्विजम्॥६३॥ पृष्टोऽसौ राजपुत्रेण, क्व व्रजिष्यसि ? सोऽभ्यधात् । यास्यामि परतोऽटव्याः, स्थानं वीरनिधानकम्॥६४॥ क्व नु यूयं द्विजेनोक्तेऽवदद् बेण्णातटं स तु । विप्रोऽब्रवीद् व्रजिष्यावोऽटवीमावां सहैव हि ॥६५॥ अवाप तां व्रजंतौ तौ, मध्याह्नसमये सरः । चक्रतुस्तत्र नीरेण,मुखप्रक्षालनादिकम् ॥६६॥ पृथक् तरुतलेऽध्यास्त, मूलदेवो द्विजोऽथ सः। अंभःसिक्तान् प्रवृत्तोऽत्तुं, सक्तूनेकोऽपि रंकवत् ॥६७॥ दध्यौ नृपसुतो विप्रा, भवंति क्षुद्रतास्ततः । स्वयं भुक्त्वा ममाप्येष, मन्ये किंचित् प्रदास्यति ॥६८॥ बद्धा भस्त्रामुखं भट्टो, निस्त्रपः प्रस्थितोऽथ सः । प्राचालीद्राजपुत्रोऽपि, श्वः प्रदातेति चिंतयन् ॥ ६९ ॥ एवं दिने द्वितीयेऽपि, तृतीयेऽपि तदाशया। ललंघे सोऽटवीं यष्ट्यां, लग्नः स्थविरवत् सुखम् ॥७०॥ द्विजोऽवोचदयं पंथाः, स्थानं तदुपतिष्ठते । वेन्नातटं पुरं त्वेष, क्षेमं तेऽस्तु व्रजाम्यहम् ॥७१॥ राजपुत्रेण स प्रोक्तः, किं ते नामाथ सोऽवदत् । पैतृकं सिद्धडो लोककृतं निर्घृणशर्म्म तु ॥७२॥ अभिधायाभिधानं स्वं, राजपुत्रस्तमभ्यधात् । अटवीयमतिक्रांता, त्वत्साहाय्यात् सुखं मया॥७३॥ कार्यं किंचित् कदाचित् स्यात् ,तदागच्छेर्ममांतिकम् । इत्युक्त्वा स्वपथं सोऽगात् , ग्राममेकमवाप च ॥७४॥ समयज्ञस्ततस्तत्र, भिक्षां भ्रांत्वा गृहे गृहे । कुल्माषान् स बहून् प्राप्य,निर्ययौ ग्राममध्यतः ॥७५॥ प्रविशंतं मुनिं तत्र, मासक्षपणपारणे । वीक्ष्य हर्षप्रकर्षेण, दध्यौ धीमानिदं हृदि ॥७६॥ अहो मे भाग्यसंभारप्रादुर्भावोऽद्य यन्मया । संसारसागरोत्तारे, प्राप्तोऽयं पोतवन् मुनिः॥७७॥ सुप्रापा राज्यसंपत्तिः, स्वर्गसंपच्च देहिनाम् । सुदुष्प्रापोऽल्पपुण्यानामीदृक्पात्रसमागमः ॥७८॥ ततः प्रदाय कुल्माषानमुष्मै दोषवर्जितान् । करिष्यामि स्वकीये हि, सफले जन्मजीविते ॥७९॥ ध्यात्वेति धीमता तेन, दत्ताः प्रणतिपूर्वकम् । साधवे सिद्धमाषास्ते, पठितं च

प्रमोदतः ॥८०॥ 'धण्णाणं खु नराणं कुम्मासा हुंति साहुपारणए । देवताऽथांतरिक्षस्थाऽवदत्तद्भक्तिरंजिता । भो मूलदेवपुत्रक !, साधु साधु त्वया कृतम् ॥८१॥ याचस्व पश्चिमार्द्धेन,गाथायास्ते यदीप्सितम् । बभाषे मूलदेवेन,ततश्चेति प्रहर्षतः ॥८२॥ मह देहि देवदत्तं दंतिसहस्सं च रज्जं च ॥८३॥ एवं भविष्यति तया, प्रोक्ते नत्वा पुनर्मुनिम् । मन्यमानः कृतार्थं स्वं, बुभुजेऽसौ स्वयं ततः ॥८४॥ क्रमात् वेन्नातटं प्राप, तत्र रात्रौ नृपात्मजः । सुप्तः पथिकशालायां, निशांते स्वप्नमैक्षत ॥८५॥ प्रविशंतं मुखे वीक्ष्य, पूर्णचंद्रमजागरीत् । यावत्तावत्तमेवैको, दृष्ट्वा कार्प्पटिकोऽवदत् ॥८६॥ भो भो स्वप्ने मया चंद्रो, दृष्टः शंसत तत्फलम् । तेऽप्यूचुर्लप्स्यसेऽखंडं, मंडं खंडाज्यपूरितम् ॥८७॥ एवमस्त्विति सोऽवादीद्वराकस्तुष्टमानसः । बदरैरपि गोमायोर्जायते हि महामहः॥८८॥ नाचख्यौ निर्विवेकाणां, तेषां राजसुतस्तु तम् । दर्शितं रत्नमप्याहुर्मूर्खा ह्युपलखंडकम् ॥ ८९ ॥ गृहच्छादनिकायां तं, प्राप कार्प्पटिकः स तु । फलं विचारतुल्यं हि, प्रायः स्वप्नस्य जायते॥९०॥ आरामे मूलदेवस्तु,गत्वा पुष्पोच्चयादिना । आराध्य मालिकं तस्माल्लात्वा पुष्पफलादिकम् ॥९१॥ शुचिर्भूत्वा गृहे गत्वोपाध्यायस्य कृताननतिः । तं स्वप्नफलमप्राक्षीत्, फलाद्यर्प्पणपूर्वकम् ॥९२॥ स जगौ मुमुहूर्त्ते ते, तत्फलं कथयिष्यते । इदानीमुन्मनस्कानामस्माकमतिथिर्भव ॥९३॥ तथेति प्रतिपन्नं तं, स्नपयित्वा सगौरवम् । भोजयित्वा च तेनासौ, स्वां पुत्रीं पर्यणाययत् ॥९४॥ ततः स्वप्नफलं तस्योपाध्यायेन निवेदितम् । दिनानां सप्तकस्यांतर्भूपतिस्त्वं भविष्यसि ॥९५॥ मूलदेवो गृहे तत्र, तुष्टोऽस्थात् पंचमेऽह्नि तु । गत्वा पुराद् बहिः सुप्तस्तले चंपकभूरुहः ॥९६॥ अपुत्रो नृपतिः प्राप, पंचत्वं तत्र वासरे । हस्त्यश्वादीनि दिव्यानि, जनाः पंचाभ्यषिक्षत ॥९७॥ भ्रमित्वा तानि सर्वत्र,मध्याह्ने तत्र चागमन् । सोऽपरावर्त्तितच्छायः, पुण्यभाक् यत्र राट्सुतः ॥९८॥ जगर्जात्यूर्जितं गर्जो, वितेने हेषितं हयः । स्वर्णकुंभांभसा कुंभी, प्रबुद्धं

तमसिस्नपत् ॥९९॥ शिरस्यारोपितस्तेन, चामराभ्यां स वीजितः। स्वयं श्वेतातपत्रेण, शिरस्थेन विभूषितः॥१००॥ विविधातोद्यनादेन, पूरितांबरकंदरः ।पुरेऽविशत्ततो राज्ये, मंत्र्याद्यैः स्थापितोऽथ सः ॥ १०१ ॥ प्रोक्ता देवतया तेऽथ, लोका आकाशसंस्थया। एष विक्रमराजाख्यः, सुविक्रमकलानिधिः ॥१०२॥ खंडयिष्यति योऽस्याज्ञां, दंडयिष्यामि तं स्वयम्। सामंताद्यास्ततः सर्वेऽजायंताज्ञाविधायिनः ॥१०३॥ तस्य चोज्जयिनीशेन, समं श्रीजितशत्रुणा । अन्योऽन्यं प्राभृतप्रेषात्, प्रीतिः प्रादुरभूद् भृशम् ॥१०४॥–इतश्च देवदत्ता सा, दृष्ट्वा तादृग्विडंबनाम् । अचलं भर्त्सयामास, विरक्ता कर्कशोक्तिभिः ॥१०५॥ द्रव्यदर्प्पांध! किं तेऽहं,कुलपत्नी यदत्र मे ? ! गृहे व्यवहरस्येवं, क्षीववद्धिकलोऽसि किम् ? ॥१०६॥ तत्त्वया मद्गृहे नूनं,नागंतव्यमतः परम् । इत्युक्त्वा सा द्रुतं गत्वा, नृपं नत्वा व्यजिज्ञपत् ॥१०७॥ वरं तं देहि मे देव!, स ऊचे स्वेच्छया वृणु । साऽऽख्यन्न कश्चिदाज्ञाप्यो, मूलदेव विना पुमान् ॥१०८॥ तथाऽयमचलो वार्यः,समायान् मम वेश्मनि। आमेत्युक्त्वाऽवदद्राजा,भद्रे! ब्रूह्यत्र कारणम् ॥१०९॥ तद्गिरा माधवीचेटी, तं वृत्तांतमचीकथत् । श्रुत्वेत्याकार्य तं राजा, क्रोधाध्मातोऽभ्यधादिदम् ॥ ११० ॥ स्वैरी किं वा स्ववैरी त्वमऽरेरे निगमाधम ! । मत्पुरे द्वे इमे रत्ने, तयोस्त्वं यत् खलायसे ॥१११॥ वधं विना प्रतीकारो,नान्यस्ते विषवृक्षवत् । देवदत्ताऽथ तं मृत्योर्मोचयामास भूभुजा ॥११२॥ राजोचेऽस्या गिरा जीवन्, मुक्तस्त्वं तदतः परम् । मूलदेवमिहानीय, प्रविशेर्नान्यथा पुरे ॥११३॥ इति निर्वासितो राज्ञा, नष्टं रत्नमिवाथ सः । सर्वत्रान्वेषयामास, न चामुं प्राप कुत्रचित् ॥११४॥ गृहीत्वा प्रचुरं पण्यं, तेनोनत्वेन तत्पुरात् । निर्गत्य पारसं कूलं, ययौ तत्र पणायितुम् ॥११५॥–दध्यौ विक्रमराजोऽथ, न मे राज्यमिदं मुदे । देवदत्तां विना यद्वत्, भोजनं लवणादृते॥११६॥ ततः प्रैषीत् प्रधानं स्वं, प्रधानप्राभृतान्वितम् । स गत्वोज्जयिनीनाथं, जितशत्रुं व्यजिज्ञपत्॥११७॥ देव! दिव्य-

श्रिया राजन्, देवतादत्तराज्यभृत्। देवदत्तानुरक्तश्च, मूलदेवोऽब्रवीदिदम् ॥११८॥ रोचते देवदत्तायै,यदि वश्च तदत्र सा। प्रेष्यतां प्रेयसी हंत, चिरादुत्कंठितस्य मे ॥११९॥ जितशत्रुस्थानादीन्, कियन्मात्रमिदं यतः। मम तस्य च राज्येऽपि, विद्यते नांतरं क्वचित् ॥१२०॥ नृपेणाहूय वृत्तांतं, तं निवेद्योदिता च सा। पूर्णा मनोरथास्तेऽथ, व्रज तत्र सतंत्रिका ॥१२१॥ महाप्रसाद इत्युक्ते, तया सत्कृत्य तेन सा। विसृष्टा सपरीवारा, ययौ वेन्नातटं पुरम् ॥१२२॥ मूलदेवनृपेणाथ, सर्वर्द्ध्या सा प्रवेशिता। स्वप्रासादे पर-प्रीत्या, प्रागेव हृदये पुनः ॥१२३॥ जिनानर्चन्नसौ नित्यं, राज्यं कुर्वन् भजंस्तथा। शुभान् भोगांस्तया युक्तोऽत्येति कालं त्रिवर्ग-युक् ॥१२४॥ अथ पारसकूलात् सोऽर्जितभूरिधनोऽचलः। तत्रैत्य प्राभृतं भव्यं, गृहीत्वाऽगान्नृपांतिकम् ॥१२५॥ उपालक्षि स तेनाशु, न चानेन पुनर्नृपः। नृपेणोक्तः कुतः श्रेष्ठिन्नागाः? सोऽथ व्यजिज्ञपत् ॥१२६॥ कूलात् पारसनाम्नोऽहमिहागां बहुपण्ययुक्। पण्यं निरीक्षितुं नाथ!, तत् पंचकुलमादिश ॥१२७॥ नन्वहं च समेष्यामीत्युक्त्वा तत्र नृपोऽप्यगात्। मंजिष्ठापट्टसूत्रादि, पण्यं तेनापि दर्शितम् ॥१२८॥ श्रेष्ठिन्! भांडं किमेतावदिति प्रोक्ते नृपेण तु। सोऽवादीद्देवपादानां, पुरतः किं मृषोच्यते? ॥१२९॥ राज्ञोक्ताः शुल्किनोऽमुष्य, श्रेष्ठिनः सत्यवादिनः। विदद्ध्वमर्द्धदानं च, सम्यक्पण्यं च पश्यत॥१३०॥ पाणिप्रहारभाराद्यैर्वंशवेधैश्च तैस्ततः। महार्घ्यं विदितं भांडं, मंजिष्ठादिविमध्यगम् ॥१३१॥ पण्यस्थानानि तैर्भित्त्वा, दर्शितं तन् महीपतेः। तद् दृष्ट्वा श्रेष्ठिनं रुष्टो, बंधयामास भूपतिः ॥१३२॥ गृहमेत्य तमानाय्य, मुक्तबंधं च सोऽभ्यधात्। मां वेत्सि श्रेष्ठ्यथोवाच, रविवत्त्वां न वेत्ति कः? ॥१३३॥ नृपेणोक्तं कृतं भक्तिवाक्यैरचल! निश्चलम्। यदि जानासि तद् ब्रूहि, सोऽप्यूचे वेद्मि न स्फुटम् ॥१३४॥ देवदत्ता कनत्कारशृंगारा तत्र राजगिरा। आगात् तां च समालोक्य, ज्ञात्वा त्रेपेऽचलोऽथ सः ॥१३५॥ अनाकुलस्तयाऽभाणि, भोः स एव

नृपात्मजः । यस्त्वयोक्तस्तदा मोच्यो, व्यसनार्त्तस्त्वयाऽप्यहम् ॥१३६॥ दैवाच्छरीरसंदेहकारणं व्यसनं गतः। सानुक्रोशेन देवेन, मुक्तोऽस्यचल! निश्चितम् ॥१३७॥ ततो विलक्षचित्तेन, तेन नत्वा पुनर्नृपः। स्वागस्तत् क्षमितं सर्वं, विज्ञप्तश्चेति सादरम् ॥१३८॥ रुष्टस्तेनागसा मे न, ददात्युज्जयिनीपतिः । प्रवेशं तं च यौष्माकवचनेन प्रदास्यति॥१३९॥ नृपेणोक्तं मया क्षांतं, यस्येयं ते हितैषिणी । ततः सत्कृत्य दूतेन, सहितः प्रहितोऽथ सः ॥१४०॥ मूलदेवगिरा तस्य, जितशत्रुनृपोऽप्यदात् । पुरीप्रवेशं येनास्य, क्रोधस्तन्मूल एव हि ॥१४१॥ श्रुत्वाऽऽगान् मूलदेवस्य, राज्यं विप्रोऽथ सिद्धडः । राज्ञा ग्रामः प्रदत्तोऽस्य, स एवादृष्टसेवया॥१४२॥ सोऽथ कार्प्पटिकः केनाप्युक्तः स्वप्नेन तेन सः । राजपुत्रो नृपो जज्ञे, विचाराद्विदुषः पुनः ॥१४३॥ तथैव भिक्षसे त्वं तु, ततोऽसौ राज्यलोलुपः । तत्कुर्व्यां गोरसं भुक्त्वा, शेते तत्स्वप्नलिप्सया ॥१४४॥ निर्भाग्यो लभते नैतत्, तद्वज्जीवो भवार्णवे। बंभ्रमीति न चाप्नोति,मनुष्यत्वमपुण्यकः॥१४५॥ मूलदेवोऽन्यदा चौरं,श्वशूर्यमपि मंडिकम् । जघान न हि गृह्यंते,गृह्यसंबंधतो नृपाः ॥१४६॥ मूलदेवनृपो भोगान् ,उत्तमान् मुनिदानतः। शिश्रियेऽथाप्यथ स्वर्गमोक्षौ च क्रमयोगतः॥१४७॥ इत्यवेत्य शुभपात्रदानजं, शर्मकारि फलमत्र जन्मजम्। दानमंग मनुजाः! सदोद्यता, मूलदेव इव दद्ध्वमादृताः ॥१४८॥ दानस्यैहिकफले मूलदेवकथा ॥

दानस्यैवोभयलोकफलं सदृष्टांतमाह—

धन्नेणं सालिभद्देणं, कयउन्नेणं तहेव य । इहलोए परलोए य, जहा पत्ता सुसंपया ॥१८२॥
अन्नोऽवि पाविही एवं, नत्थि इत्थं तु संसओ । पूइही मुणिणो जो उ, भत्तिमंतो सुसावओ॥१८३॥

कंठ्यौ, नवरं इहलोके—नरभवे, परलोके—सर्वार्थसिद्धादौ । दृष्टांतास्तूच्यंते, तत्रेमौ धन्यशालिभद्रदृष्टांतौ—प्रतिष्ठानाख्यम-

ग्रास्ति, पुरं श्रीसुप्रतिष्ठितम्। चैत्यैरभ्रंलिहैः स्वर्गसोपानानीव दर्शयत् ॥१॥ जितशत्रुर्नृपस्तत्र, हस्तिनीव नियंत्रिता। जयश्रीर्यद्भुजस्तंभे, नान्यतो गंतुमीश्वरा ॥२॥ पूर्वं श्रीमत्ततो दैवाच्छ्रीकं लज्जमानकम्। अन्यस्मान्नगरात् तत्र, कुलमेकमथागमत् ॥३॥ तत्रैको दारको दाता, विनीतश्च स्वभावतः। लोकानां वत्सरूपाणि,चारयामास वृत्तितः ॥४॥ कस्मिंश्चिदुत्सवेऽन्येद्युरुद्याने तेन पूर्जनः। ददृशे प्रवराहाराभ्यवहारपरायणः॥५॥ तत्रैव वत्सरूपाणि, मुक्त्वा गत्वा गृहेऽथ सः। ऊचे मातः! क्षणे ह्यस्मिन्, भक्ष्यं किंचित् प्रयच्छ मे ॥६॥ तयोक्तं क्रियते वत्स!, भक्ष्यं द्रव्याहते कथम्?। स पुनः स्माह हे मातर्विधेह्येतद् यथा तथा॥७॥ प्रार्थिता तेन साऽत्यर्थमर्थसामर्थ्यवर्जिता। पौरस्त्यमर्थसार्थं स्वं, स्मृत्वाऽरोदीच्छुचार्दिता ॥८॥ अथैयुः प्रातिवेश्मिकयः, श्रुत्वा तद्रुदितं द्रुतम्। तद्दुःखदुःखितास्तास्तामप्राक्षुर्दुःखकारणम्॥९॥ यथास्थितमथाचख्यौ,साऽप्यासां शोकगद्गदा। दयालुभिस्ततस्ताभिस्तस्यै क्षीरादिकं ददे ॥१०॥ संस्कृतं पायसं साद्धं, खंडाज्याभ्यां सुतस्य सा। परिवेष्य गृहस्यांतर्ययौ कार्येण केनचित् ॥११॥ इतश्च सुकृतैस्तस्याकृष्टवत् तद्गृहांगणे। आगान् मुनिर्महात्मैको, मासक्षपणपारणे॥१२॥ दृष्ट्वा वृष्टिमिवानभ्रां, सोऽर्भको भूरिभक्तिभाक्। अदभ्रं पुलकं बिभ्रदभ्युत्तस्थौ ससंभ्रमम् ॥१३॥ पाणिभ्यां पायसस्थालं, समुत्पाट्य पटिष्ठवाक्। वाचंयममुवाचैवमानंदोदकपूर्णदृक् ॥१४॥ सद्विधित्तपात्राणां,भगवन्मीलको ह्ययम्। दुष्प्रापोऽद्य मया प्रापि,त्रिवेणीसंगमो यथा ॥१५॥ तदिदं पायसं मेऽद्य,समादाय दयानिधे!। दरिद्रं दुःस्थितं दीनं, स्वामिन्ननुगृहाण माम् ॥१६॥ गुणानां पात्रमेषोऽथ, मुनिः पात्रमधारयत्। धन्यंमन्योऽर्भकः सोऽपि,परमान्नं ददौ मुदा ॥१७॥ मनुष्यायुर्बबंधार्घ्यं, तदाऽसौ पात्रदानतः। पुनर्मात्रा प्रदत्तं च, बुभुजे भूरि पायसम्॥१८॥ सायमन्वेपयद् वत्सरूपाण्येप पुराद् बहिः। महर्षिं प्रेक्ष्य तं हर्षान्नत्वोपाविक्षदग्रतः ॥१९॥ तत्पार्श्वे परया प्रीत्या, श्रुत्वा च धर्मदेशनाम्। मृत्वा विशु-

धन्यस्तावदागात् कुटुंबिनः। भक्ताहर्त्री प्रिया तेन,सोक्ताऽमुं भोजयातिथिम् ॥५७॥ परमान्नं तया स्वादु, धन्यस्य परिवेषितम्। कु-टुंबिनस्तु कलशकंठे सीरस्थालगत् ॥५८॥ स्वर्णपूर्णः समुत्खाय, तेन धन्याय ढौकितः। उक्तं च गृह्यतामेष, निधिस्त्वद्भाग्य-निर्गतः ॥५९॥ उदारप्रकृतिर्धन्यो, दत्त्वा तस्मै तमादरात्। क्रमाद्राजगृहं प्राप, बाह्योद्याने निषेदिवान् ॥६०॥ दृष्ट्वा कुसुमपालस्तं, मालिकः प्रवराकृतिम्। नीत्वा गृहे व्यधात्तस्य, सद्भक्ति सपरिच्छदः ॥६१॥—इतश्च तत्पुरात् पूर्वं, काचिदुच्छन्नवंशिका। शालि-ग्रामेऽगमद् धन्याऽभिधा योषिद्धनोज्झिता॥६२॥ बालं सुतं सहानैषीत्,स्वेनैषा संगमाह्वयम्। व्यसनेष्वप्यपत्यं हि, दुस्त्यजं जीवितं यथा ॥६३॥ वृत्तितश्चारयामास, वत्सरूपाणि तत्र सः। एषा निःस्वार्भकाणां हि, सुखसाध्यैव जीविका॥६४॥ पर्वण्येकत्र सोऽन्येद्युः, श्रीमद्बालान् गृहे गृहे। भुंजानान् पायसं प्रेक्ष्य, जगादेति स्वमातरम् ॥६५॥ अतुच्छं पायसं पक्त्वा, मातर्मेऽद्यो-त्सवं कुरु। साऽऽख्याद्विधीयते वत्स!, विनाऽर्थं कथमुत्सवः? ॥६६॥ भूयः सोऽज्ञतयाऽत्रादीन्,मातर्मे देहि पायसम्। नान्यद्-ञ्नामि बालानामाग्रहो बलवान् हहा ॥ ६७ ॥ तेनैवमर्थिताऽत्यर्थमर्थहीनाऽर्थमग्रिमम्। साऽथ स्मृत्वा रुरोदोच्चैः, स्त्रीणां हि रुदितं बलम्॥६८॥ श्रुत्वा तद् रुदितं तस्याः, प्रातिवेश्मकयोषितः। कृपार्द्रा द्रुतमागत्य, जगुः किं सखि! रोदिषि? ॥६९॥ सा सनिर्बंधमित्युक्ता, यथास्थितमचीकथत्। दयालवस्ततस्तस्या, ददुस्तास्तंदुलादिकम्॥७०॥ सिताज्यसंयुतं पक्त्वा, पायसं परिवे-ष्य सा। सुतस्याथ गृहस्यांतः, कुतश्चित्कारणादगात् ॥७१॥ अथ मासोपवास्येको, मुनिस्तद्गृहमागमत्। पारणाय तरीवास्योत्ता-रणाय भवार्णवात् ॥७२॥ वीक्ष्याकस्मान् महर्षिं तं,संगमस्तत्क्षणादभूत्। चकोरचक्रवच्चंद्रं, पूर्णहर्षप्रकर्षभाक् ॥७३॥ ससंभ्रममथो-त्थाय, बिभ्राणः पुलकं तनौ। प्रेक्षमाणः प्रफुल्लाक्षस्तमृषिं पर्यचिंतयत् ॥ ७४ ॥ नूनं मेऽद्य गृहे कामधेनुः कल्पद्रुमोऽपि वा।

चिंतामणिश्च नन्त्रागाद्यदेषोऽभून्ममातिथिः ॥७५॥ ध्यात्वेत्यसौ समभ्येत्य,नत्वोवाच महामुनिम् । परमान्नं गृहाण त्वं, स्वामिन्ननुगृहाण माम् ॥७६॥ महर्षिरपि विज्ञप्तस्तेनैवं तत्कृपापरः । पात्रं प्रसारयामास, तोषयामास तं भृशम् ॥७७॥ दध्यौ संगमकोऽथैवं, भाविभद्रैकसंगमः । अहो मे संगमश्चित्तवित्तपात्रगतोऽद्य मे ॥७८॥ धन्योऽहं कृतकृत्योऽहं,सर्वथा भाग्यवानहम् । यदनेन धृतं पात्रं, पुण्यपात्रं ममाधुना ॥७९॥ इति प्रवर्धमानेन, शुभभावेन तेन तु । अदायि पायसं प्राज्यं, स्थालमुत्पाट्य साधवे॥८०॥ सर्वोपाधिविशुद्धेन, तदा दानेन तेन सः । बबंध सन्मनुष्यायुः, परीत्तं च भवं व्यधात् ॥८१॥ तद्गृहान्निर्ययौ साधुर्धन्याऽपि गृहमध्यतः । प्रभूतं पायसं तस्मै, भूयोऽप्येषा ददौ मुदा ॥८२॥ तदाकंठमतृप्तोऽसौ, बुभुजेऽथ दिनात्यये । अजीर्णात्तोपितं साधुं, स्मरन् मृत्युमशिश्रियत् ॥८३॥ पुत्रत्वेन पुरे राजगृहेऽसौ दानपुण्यतः । गोभद्रेभ्यस्य भद्रायाः, पत्न्याः कुक्षाववजायत ॥८४॥ स्वप्ने च सा सुनिष्पन्नं, शालिक्षेत्रमुदैक्षत । दध्रे च दोहदं धर्म्मे, तं चास्याः श्रेष्ठ्यपूरयत् ॥८५॥ सुखेन सुषुवे सूनुं, भद्रा भद्रगुणान्वितम् । प्राचीव भास्करं कांतकांतिध्वस्ततमस्ततिम् ॥८६॥ कृत्वा जन्मोत्सवं तस्य, पितरौ नाम चक्रतुः । शालिभद्र इति ख्यातं, दृष्टस्वप्नानुसारतः ॥८७॥ धात्रीभिर्लाल्यमानोऽसौ, पंचभिः परया मुदा । पुण्योदय इवाध्यक्षः, सुखेन ववृधे क्रमात् ॥८८॥ कोमलत्वाभिजौकःस्थ, एवासौ सकलाः कलाः । अष्टवर्षी कलाचार्यात्, कलयामास लीलया ॥८९॥ रूपलावण्यसौभाग्यपुण्यं स प्राप यौवनम् । यदंगनानृपस्यैकच्छत्रराज्यमिव क्षितौ ॥९०॥ तत्रत्याः श्रेष्ठिनोऽभ्येत्य, द्वात्रिंशन्निजकन्यकाः । भद्रानाथमथाभ्यर्थ्य, शालिभद्राय ते ददुः ॥९१॥ सर्वलक्षणसंपूर्णाः, परमध्यां परेऽहनि । परिणिन्ये स ताः पित्रोरपूरि च मनोरथान् ॥९२॥ पितृभ्यां पूर्यमाणार्थो, भाद्रेयोऽथ यथासुखम् । रेमे ताभिः समं यद्वद्देवो देवीभिरन्वितः ॥९३॥ –राज्ञोऽथ श्रेणिकस्याभूत् ,सोमश्रीर्नाम पु-

त्रिका । स्वसा च शालिभद्रस्य, सुभद्रेति कनीयसी॥९४॥ तथा कुसुमपालस्य, पुष्पवत्यभिधा सुता । ताश्चैकदिनजातत्वात्, सख्योऽभूवन् परस्परम् ॥९५॥ अमंत्रयंत ताः स्नेहात, पुण्यं तारुण्यमाश्रिताः । पतिरेको विधीयेत, यद्वियोगो भवेन्न नः ॥९६॥ अन्यदा पुष्पवत्यूचे,धन्यस्य गुणसंपदम् । सोमश्रिया पुरो हृष्टा, सा तं राज्ञो न्यवीविदत् ॥९७॥ प्रहृष्टः श्रेणिको राजा,तिस्रोऽप्येताः कुमारिकाः । धन्येन श्रेष्ठिपुत्रेण, महद्‌र्ध्या पर्यणाययत्॥९८॥ राजाऽपि देशप्रासादप्रभृत्यस्मै ददौ मुदा। धन्योऽथ बुभुजे भोगान्, प्राग्दानसुकृतार्जितान्॥९९॥ रममाणः सहैताभिर्गवाक्षस्थोऽथ सोऽन्यदा । अद्राक्षीद्राजमार्गस्थौ,पितरावतिदुःखितौ॥१००॥ द्वाःस्थेनानाय्य संस्नाप्य, सद्वस्त्राभरणैश्च तौ । भूषयित्वा सभार्योऽसौ, प्रणनाम तयोर्मुदा ॥१०१॥ नत्वाऽपृच्छत् स भूयोऽपि, कागाद् भूयोऽपि तद्धनम् । तावूचतुस्त्वयाऽर्जित्वात्, त्वत्प्रवासदिनेऽप्यगात् ॥१०२॥ श्रुतश्चास्माभिरत्र त्वं, राजन् राज्यश्रिया भृशम् । आगमाम वयं तस्माद्, वत्स ! त्वद्दर्शनोत्सुकाः ॥१०३॥ पुनरप्यभ्यधाद् धन्यो, मातर्मे भ्रातरः क नु ? । साऽवोचत् संति तेऽप्यत्र, त्रपमाणाः पुराद् बहिः॥१०४॥ धन्योऽपि धन्यधीस्तेभ्यो, ददौ ग्रामान् पृथक् पृथक् । दुर्जनेष्वपि संतो हि, प्रकृत्यैव हिताः सदा ॥१०५॥ गृहकृत्यमसौ न्यस्य, पितृषु स्वेच्छया स्वयम् । व्यलसत् सह पत्नीभिः, करिणीभिः करींद्रवत् ॥१०६॥ गोभद्रोऽथ महावीरपार्श्वे दीक्षामुपाददे । व्रतमासेव्य षण्मासान्, स्वर्गलोकमवाप च ॥१०७॥ प्राच्यपुण्यपरीपाकाच्छालिभद्रस्य सोऽमरः । प्राग्जन्मप्रेमतोऽत्यर्थमभूद् वात्सल्यलालसः ॥१०८॥ वस्त्रालंकारमाल्यादि, ददौ दिव्यमयाचितम् । भव्यकल्पद्रुवत्तस्मै, सभार्यायापि सोऽन्वहम्॥१०९॥ गृहकार्याणि सर्वाणि,भद्राऽप्यचीवृतत् पुनः। सुखमग्नस्त्वसौ वेत्ति,न रात्रिं न दिनाऽपि च॥११०॥ तत्र देशांतरादेत्य, वणिजः केचिदन्यदा । वर्यान् श्रेणिकराजस्यादर्शयन् रत्नकंबलान् ॥१११॥ नाग्रहीत् स महार्घ्यत्वात्, तांस्तेऽथ

वणिजो ययुः । भद्रागेहे समस्तांस्तांस्तदुक्तार्घ्येण साऽग्रहीत् ॥११२॥ अथोचे चेल्लणादेवी, श्रेणिकं देव ! मत्कृते । अनुगृह्य महार्घ्योऽपि, गृह्यतां रत्नकंबलः॥११३॥ राज्ञाऽप्येकोऽथ मूल्येन, वणिग्भ्यः कंबलोऽर्थितः । तेऽप्यूचुः कंबलान् सर्वान् , भद्रा जग्राह हेलया ॥११४॥ प्रवीणं पुरुषं प्रैषीद् , भद्रापार्श्वेऽथ पार्थिवः । रत्नकंबलमादातुं, मूल्यदानेन सादरः॥११५॥ प्रार्थिता तेन भद्रोचे, तान् सर्वान् छिन्नवत्यहम् । शालिभद्रप्रियापादप्रोंछनाय तदैव हि ॥ ११६ ॥ चेद्रत्नकंबलैर्जीर्णैः, कार्यं स्यात् तत्र किंचन । तद् गत्वाऽऽपृच्छ्य राजानं, गृह्णीयास्त्वं यथारुचि ॥ ११७ ॥ गत्वाऽऽख्यात् सोऽपि तद्राज्ञे, चेल्लणोचे नृपं ततः । वणिजां भूभुजां पश्य, रुक्मरीर्योरिवान्तरम् ॥ ११८ ॥ पुनस्तं पुरुषं प्रेष्याकारितेऽनेन कौतुकात् । प्रेक्षितुं शालिभद्रेऽथ, भद्रैत्यैनं व्यजिज्ञपत् ॥११९॥ न जातु याति मे जातो, जगतीश ! बहिर्गृहात् । तत् प्रसद्य गृहं मेऽद्य, स्वांह्रिन्यासात् पवित्रय ॥१२०॥ राजापि कौतुकादुत्कस्तद्वचः प्रत्यपद्यत । भद्राऽप्यागाद् गृहे क्षिप्रं, प्रतीक्ष्य क्ष्मापतिं क्षणम् ॥ १२१ ॥ विचित्ररत्नमाणिक्यमंचोन्मंचचयांचिताम् । व्यधत्त हट्टशोभां सा, स्वगेहादानृपौकसः ॥१२२॥ तयाऽऽहूतस्ततो राजा, हट्टशोभां विभावयन् । निर्मितामिव गीर्वाणैः, शालिभद्रगृहेऽगमत् ॥१२३॥ यच्चोच्चकांचनस्तंभैर्भ्रिद्रनीलाश्मतोरणैः । कांचनाचलचूलास्थपांडुकश्रीमलिम्लुचम् ॥ १२४ ॥ मौक्तिकस्वस्तिकं रेजे, यत्राज्यैस्तद्दिदृक्षया । दूरादागत्य विश्रांतैस्तारतारोत्करैरिव ॥१२५॥ विचित्रचारुरत्नौघचंचदुल्लोचरुक्चयैः । निर्यद्भिर्यददीपिष्ट, शक्रचापैरिवामितः ॥१२६॥ विस्मयसेरवक्त्राक्षस्तद्विवेश विशांपतिः । चतुर्थ्यां भुवि रात्रे च, सिंहासन उपाविशत् ॥१२७॥ गत्वा भद्राऽथ सप्तम्यां, भूम्यां भद्रेयमभ्यधात् । आयातः श्रेणिकोऽस्त्यत्र, क्षणमेहि तमीक्षितुम्॥१२८॥ बभाषे शालिभद्रोऽथ, भद्रां मातस्त्वमेव यत् । मूल्यं वेत्सास्य पण्यस्य, तत् कुर्यास्तत्र किं मया ?॥१२९॥ भद्रा भूयोऽप्युवाचैवं, वत्स !

पण्यमिदं नहि । अयं हि सर्वलोकानां, स्वामी नश्चापि निश्चितम्॥१३०॥ श्रुत्वेत्यसौ हृदि स्वीये, दध्यौ स हृदयाग्रणीः । धिग् धिक् सांसारिकैश्वर्यं, स्वाम्यन्यो यन्ममाप्यभूत् ॥१३१॥ भोगिभोगनिभैर्भोगैर्वैवश्यविषदूषितैः । कृतमेभिः श्रयिष्यामि, व्रतं श्रीवीरसन्निधौ ॥१३२॥ एवं वैराग्यसंवेगयुक्तोऽप्यंबानुरोधतः । अभ्येत्य सप्रियो भूपं, विनीतः प्रणनाम सः ॥१३३॥ सस्वजे श्रेणिकः स्नेहात्, स्वांगे सुतमिवासयन् । आजघ्रौ सादरं शीर्षे, प्रेक्षांचक्रे च तं मुहुः ॥१३४॥ म्लानिमाप क्षणेनाथ, राज्ञोऽसौ माल्यगंधतः । सोमालमालतीमाल्यमिव पाणिप्रमर्दनात् ॥१३५॥ भद्रोचे मुच्यतां मंक्षु, देवायं देवभोगभुक् । सोढुं मर्त्यस्रगादीनां, गंधमप्येष न क्षमः ॥१३६॥ प्रत्यहं सप्रियस्यास्य, देवभूयं गतः पिता । दिव्यांगरागनेपथ्यपुष्पादीनि प्रयच्छति ॥१३७॥ विसृष्टः पार्थिवेनाथ, सोऽगात् सप्तमभूमिकाम् । भार्याभिः संयुतः स्वर्गमप्सरोभिरिवामरः ॥१३८॥ विज्ञप्तो भद्रया भूभुग्, भोक्तुं मेनेऽथ सा क्षणात् । समस्तं साधयामास, श्रिया किं किं न सिद्ध्यति ? ॥१३९॥ स्नानीयतैलचूर्णांबुपूरैस्तूर्णमिलापतेः । स्नातोऽङ्गुलीयमंगुल्याः, स्नानवाप्यामथापतत् ॥१४०॥ तरलाक्षस्तदन्वैपीद्राजा यावदितस्ततः । तद्वाप्या वारि भद्रा द्राग्, दास्याऽन्यस्यामनाययत्॥१४१॥ तदंगुलीयकं राजा, दिव्यालंकारमध्यगम् । दृष्ट्वाऽङ्गारनिभं चेटीं, किमेतदिति पृष्टवान् ॥१४२॥ सोचे स्नातः सभार्यस्य, शालिभद्रस्य नित्यशः । प्रक्षिप्यतेऽत्र वाप्यंतर्निर्माल्यवदलंकृतिः ॥१४३॥ इत्याकर्ण्य नृपोऽध्यासीद्, धन्योऽयं प्रवरर्द्धिकः । यद्वा धन्योऽहमेवास्मि, यद्राज्ये संत्यमूदृशाः ॥१४४॥ भोजयित्वाऽथ सत्कृत्य, वस्त्रालंकरणादिभिः । विसृष्टो भद्रया हृष्टः, स्वस्थानमगमन्नृपः ॥१४५॥ संसारं त्यक्तुकामोऽस्ति, यावद् गोभद्रनंदनः । तावदागत्य विज्ञप्तो, धर्म्ममित्रेण धीमता ॥१४६॥ आगादिह चतुर्ज्ञानी, देवदानववंदितः । उद्याने धर्म्मघोषाख्यः, सूरिर्धर्म इवांगवान् ॥१४७॥ इत्याकर्ण्य रथस्थोऽसौ, तत्र गत्वा गुरून् मुदा । नत्वा

निषद्य शुद्धोर्व्यामश्रौषीद्धर्मदेशनाम् ॥१४८॥ प्रस्तावे च पुनर्नत्वा, तमप्राक्षीत् कृतांजलिः । न स्यादन्योऽङ्गिनां स्वामी, भगवन्! केन कर्म्मणा ? ॥१४९॥ सूरिरूचे श्रयंते ये,दीक्षां प्रेक्षावतां वराः । योगक्षेमविधायित्वात्ते नाथाः सर्वदेहिनाम् ॥१५०॥ शालिभद्र इति श्रुत्वा, गुरून्नत्वा व्यजिज्ञपत् । व्रतमाशु श्रयिष्यामि, स्वामिन्नापृच्छ्य मातरम् ॥१५१ । नैव प्रमाद्यमत्रार्थे, इत्युक्तः सूरिणा स तु । गृहे गत्वा निजामंबां, नत्वोचे रचितांजलिः ॥१५२॥ धर्म्मः श्रुतो मयाऽद्य श्रीधर्म्मघोषगुरोर्मुखात् । सर्वदुःखक्षयोपायभूतो मोक्षसुखप्रदः ॥१५३॥ साधु साधु व्यधादेतद्, भवांस्तस्यासि तुक् पितुः। अन्वमोद्यत मात्रैवं,शालिभद्रस्तदा मुदा॥१५४॥ सोऽप्यूचे मातरेवं चेत्, तत् प्रसद्य समादिश। व्रतं गृह्णामि नन्वसि,तस्य तातस्य नंदनः ॥१५५॥ भद्राऽवादीत्त्वया युक्तमुक्तमेतद् व्रतं पुनः । वत्सातिदुष्करं लोहयवानां चर्वणादिवत् ॥१५६॥ लालितो दिव्यभोगैस्त्वं, प्रकृत्या सुकुमारकः । कथं महारथं वत्स! वत्सवद्वक्ष्यसि व्रतम् ? ॥१५७॥ स पुनस्तामुवाचैवं,सत्यमेतच्च किं पुनः। दुष्करं कातराणां हि, वीराणां सुकरं ध्रुवम्॥१५८॥ भद्रोचे निश्चयो ह्येष, तथापि त्वं शनैः शनैः। मुंच दिव्यांगरागादीनभ्यस्तैषोऽपि तद्वचः ॥१५९॥ एकैकां तूलिकां पत्नीं, मुंचन्नेष दिने दिने । तथा दिव्यांगरागादीन्, अकार्षीत् परिकर्म्मणाम् ॥१६०॥–सुभद्रा शालिभद्रस्य, स्वसा धन्यं पतिं तदा । रुदती स्नपयंती सा, दृष्ट्वा तेनेत्यपृच्छ्यत ॥१६१॥ किं त्वं रोदिषि साऽप्याख्यद्विषादस्खलिताक्षरा। शालिभद्रः स मे भ्राता,व्रतेच्छुस्तुलनां दधत् ॥१६२॥ भुंक्तेऽथालवणेनासौ, कांजिकेन सहौदनम् । शेते च केवलावन्यां, तेनाहं नाथ! रोदिमि ॥१६३॥ धन्यः सनर्मकं ग्माह, भीरुः फेरुरिवैषकः। हीनसत्त्वः क्षणाद् भोगांस्तत्याज तृणवन्न यः ॥१६४॥ सुत्यजा यद्यमी स्वामिंस्त्यज्यंते किं न ते स्वयम् । सहासमिति भार्याभिरन्याभिर्जगदेऽथ सः ॥१६५॥ धन्योऽप्युवाच मे यूयं, व्रतविघ्नोद्यता अपि। प्रेरिकाः पुण्यतोऽभूवन्,

गृहीतं विरथ तद् व्रतम् ॥१६६॥ भूयः संभूय ताः प्रोचुः, इदमस्माभिरौच्यत । नर्म्मणा तत् प्रसह्यासान् ,मा स्म त्याक्षीः श्रियोऽपि च ॥१६७॥ अनित्यं सर्वमप्येतत्त्याज्यं नित्यसुखैषिभिः । प्रव्रजिष्याम्यवश्यं तदित्याख्यद्धन्य उत्थितः ॥१६८॥ ता अप्यूचुर्वयं स्वामिन् !, गृह्णीमस्त्वामनु व्रतम् । एवमुक्तवतीर्धन्या, धन्यंमन्योऽन्वमन्यत ॥ १६९ ॥–इतश्च समवासार्षीत्, श्रीवीरस्तत्पुराद् बहिः । विदांचक्रे च धन्येन, धर्म्ममित्रगिरा द्रुतम् ॥ १७० ॥ धनं नियोज्य धर्म्मादौ, सभार्यः शिबिकास्थितः । श्रीवीरचरणौ धन्यः, शरण्यौ शरणं ययौ ॥१७१॥ शिबिकायाः समुत्तीर्य, सभार्योऽसौ व्यजिज्ञपत् । दीक्षां भवार्णवोत्तारे, तरीवद्देहि मे विभो! ॥१७२॥ विधिवद्विश्वनाथोऽपि, सदारं तमदीक्षयत् । जितंमन्यो निशम्यैतत्, शालिभद्रोऽप्यतृप्यत ॥१७३॥ प्रमोदान् मेदिनी-शेनान्वीयमानो महर्द्धियुक् । गत्वा जिनांतिके दीक्षामादद्दे मुदितोऽथ सः ॥ १७४ ॥ जिनराजस्ततोऽन्यत्र, यतिराजीविराजितः । विजहार यथायोग्यं, सयूथो गजराजवत् ॥१७५॥ सदागममधीयंतौ, विहरंतौ सहार्हता । तौ धन्यशालिभद्रर्षी, तेपाते दुस्तपं तपः ॥१७६॥ कदाचिच्चक्रतुः पश्चात्, पारणं तौ महामुनी । मासात् द्वित्रिचतुर्मासात् ,निरपेक्षौ वपुष्यपि॥१७७॥ आतापनापरौ नित्यं, धर्म्मध्यानविधायिनौ । सेहाते साहसावासौ, दुःसहांस्तौ परीषहान् ॥१७८॥ चारित्रं निरतीचारमाचरंतौ चिरंतनम् । कृशयांचक्रतुः कर्म्म, कायं च चिरलालितम्॥१७९॥ विहरन्नन्यदा स्वामी,पुना राज्यगृहं पुरम् । समेत्य समवासार्षीत् ,तं प्रणंतुं ययुर्जनाः॥१८०॥ प्रणम्य शालिभद्रोऽथ, मासक्षपणपारणे । आपपृच्छे प्रभुं धन्ययुक्तो भिक्षामटाटितुम् ॥१८१॥ स्वाम्याख्यन् मातृहस्तात्ते, भवि-ष्यत्यद्य पारणम् । इच्छामीति भणित्वाऽसौ, पुरांतस्तद्युतो ययौ ॥१८२॥ उच्चनीचगृहाण्येतौ, भ्रमंतौ समितौ क्रमात् । गत्वा भद्रा-गृहद्वारे, तस्थतुः सुस्थिताशयौ॥१८३॥ अत्युग्रतपसा तौ तु, चर्म्मभस्त्रोपमांगकौ । मलक्लिन्नौ न केनापि, महर्षी उपलक्षितौ ॥१८४॥

श्रीवीरं वंदितुं शालिभद्रं धन्यं च भक्तितः। यामीत्युत्कंठया व्यग्रा, भद्राऽप्येतौ विवेद न ॥१८५॥ तौ च तत्र क्षणं स्थित्वा, निर्ममौ तद्गृहाद् बहिः। निर्गत्य समितौ गुप्तौ, गोपुरेण निरीयतुः ॥१८६॥ अद्राक्षीच्छालिभद्रस्य, धन्या पूर्वभवप्रसूः। दध्यादीनथ विक्रेतुं, प्रविशंती पुरे तकौ ॥१८७॥ स्तनाभ्यां प्रस्नुवत्स्तन्या, पश्यंती प्राक्सुतं निजम्। नत्वा ताभ्यां मुदा धन्या, धन्यंमन्या ददौ दधि ॥१८८॥ शालिभद्रः प्रभोः पार्श्वे, गत्वाऽऽलोच्य यथाविधि। अप्राक्षीत् पारणं नाथ!, कथं मे मातृनोऽजनि? ॥१८९॥ अथाख्याच्छालिभद्रस्य, भाविभद्रस्य भद्रकृत्। प्राग्जन्मचरितं सर्वं, सर्ववेदी सविस्तरम् ॥१९०॥ विधाय पारणं दध्ना, विधिनाऽऽपृच्छ्य तौ प्रभुम्। जग्मतुर्भववैराग्यभृतौ वैभारमूर्द्धनि ॥१९१॥ सुप्रत्युपेक्षिते धीरौ, तौ महर्षी शिलातले। पादपोगमं नामानशनं तत्र चक्रतुः ॥१९२॥ भद्राऽथ भक्तिसंयुक्ता, समं श्रेणिकभूभुजा। समेत्य स्वामिनं नत्वा, पप्रच्छ स्वच्छमानसा॥१९३॥ तौ धन्यशालिभद्रर्षी, युष्मच्छिष्यौ विभो! क्व नु?। कस्मादस्मान् समाधातुमस्मद्वेश्मनि नागतौ?॥१९४॥ स्वाम्याख्यत् त्वद्गृहायातौ, त्वयाऽज्ञायातुमुत्कया। तपोनिष्टप्तगात्रौ तौ, न ज्ञातौ निर्ममोत्तमौ॥१९५॥ निर्यांतौ नगरद्वारे, शालिभद्रस्य धन्यया। पूर्वजन्मांबया दध्ना, भक्त्या तौ प्रतिलंभितौ ॥१९६॥ कृत्वा तौ पारणं कर्तुं, प्रस्थानमिव निर्वृतेः। गत्वा वैभारशैलाग्रेऽनशनं चक्रतुर्मुनी ॥१९७॥ राज्ञाऽन्विता ततो भद्रा, गत्वा वैभारमूर्द्धनि। अद्राक्षीत्तौ मुनी ग्रावनिर्मिताविव निश्चलौ ॥१९८॥ दृष्ट्वा तत्कष्टमुत्कृष्टं, तयोः मात्रिकर्मिदयोः। भद्रा भद्राशयाऽप्याशु, शुचाऽत्यर्थमपूर्यत॥१९९॥ निर्झराणि क्षरंतीव, साऽश्रुश्रेण्या तथोच्चकैः। रोदयंतीव वैभारं, रुदितप्रतिनिस्वनैः ॥२००॥ स्मारं स्मारं मुखान्युच्चैस्तान्येतानि तपांसि च। शालिभद्रस्य भद्रेयं, विललाप विपेदृशी ॥२०१॥ यस्त्वं न सोढवान् पूर्वं, मर्त्यमाल्यादिकान्यपि। शीतवातातपाद्यार्तीर्वत्स! सोढाऽस्यतः कथम्॥२०२॥ यत्तेऽगं रत्न-

पल्यंकतूलितोत्करलालितम्। ग्रावणि च तदत्रातिकर्कशे भविता कथम्? ॥२०३॥ दिव्याहारैश्चिरं यत्तु, पोषितं ते वपुष्टमम्। अधुनाऽनशनेनैवं, तत् त्यक्तुं शक्तवान् कथम्? ॥२०४॥ किं मे शोच्यमितोऽप्यूर्द्ध्वं, यन्मया मंदभाग्यया। गृहागतोऽपि न ज्ञातस्त्वं धन्यो धन्यसंयुतः ॥२०५॥ मनोरथः पुरेत्यासीत्, कदा भिक्षार्थमागतम्। द्रक्ष्यामि शालिभद्रर्षिं, स्वगेहे धन्यसंयुतम् ॥२०६॥ अस्मादनशनारंभान्, मनस्येव स मेऽधुना। व्यलीयत यथा कूपच्छाया तत्रैव गुर्व्व्यपि ॥२०७॥ प्रारब्धं यत्त्वया तत्र, न स्यां विघ्नविधायिका। किं त्वस्मात्कर्कशपृष्ठाच्छिलापृष्ठादितो भव॥२०८॥ अथोचे तां नृपः किं त्वं, हर्षस्थाने विषीदसि?। सर्वस्मिन्नपि विश्वेऽस्मिन्, यत्त्वमेकाऽसि वीरसूः ॥२०९॥ यत्पूर्वं दानवीरोऽयं, भोगवीरोऽत्र जन्मनि। सांप्रतं तु तपोवीरो, यस्याः पुत्रोऽयमीदृशः ॥२१०॥ किंच यच्छ्रीर्जगज्ज्येष्ठा, जगज्ज्येष्ठश्च यद्गुरुः। जगज्ज्येष्ठं तपो यस्य, जगज्ज्येष्ठोऽयमेव तत् ॥२११॥ चित्रीयितचरित्रोऽयं, पवित्रीकृतभूतलः। यदीदृग् ते सुतस्तेन, विषादं मा कृथा वृथा ॥२१२॥ उत्तिष्ठ मैतयोर्विघ्नं, विधास्त्वं ध्यानवर्त्मनि। स्वार्थं समर्थयेतां हि, महासाहसिकाविमौ ॥२१३॥ नृपेण श्रेणिकेनैवं, भद्रा भद्रीकृताशया। तौ नत्वाऽथ निजं धाम, जगाम क्ष्माधिपोऽपि च ॥२१४॥ विधायानशनं मासं, तौ महर्षी विपद्य च। सर्वार्थसिद्धेऽजायेतामहमिंद्रौ सुरोत्तमौ ॥२१५॥ तत्र सौख्यं त्रयस्त्रिंशत्सागराण्यनुभूय तौ। विदेहेषु समुत्पद्य, प्रव्रज्य शिवमेष्यतः ॥२१६॥ चरितमिति विदित्वा धन्यनाम्नः पवित्रं, त्रिभुवनजनमान्यं शालिभद्रस्य चोच्चैः। नरसुरशिवसौख्यप्रापके भव्यसत्त्वाः!, प्रकुरुत गुरुयत्नं दानकर्म्मण्यजस्रम् ॥२१७॥ इति धन्यशालिभद्रकथा।

कृतपुण्यकथा त्वियम्—श्रावस्तीत्यस्ति पूर्यत्रारामा रामाश्च सुद्विजाः। सत्कर्णिकारकलिताः, पत्रवल्लीविभूषिताः ॥१॥ तत्रासीत् संगतः श्रेष्ठी, धनाढ्यो गुणसंगतः। बंधुलेति प्रिया तस्य, रमणश्च तयोः सुतः ॥२॥ विभवोऽथ प्रभूतोऽपि, तस्य वातात्ततूलवत्।

कुत्राप्यगात् द्रुतं दैवाद्, दैवं हि दुरतिक्रमम्॥३॥ अथायुषोऽप्यनित्यत्वात्, पंचत्वं संगतो गतः। ग्रामेऽगाच्छालिशीर्षेऽथ, बंधुला रमणान्विता ॥४॥ स्वग्रामण्यां निविष्टैषा, तत्रास्थात् कर्म्मकर्म्मठा। रमणस्तत्र लोकानां, वत्सरूपाण्यचारयत् ॥५॥ वदान्योऽसौ प्रकृत्याऽपि, यद्यदाप्नोति सुंदरम्। किंचिद्दत्त्वा ततोऽन्येभ्यः, स्वयमश्नाति शुद्धधीः ॥६॥ महर्षि सोऽन्यदा प्रेक्ष्य, प्रतिमास्थं पुराद् बहिः। मासोपवासिनं शांतं, ववंदे तं प्रमोदतः ॥७॥ क्षणे कस्मिन्नसौ वीक्ष्य, क्षैरेयीमश्नतः शिशून्। गृहे गत्वा ययाचे तामसकृन्मातरं तदा ॥८॥ स्मरंति प्रागवस्थां स्वां, तारं तारं रुरोद सा। अथासन्नगृहस्त्रीभिः, पृष्टा चाख्यद्यथास्थितम् ॥९॥ ददुस्तास्तंदुलादीनि, साऽथ निष्पाद्य पायसम्। पुत्राय परिवेष्यागाद्, गृहांतः कार्यहेतवे ॥१०॥ अथायात् स मुनिस्तत्र, भिक्षार्थं मासपारणे। रमणोऽपि तमीक्षित्वोल्ललासेंदुमिवोदधिः ॥११॥ अभ्येत्य तं प्रणत्योचे, भक्तिनिर्भरया गिरा। गृहाण पायसं किंचित्, कृपां कृत्वा मयि प्रभो ! ॥१२॥ कुर्वन् सोऽनुग्रहं तस्य, पतद्ग्रहमधारयत्। त्रिभागं पायसस्यादाद्रमणोऽपि मुदा तदा ॥१३॥ स्वल्पमेतदिति त्र्यंशं, स द्वैतीयीकमप्यदात्। मेदं विनेशदन्येनेत्यदादंशं तृतीयकम्॥१४॥ सत्पात्रचित्तवित्तानां, संबंधाद् बंधुराशयः। बबंध बंधुलासूनुस्तदाऽऽयुर्वैबुधं बुधः ॥१५॥ मुनिर्जगाम तद्गेहान्निर्जगामाथ मध्यतः। बंधुला सा पुनस्तस्मै, प्रभूतं पायसं ददौ ॥१६॥ भुक्त्वा गृद्ध्या तदाकंठं, स विसूचिकया निशि। सन्मनास्तं मुनिं ध्यायन्, विपद्य त्रिदशोऽभवत् ॥१७॥—देशोऽथास्त्यत्र विख्यातः, समृद्धो मगधाभिधः। पुरं राजगृहं तत्र, क्षितिस्त्रीतिलकोपमम् ॥१८॥ तत्रानेकमहीपालमालाचूलामणीयितः। सम्यग्दर्शनपूतात्मा, श्रेणिकोऽस्ति महीपतिः ॥१९॥ धीधनानां नृणां धुर्यो, धार्मिकाणां शिरोमणिः। मंत्रिपंचशतीमुख्योऽभयस्तस्यास्ति सत्सुतः ॥२०॥ श्रेष्ठी धनावहो नाम, पुरेऽत्रास्ति महाधनः। भार्या भद्राभिधा चास्य, भद्रांगी भद्रभाग्यभूत् ॥२१॥ तत्कुक्षिकुहरे राजहंसवत् सरसीरुहे।

स जीवो रमणस्याथ, पुत्रत्वेनावतीर्णवान् ॥२२॥ सुखेन सुषुवे साऽथ, समये सूनुमुत्तमम्। सर्वलक्षणसंपूर्णं,कल्पद्रुमिव मेरुभूः॥२३॥
प्रारेभे तत्पिता तस्य, महांतं जननोत्सवम् । तत्रायातो जनः सर्वोऽप्येवमूचे विलोक्य तम् ॥२४॥ अवश्यं कृतपुण्योऽयं, कृतपुण्यो-
ऽयमेव हि । योऽपुत्रिणि धनाढ्ये च, यदीदृक्षे कुलेऽजनि ॥२५॥ ततः पिताऽभिधां तस्य, कृतपुण्य इति व्यधात्। ववृधे लाल्य-
मानश्चानूपदेश.इव द्रुमः ॥२६॥ कला अविकलाः काले, किलाग्रे कलिता इव। सकलाः कलयामास, कलाचार्यात् स लीलया॥२७॥
पुण्यलावण्यसंपूर्णः, सत्पुण्यः कृतपुण्यकः । वरेण्यं प्राप तारुण्यं, घिष्ण्यं सौभाग्यसंपदः॥२८॥ पित्राऽसौ परया प्रीत्या, श्रेष्ठिपुत्र्या
सुरूपया । रूपवत्याख्यया सार्धं, महर्द्ध्या परिणायितः ॥२९॥ सिषेवे विषयान्नैष, संतोषादीषदप्यथ। कलाभ्यासपरस्तस्थौ, मुनि-
वद् विजितेंद्रियः॥३०॥ भद्रयोचेऽन्यदा श्रेष्ठी, कथंचित्त्वं तथा कुरु। यथा मदात्मजो भोगान्, भुंक्ते पंचविधानपि ॥३१॥ जगा-
दैनामिति श्रेष्ठी, सर्वे संविद्भृतोऽंगिनः । परिग्रहभयाहाररतसंज्ञाः स्वतोऽपि हि ॥३२॥ भद्रा भूयोऽप्युवाचैवं, तथापि तेन मानय।
इमां श्रियमसंख्येयां, श्रियाऽन्यत्किं करिष्यते ?॥३३॥ बलिष्ठं रुयाग्रहं ज्ञात्वा, श्रेष्ठिश्रेष्ठो धनावहः। गोष्ठ्यां दुर्ललिताख्यायामक्षेपेण
तमक्षिपत् ॥३४॥ पुरोद्यानवसत्यादौ, भ्रमन् सोऽगात् पणस्त्रियः । गृहे कामलतायास्तां, सोऽथ दृष्ट्वेत्यचिंतयत्॥३५॥ स्वर्वधूः कि-
मिहायासीत्,शापभ्रष्टेव काऽप्यसौ। निर्ययौ क्ष्मामिमां द्रष्टुं,किं वा पातालकन्यका ?॥३६॥ विद्याधरवधूर्वेह,विश्रांता स्वभ्रमश्रमात्।
ध्यायन्नित्येष तत्रैव, तस्थौ तद्भक्तिरंजितः ॥३७॥ गत्वाऽथ श्रेष्ठिनो मित्रैर्वृत्तांतोऽयं निवेदितः । ततः श्रेष्ठी प्रहृष्टात्मा, भांडा-
गारिकमादिशत् ॥३८॥ यद्यदानाययेद् द्रव्यं, कृतपुण्यः पणस्त्रिया । तत्तदापूरयेस्त्वं भो, अभिज्ञानेन तस्य तु ॥३९॥ कृतपुण्यो-
र्मिकां लात्वा, दास्याऽकाऽऽनाययद् धनम् । स्वेच्छया तद्गृहान्नित्यं, स्वकीयात् श्रीगृहादिव ॥४०॥ कृतपुण्यस्तु तत्साधुदानपुण्य-

प्रभावतः । बुभुजे केवलान् भोगान्, सार्द्धं पण्यस्त्रियाऽनया ॥४१॥ द्वादशाब्दीति तस्यागात्, तत्पुण्यत्र्यंशसंयुता । विपेदाते च तन्मातापितरौ सहितौ श्रिया ॥४२॥ वर्षमेकं तथाऽप्यस्यापूरि रूपवती धनम् । अथान्यदा धनायाक्ता, प्रैषीद्दासीं तदोकसि ॥४३॥ स्वालंकारांस्तथा तद्भुं, पतिभक्ताऽथ साऽऽर्प्पयत् । दृष्ट्वैतत् कुट्टिनी जज्ञौ, यदस्य त्रुटितं धनम् ॥४४॥ दीनाराणां सहस्रं तानलंकारांश्च सा ततः । कृतपुण्यगृहे प्रैषीद्, रहस्यूचे च पुत्रिकाम् ॥४५॥ तन्वंगि ! तनुवित्तोऽयं, कृतपुण्योऽधुनाऽजनि । विमुंचैनं कुसुंभेक्षु-निर्यासमिव मंक्षु तत् ॥४६॥ साऽप्याख्यन् मैवमाख्यासीर्येन संख्यातिगं धनम् । दत्तं नः स कथंकारं, त्यज्यते लज्ज्यते न किम् ? ॥४७॥ सोचे दत्तं गृहीतं तत्, संप्रत्येषोऽतरायकृत् । प्रियालाप इवादातुरन्यस्यापि प्रयच्छतः ॥४८॥ पुनः कामलतेत्यूचे, पुण्यवानेष दास्यति । भूयोऽथ शिश्रिये तूर्ष्णीं, समयज्ञा हि कुट्टिनी ॥४९॥ संज्ञितः परिवारोऽथ, तयाऽतिक्रूरचित्तया । पराभवितुमारेभे, कृतपुण्यं पदे पदे ॥५०॥ निर्ययौ तद्गृहाच्छीघ्रं, कृतपुण्योऽपमानितः । तिष्ठेत् पराभवं वीक्ष्य, किं कुत्रापि हि केसरी ? ॥५१॥ गतः स्वगेहे तद् दृष्ट्वा, जीर्णं शीर्णं ततश्च सः । प्रियातः सर्ववृत्तांतं, ज्ञात्वा तामित्यभाषत ॥५२॥ पूर्वजोपार्जितं द्रव्यं, प्रभूतमपि मेघवत् । प्रचंडपवनेनाशु, नाशं निन्ये हहा मया ॥५३॥ मनोरथशतैः पुत्रः, पित्रोर्जज्ञे ययोरहम् । अनेकैः दुष्करैर्वर्योपयाचितशतैः तथा ॥५४॥ वार्धके पालनीयौ तौ, तयोर्दुष्प्रतिकारयोः । नामापि जगृहे नाहं, हीमे मोघा कुलीनता ॥५५॥ अपि मृत्युं तयोर्नाहं, विवेद विषयोन्मुखः । अहो अहं सुजातोऽस्मि, धिग् धिग् दुष्कर्म्मदूषितः ॥५६॥ राकाशशांकसंकाशं, पुष्कलं स्वकुलं मया । उद्धूलितं हहा पश्य, वेश्याव्यसनपांशुना ॥५७॥ मत्पिता सर्वपौराणां, पूज्योऽत्रासीच्छ्रियाऽधिकः । स्वमास्यं दर्शयिष्यामि, निर्द्रव्योऽहं कथं प्रिये ! ॥५८॥ अथोचे रूपवत्येवं, किमेवं नाथ ! खिद्यसे ? । भवत्सु सत्सु भूयोऽपि, भूयोऽपि भविता धनम्

॥५९॥ तयैवं धीरितः सोऽस्थात्तत्रैवाहानि कानिचित् । रममाणस्तया सार्द्धमथ गर्भं बभार सा ॥६०॥ कृतपुण्योऽथ तामूचे, प्रिये ! द्रव्याहते पुमान् । चंचापुमानिव क्वापि, न गुण्यो गुणवानपि ॥६१॥ तस्मादुपार्जयिष्यामि, गत्वा देशांतरेऽपि तत् । साऽऽख्यद्यूयं विजानीथ, प्रतस्थे सोऽथ तं प्रति ॥६२॥ तत्राह्नि प्रस्थितं ज्ञात्वा, सार्थं प्रति तमालिनीम् । भार्ययाऽऽनीतशय्यायां, तदंतर्निश्यशेत सः ॥६३॥—इतश्च नगरेऽत्रैव, नवोढः कश्चिदिभ्यसूः । दिग्यात्राप्रस्थिते ताते, मृते द्रव्यार्जनेच्छया ॥६४॥ मुक्त्वा पत्नीश्चतस्रोऽगात्तत्रैपोऽपि विधेर्वशात् । विपेदे भिन्नपोतस्तन्, माता ज्ञात्वेत्यचिंतयत् ॥६५॥ अहो आकस्मिकोऽस्माकमुपतस्थे कुलक्षयः । सांप्रतं रक्षणीयोऽयं, क्षेत्रजैरपि तत्सुतैः ॥६६॥ एतच्च ज्ञापयामास, वधूनां तास्त्विदं जगुः । किं जानीमो वयं मातस्त्वदादेशवशंवदाः ॥६७॥ ततस्तस्यां तमस्विन्यां, मार्गयंत्याऽनया पुरे । पुण्यवान् कृतपुण्योऽसौ, वीक्ष्यानाय्य निजे गृहे ॥ ६८ ॥ प्रातर्निवेद्य वृत्तांतमुक्तो वत्स ! वधूरिमाः । उद्वहाथ बभाषेऽसौ, किं नैताः स्युः परस्त्रियः? ॥६९॥ स्थविरा तद्वचः श्रुत्वा, हृष्टोवाच वचस्विनी । अस्त्येतत्किं त्वसौ कल्पः, पुनर्भ्वे ईदृशो यथा ॥ ७० ॥ "गते मृते प्रव्रजिते, क्लीबे च पतितेऽपतौ । पंचस्वापत्सु नारीणां, पतिरन्यो विधीयते ॥७१॥" अदृष्टपतिकाश्चैतास्ततोऽसौ मौनमाश्रितः । गांधर्वेण विवाहेण, तयेमाः परिणायित ॥७२॥ अरंस्त स्वेच्छया तत्र, विमानोपममंदिरे । कृतपुण्यः समं ताभिरिंद्राणीभिरिवाद्रिभित् ॥ ७३ ॥ तत्पायसद्वितीयांशदानपुण्योदयादसौ । द्वादशाब्दीं सुखेनास्थात्, सर्वोपद्रववर्जितः ॥७४॥ एकैकस्याश्च तत्पत्न्या, द्वित्राः पुत्रास्तथाऽभवन् । दध्यौ वृद्धाऽथ दृष्ट्वैतान्, स्वलक्ष्मीरक्षणक्षमान् ॥७५॥ ममैनं पुरुषं त्यक्तुं, युज्यते सांप्रतं द्रुतम् । निष्पन्नायां कृषौ को हि, कर्षकं विभृयाद् गृहे? ॥७६॥ ततः साऽऽख्यद् वधूनां तच्चा अप्यूचुश्च तद्वशाः । यातः पथ्यदनं कुर्म्म, एवमस्त्विति साऽभ्यधात् ॥७७॥ चिक्षिपुर्मोदकांतस्ता, रत्नान्येनं जरत्यथ ।

खट्वास्थं शयितं नीत्वा, तस्मिन् देवकुलेऽमुचत् ॥७८॥ तस्मिन्नेव दिने दैवादायात् सार्थोऽपि तत्र सः। तमागतं च विज्ञाय, तत्रा-
गाद्रूपवत्यपि ॥७९॥ पत्यावथोत्थिते लात्वा, पाथेयं तत् ससंमदा। आगाद् गृहेऽथ तस्यैपाऽपातयत् पादयोः सुतम् ॥८०॥ अ-
थैकं मोदकं तस्मै, साऽप्यदात्तं च भक्षयन्। तन्मध्ये मणिमैक्षिष्ट, लेखशालामसौ व्रजन् ॥८१॥ अथैकं मोदकं दास्ये, नित्यमित्य-
भिधाय तम्। ज्ञात्वा च जलकांतं तत्,कश्चित् कांदविकोऽग्रहीत्। ८२॥ साऽथ संगोपयंती तानेकस्मिन् भिन्नमोदके। दृष्ट्वा रत्नान्य-
शेषांस्तान्, भित्त्वा सर्वाण्यमीलयत् ॥८३॥ कृतपुण्यमपृच्छच्च,किमेतावंति ? सोऽभ्यधात्। एतावंत्येव जज्ञौ च, पुनर्भूस्नेहजृंभितम्
॥८४॥ तद्रत्नविनियोगेन, श्रीमान् मान्यश्च सोऽभवत्। श्रीरेवैकेहलोकानामद्वितीयं हि मंडनम् ॥८५॥ हस्ती सेचनकोऽन्ये-
द्युर्जगृहे तंतुना ह्रदे। अभयोऽवददाश्वेष,जलकांतेन मुच्यते॥८६॥ योऽर्पयेद् द्रागमुं तस्मै, राजा पुत्रीं प्रयच्छति। तेनेत्युद्घोषणापूर्वं,
दापितः पटहः पुरे ॥८७॥ सोऽथ कांदविकः क्षिप्रं,जलकांतं तमार्पयत्। ह्रदांतस्तेन मुक्तेन,तच्चोयमभवद् द्विधा॥८८॥ मन्यमानः
स्थलं सोऽथ, हस्तिनं तंतुकोऽमुचत्। उपतस्थे नृपं भक्ष्यकारोऽथार्थयितुं सुताम् ॥८९॥ त्रपमाणो नृपः प्रोचेऽभयं ! किं क्रियता-
मिह ?। सोऽथ कांदविकं प्रोचे, ब्रूहि तेऽयं कुतो मणिः ?॥९०॥ सोऽप्याख्यात् कृतपुण्यस्य, सुतेनायं ममार्पितः। कृतपुण्यमथाहू
य, नृपस्तस्मै ददौ सुताम् ॥९१॥ महर्घ्या तं तया सार्धं, परिणाय्य शुभेऽहनि। तस्मै प्रासाददेशादि, ददौ राजा प्रमोदभाक्॥९२॥
कृतपुण्योऽन्यदाऽवादीदभयं पत्तनेऽत्र मे। पुनर्भ्वो हि चतुःसंख्याः, संत्यनेके च तत्सुताः ॥९३॥ न जाने तद्गृहं तन्मे, धीमांस्त्वं
मेलयाथ सः। कृतपुण्याकृतिप्रख्ययक्षार्चान्वितमुच्चकैः ॥ ९४ ॥ द्विद्वारं देवतागारं, पुराद् बहिरकारयत्। यक्षोऽयं वांछितार्थानां,
दायीत्याघोषणा तथा ॥९५॥ तस्मिन्नायतने प्रातः, कृतपुण्ययुतोऽभयः। गत्वाऽथ पश्चिमद्वारे, समध्यास्त धियां निधिः ॥ ९६ ॥

तत्रागान्नगराल्लोको, नानाधिव्याधिबाधितः । यक्षमभ्यर्च्य पाश्चात्यद्वारेण निरगात् पुनः ॥९७॥ सपुत्रास्ताः पुनर्भ्वोऽथ, समीयुर्यक्षमंदिरे । कृतपुण्यस्ततोऽवादीत्ता एता मेऽभय ! प्रियः ॥९८॥ सोऽप्यूचे नर्मणा किं ते, रूच्यत्वाद्रुचिता इमाः ?। एषोऽप्याख्यत् क्षणेनापि, द्रक्ष्यसे साक्षिणाऽत्र किम् ?॥९९॥ तदाऽऽत्मजनकाकारं, वीक्ष्य यक्षं सुतास्तु ते । तात तातेति जल्पंतस्तदुत्संगं समाश्रयन् ॥१००॥ ता अप्यूचुर्यथाऽस्माकं, यक्षमुख्य ! प्रकाशितम् । पत्यू रूपं तथा क्षिप्रं,मेलयेऽमुं प्रसद्य नः॥१०१॥ विज्ञप्यैवं विनिर्यांत्यो, विलोक्यैकपदे पतिम् । तास्तस्थुस्तत्पदैरेव, प्रमोदात् स्तंभिता इव ॥१०२॥ अथागात्तत्र सा कामलता पण्यांगनाग्रणीः। कृतपुण्याकृतिं यक्षं, वीक्ष्य नत्वाऽब्रवीदिदम् ॥१०३॥ यद्यक्षनाथ ! मे प्राणनाथरूपमदीदृशः । सत्यं कामप्रदोऽसि त्वं,तत्ते विज्ञप्यते स्फुटम् ॥१०४॥ पुण्यवान् कृतपुण्योऽभूद् ,भर्त्ता द्वादशवत्सरीम् । ततो मे मंदभाग्यायास्तद्वियोगोऽभवद् भृशम् ॥१०५॥ मृताया निश्चितं नैष, जीवंत्यास्तु कथंचन । संयोगोऽपि कदाचित् स्यात् , तेनासून् धृतवत्यहम् ॥१०६॥ तन्नामाथ स्मरंत्यस्थां, कृत्वा पतिव्रताव्रतम् । खेचरीव महामंत्रं, साधितुं द्वादशाब्दिकम् ॥१०७॥ प्रगे त्वद्य मया प्रैक्षि, यत् स्वप्नः प्रियमेलकः । यदायांत्याश्च मेऽभूवन् ,शकुनाः शुभसूचकाः ॥१०८॥ यच्च पोस्फोर्त्ति सव्यांगं, तन्मन्ये प्रियसंगमः। त्वत्प्रसादाच्च मे क्षिप्रं, यक्षमुख्य ! भविष्यति ॥१०९॥ इत्युक्त्वा सापि निर्यांती, मिमेल स्वपतेस्ततः । निन्ये सोऽपि समस्तास्ताः, सार्थसाराः स्ववेश्मनि ॥११०॥ तत्तृतीयत्रिभागान्नदानपुण्योदयात्तदा । भार्याभिः सप्तभिः सार्द्धं, रेमे सोऽथ यथासुखम् ॥१११॥ प्राग्जन्माभ्यासतो दानं, ददौ दीनादिके सदा । श्रद्धत्ते स्माभयाच्छृण्वन् , शुद्धधीर्धर्म्ममार्हतम्॥११२॥—अन्यदा श्रीमहावीरस्तत्पुरे समवासरत् । तं प्रणंतुं जनैः सार्धं, कृतपुण्यो ययौ मुदा ॥११३॥ जिनेंद्रं विधिवन्नत्वा, पप्रच्छेति कृतांजलिः । भोगानामंतरं मेऽभूद् , भगवन् ! केन कर्म्मणा ? ॥११४॥ स्वामी पूर्वभवं

तस्य, कथयित्वाऽब्रवीदिदम्। अंतराणि व्यधीयंत, यत्तदा ददता त्वया ॥११५॥ तद्वशादत्र तेऽभूवन्नेवं भोगांतराणि भोः। श्रुत्वेति सोऽथ संजातजातिस्मृतिरथोऽवदत् ॥११६॥ हीनसत्त्वतया पूर्वं, कार्पण्यं ही मया कृतम्। करिष्ये त्वधुना सर्वसंगत्यागमपि प्रभो! ॥११७॥ स्वाम्याख्यत् सर्वथैवेह, युक्तमेतद् भवादृशाम्। इच्छामीति भणित्वाऽसौ, विभुं नत्वा गृहेऽगमत् ॥११८॥ पुण्यानुबंधिपुण्योऽसौ, कृतपुण्यो धनं निजम्। सप्तक्षेत्र्यामदात् प्राज्यं, दीनानाथादिके तथा ॥११९॥ भक्तितः श्रेणिकेनासौ, कृतनिष्क्रमणोत्सवः। सभार्योऽपि प्रभोः पार्श्वे, गत्वा व्रतमुपाददे ॥१२०॥ कृतपुण्यः स्फुरत्पुण्यस्तप्त्वाऽत्युग्रं तपश्चिरम्। द्यामवाप ततश्च्युत्वा, क्रमाच्च शिवमेष्यति ॥१२१॥ इति श्रुत्वा वृत्तं जगति कृतपुण्यस्य विपुलं, सुपात्रे सद्दानं सकलकमलाहेतुमतुलम्। विशुद्धश्रद्धास्तद्वितरत जना! दानममलं, लभध्वं यत् स्वर्गादिकमविकलं पेशलफलम् ॥१२२॥ इति कृतपुण्यकथा ॥

दानस्योभयलोकफलदृष्टांतानभिधाय तत्रैव भक्तिमाविर्भावयन् द्विसूत्रीमाह—

मणेणं तह वायाए, काएणं च तहेव य। अप्पाणं कयकिच्चं तु, मण्णमाणो सुसावओ ॥१८४॥
एयं मे अत्थसारं तु, एयं वत्थं पडिग्गहं। जं मए अज्ज साहूणं, निग्गंथाणं तु नीणियं ॥१८५॥

सुगमा, नवरं पुनः सुश्रावकग्रहणमनित्यवित्तादिपदार्थसार्थस्य सारासारतां स एव जानातीति ज्ञापनार्थं, 'एयं मे' इत्यादि, एतदेव मेऽर्थस्य—अन्नपानादिपदार्थस्य सारं—प्रधानं,तथा एतद्वस्त्रं पतद्ग्रहश्च 'नीणियं'ति ढौकितं,दत्तमित्यर्थः॥ अत्र कारणमाह—

न कया पुन्नरहियाणं, गेहे इंति सुसाहुणो। निम्ममा निरहंकारा, खंता दंता जिइंदिया ॥१८६॥

स्पष्टः, नवरं दांता—नोइंद्रियदमेनेति ॥ एतदेव दृष्टांतपुरस्सरं द्रढयति—

कत्थ मरुत्थलि सुरकप्पपायवो, मायंगगेहे य मत्त अइरावणो। दारिद्दगेहे य हिरण्णवुट्ठी, तिमिसगुहाए रयणप्पईवो ॥१८७॥ कत्थ एयारिसा पुरिसा कत्थ अम्हारिसत्ति य ॥

मरुत्थलित्ति लुप्तसप्तम्येकवचनत्वान् मरुस्थल्यां–प्रचंडचंडांशुकरनिकरसंपर्कसंतापमूर्मुरायमानसिकताकणानुकृततप्तकवल्यां बदरीकरीरप्रमुखाधमभूमिरुहैरपि रहितसमस्तभूप्रदेशावल्यां कुत्रानल्पसंकल्पसंदोहसंपादनपाटवप्रतिहतरौद्रदारिद्र्यमुद्रातपः सुरकल्पपादपः १,तथा पतितातिबीभत्सगंधसंबंधोद्धुरमृतगोकलेवरादिसमूहे मातंगगेहे कुत्र देवराजीविराजमानदेवराजसभालंकारप्रवणः समुचितो मत्त ऐरावणः १, तथा तथाविधधान्यभरासंपूर्णजठरपिठरत्वेन कलहायमानदुर्दांतडिंभसंदोहे दरिद्रगेहे कुत्र कृतनयनमनस्तुष्टिः सुवर्णवृष्टिः १, तथा गुरुतरतिमिरभरेण पदार्थसार्थावलोकनासहायां तिमिस्रगुहायां कुत्र देदीप्यमानसमस्तसमीपः सुष्ठु रत्नप्रदीपः, अयमत्राशयः–यथा मरुस्थल्यादिस्थानेष्वसंभावनीयशुभपदार्थप्रादुर्भावेषु कदाचन गुरुतरभाग्यसंभाग्यसंभारलभ्या अपि सुरकल्पपादपादयः प्रादुर्भवंति तथा 'कत्थ एआरिसा पुरिसा कत्थ अम्हारिस'त्ति कुत्र एतादृशाः स्वर्गापवर्गप्रगुणगुणगणमणिधरणसमुद्राः साधवः कुत्रास्मादृशास्तथाविधवरेण्यपुण्यपुण्यविकला इति ॥ परं यदेतादृशोरपि संयोगः समजनि तत्किमित्यत आह—

ता धन्नो सुकयत्थोऽहं, पुण्णा अज्ज मणोरहा। जं मए परभत्तीए, साहुणो पडिलाभिया ॥१८८॥

स्पष्टा ॥ सांप्रतं सर्वोत्तमदानप्रदर्शनायाह—

तओ परमभत्तीए, वंदित्ता मुणिपुंगवे। सव्वदाणप्पहाणाए, वसहीए निमंतए ॥१८९॥

ततः–अन्नादिदानानंतरं परमभक्त्या वंदित्वा मुनिपुंगवान् सर्वदानप्रधानया–सर्व्वदातव्यवस्तूत्तमया मूलगुणादिकालाति-

क्रांतादिदोषरहितया वसत्या निमंत्रयते, तत्रामी मूलगुणाः—पिट्ठी वंसो दो धारणा य२ चत्तारि मूलवेलीओ ४। मूलगुण सपरिकंमा एसा सिज्जा उ नायव्वा ॥१॥ साधुमुद्दिश्यैते कृता वसतेर्मूलगुणा भण्यंते,एवमुत्तरत्रापि,मूलोत्तरगुणास्त्वमी—वंसं१ कडणु२-कंबण३ छायण४ लेवण५ दुवार६ भूमी य ७। सपरिकम्मा य सिज्जा एसा मूलुत्तरगुणेहिं ॥१॥ उत्तरगुणाश्चैते—दूमिय१ धूमिय२ वासिय३ उज्जोविय४ वलिकडा५ अवत्ता य ६। सित्ता७ संमट्ठाविय८ विसोहिकोडिं गया वसही ॥१॥ कालातिक्रांतादिदोषास्त्वेते—कालाइक्कंत१ उवट्ठाण२ अभिकंत३ अणभिकंता य४। वज्जा य५ महावज्जा६ सावज्ज७ मह८ प्पकिरिया य ९ ॥ १ ॥ उडुवासासमईया कालाइक्कंत सा भवे सिज्जा१। सच्चेव उवट्ठाणा दुगुणादुगुणं अवज्जित्ता२ ॥२॥ जावंतिया उ सिज्जा अण्णेहिं सेविया अभिकंता३। अण्णेहिं अपरिभुत्ता अणभिकंता उ पविसंते४ ॥ ३ ॥ अत्तट्ठकडं दाउं जईण अन्नं करेइ वज्जा उ ५। जम्हा तं पुव्वकयं वज्जंति अओ भवे वज्जा ॥४॥ पासंडकारणा खलु आरंभो अभिणवा महावज्जा ६। समणट्ठा सावज्जा७ महसावज्जा उ साहूणं८ ॥५॥ जा खलु जहुत्तदोसेहिं वज्जिया कारिया सअट्ठाए। परिकम्मविप्पमुक्का सा वसही अप्पकिरिया उ९ ॥७॥ त्ति ॥ दानेषु वसतेः प्राधान्यं सहेतुकमुपदर्शयति—

दाणाण दाणं वसही पहाणं, तद्दाणओ जं सयलंपि दिन्नं।
सज्झायझाणासणपाणओही, सुक्खं बलं वुद्धिचरित्तसोही ॥१९०॥

दानानां वस्त्रान्नपानादीनां मध्ये प्रधानं दानं वसतिरेव, यद्—यस्माद्धेतोस्तद्दानात् सकलमपि दत्तं, मंतव्यमितिशेषः, किं तदित्याह—स्वाध्यायध्यानाशनपानोपधयः सौख्यं बलं बुद्धिश्चरित्रशुद्धिश्चेति, तत्र स्वाध्यायो वाचनादिपंचविधोऽपि निराबाधायां वसतौ

मासकल्पादिस्थितानां साधूनामस्खलितप्रसरः, ध्यानं च धर्म्मध्यानादि सुखसाध्यं, तत्र च क्षेत्रे ये साधूनामशनपानोपधयः संपनीपद्यंते, सौख्यमिति साधारणशय्यासद्भावाच्छरीरस्वास्थ्यं, बलमिति दशविधवैयावृत्त्योद्यतानां वातपित्तादिप्रकोपाभावाद्विशिष्टसामर्थ्यं वृद्धिरिति निर्विघ्नाध्ययनादिना पुष्टिर्ज्ञानादीनामिति गम्यते, चरित्रशुद्धिश्च स्त्रीपशुपंडकत्रससंसक्त्यादिदोषैरदूषितायां वसतौ वसतां सुप्रतीतैव, एतानि सर्वाण्यपि वसतेर्दानतः परमार्थतः शय्यातरेण दत्तानीत्यर्थः, अस्या अभावे तेषामप्यभावादिति ॥ शय्यादानस्यैहिकं फलमाह—

इहेव जंमंमि सुकित्तिभोगा, भवन्ति सत्ताण जिणा भणंति।
विमुक्कमोहाण सुसंजयाणं, जे दिंति सत्ता वसहिं पहिट्ठा ॥१९१॥

इहैव जन्मनि सुकीर्त्तिः उत्तमाश्च भोगा भवंति सत्त्वानामिति जिना भणंति, अत्युग्रपुण्यस्येह लोकेऽपि फलदत्वात्, ये किमित्याह—विमुक्तमोहानां—वसत्यादिषु ममत्वरहितानां सुसंयतानां—साधूनां ये ददति सत्त्वा वसतिं प्रहृष्टाः, न तु परोपरोधादिपराधीना इति ॥ पारत्रिकं फलमाह—

देवा य देवलोगेसु, हुंति ते सुमहिड्ढिया। इंदा वा इंदतुल्ला वा, दिंति जे उ उवस्सयं ॥१९२॥

देवाश्च देवलोकेषु भवंति ते सुमहर्द्धिकाः सुष्ठु—अतिशयेन महती—महाप्रमाणा ऋद्धिः—दिव्यविमानवनितादिका येषां ते तथा, सुमहर्धिकत्वमेव विशेषयन्नाह—इंद्रा वा—सौधर्म्मादिसकलकल्पाधिपतयः इंद्रतुल्या वा—तत्सामानिकाः, ये किं?—ये ददति उपाश्रयं, तुशब्दः प्रहृष्टा इत्यस्यानुकर्षणार्थ इति ॥ सांप्रतमैहिकामुष्मिकं फलं सदृष्टांतमाह—

अवंतिसुकुमालो य, वंकचूलनराहिवो। उप्पलागणिया चेव, दिट्ठंता एवमाइया ॥१९३॥

अक्षरार्थः सुगमः, भावार्थस्तु ज्ञातेभ्योऽवसेयः, तत्रेदमवंतिसुकुमालज्ञातम्—स्थूलभद्रगुरोः शिष्यावभूतां दशपूर्व्विणौ। युगोत्तमौ तमोऽतीतौ, महागिरिसुहस्तिनौ ॥१॥ जिनकल्पे व्यवच्छिन्नेऽप्यभ्यासं गच्छनिश्रया। महागिरिगुरुश्चक्रे, महागिरिरिव स्थिरः ॥२॥ सुहस्तिनाऽन्यदाऽवंत्यां, बोधितः संप्रतिर्नृपः। वसुभूतिर्महेभ्यश्च, पाटलीपुत्रपत्तने ॥३॥ देवाधिदेवमानम्योज्ञयिन्यास्तावथेयतुः। एलकाक्षपुरे पूर्वं, दशार्णपुरनामके ॥ ४ ॥ गजाग्रपदके तत्र, महागिरिगुरुर्गिरौ। विधिनाऽनशनं कृत्वा, विपद्य स्वर्गमासदत् ॥५॥ सुहस्तीव सुहस्ती तु, सुसाधुकलभैर्वृतः। विधिवद् विहरन्नुर्व्वीमवंतीमन्यदा ययौ ॥६॥ पुर्मध्येऽन्वेषितुं शय्यां, प्रभुः प्रैषीद्द्वौ वरौ। तौ भद्राश्रेष्ठिनीगेहे, गत्वा शय्यामयाचताम् ॥७॥ विशालां यानशालां सा, दर्शयामास सादरा। आचार्यवर्यस्तत्रासौ, संतस्थे सपरिच्छदः ॥८॥ प्रदोषे नलिनीगुल्माध्ययनं सूरिरन्यदा। निर्दोषं गुणयामास, सुधामधुरया गिरा ॥९॥ प्रासादोपरि भाद्रेयः, शिरीषसुकुमारकः। अवंतिसुकुमाराख्यो, द्वात्रिंशत्प्रमदापतिः ॥१०॥ तदा माणिक्यपल्यंके, शयानोऽथ कथंचन। श्रोत्रामृतं श्रुतं तत्तु, श्रुत्वा प्राग्जातिमस्मरत् ॥११॥ प्रासादाद् द्रुतमुत्तीर्य, गत्वाऽऽचार्यांतिके सुधीः। वंदित्वा तत्पदांभोजं, जगादेति कृतांजलिः ॥१२॥ भगवन्नलिनीगुल्मे, विमाने त्रिदशोऽभवम्। तन्मयाऽद्य स्मृतं जातिं, स्मृत्वा श्रुत्वा श्रुतं त्विदम् ॥१३॥ सारं सारं दिवः शर्माण्युत्तराणि तदत्र मे। रतिर्न सांप्रतं तप्तशिलास्थपृथुरोमवत् ॥१४॥ देहि दीक्षां प्रभो! क्षिप्रं, गंतुमुत्काय तत्र मे। बुभुक्षितो हि भक्तासौ, कालक्षेपं सहेत किम्? ॥१५॥ गुरुरूचे महाभाग!, भूरिभाग्योदयादसौ। प्राप्या दिनोदये तत्ते, दास्यते ज्ञात्यनुज्ञया ॥ १६ ॥ ततोऽतित्वरमाणोऽसौ, केशान् क्लेशानिवात्मनः। समूलानुच्चखानाशु, सात्त्विकः पंचमुष्टिभिः

॥१७॥ स्वयं गृहीतलिंगोऽसौ, मा भूदिति विचिंतयन् । अविहस्तः स्वहस्तेन, सुहस्ती तमदीक्षयत् ॥१८॥ चिरं चारित्रचर्याया, भीरुकोऽनशनं चिकीः । प्रतस्थेऽसौ प्रभुं पृष्ट्वा, प्रीतः पितृवनं प्रति॥१९॥ चरंति यत्र कीनाशाः, स्वैरं विश्वजिघित्सवः । निष्कृपाः कार्त्तिकाहस्ताः, कृतांतस्यानुजा इव ॥२०॥ यच्चौपम्यमधाद् भीष्मैर्घोरघूकशिवारवैः । कल्पांतवातसंक्षुब्धनक्रचक्राकुलोदधेः ॥२१॥ तत्रातिभीतिहेतौ स, श्मशाने वासवेश्मवत् । संचचार सुनिर्भीको, महासत्त्वशिरोमणिः ॥२२॥ अवंतीसुकुमारोऽसौ, सुकुमारः पथि व्रजन् । कर्कशैः शर्करैः काष्ठैर्विध्यमानः पदे पदे ॥२३॥ पद्भ्यां निर्यद्भिरश्रांतमारक्तै रक्तबिंदुभिः । इंद्रगोपैरिव व्याप्तां, कुर्वन् पितृवनावनीम् ॥२४॥ गत्वा कंथारिकाकुंजे, प्रमृज्य पृथिवीतलम् । विधिनाऽनशनं तत्र, पादपोपगमं व्यधात् ॥२५॥ त्रिभिर्विशेषकं। सप्तभिः शिशुभिः सार्द्धं, क्षुधार्त्ताऽपमृगालिका । नवप्रसूता तत्रागाद्, भ्रमंती रक्तगंधतः ॥२६॥ द्वितीये यामिनीयामे, यमयामिरिवाथ सा । दुढौके ढौकनीं कर्तुमिव घोरपरीषहान्॥२७॥ एकस्तया क्रमः साधोर्द्वितीयस्तु तदर्भकैः । प्रारेभे भक्षितुं सोऽथ,महात्मेति व्यचिंतयत् ॥२८॥ चटच्चटिति नो चर्म, भिनत्त्यपि तु कर्म्म मे । त्रटत्रटिति नो मांसं, त्रोटत्याशु किं त्वघम् ॥२९॥ धगद्धगिति नो मेदो, ध्वंसते किंतु दुर्गतिम् । कडत्कडिति नो मेऽस्थि, खंडयत्यशुभं परम् ॥३०॥ सापत्यया तयेत्येप, भक्ष्यमाणः क्षुधार्त्तया। न चुकोप न चुक्षोभ, क्षमासत्त्वैकसेवधिः ॥३१॥ अप्येनां पादखादित्रीं, भवभ्रांतिश्रमासनाम् । मेने महामुनिः स्वांगमर्दिकामिव सन्मनाः ॥३२॥ तृतीये प्रहरे तृप्ता, तथैव मृगधूर्त्तिका। तस्य भक्षितुमारेभे, ऊरू सरलकोमलौ ॥३३॥ यामिन्याश्चरमे यामे,जंबूकी जांगलादिषु। गृद्धा चखाद सा तुंदं, दंतक्रकचभीषणा ॥३४॥ तस्यां तथापि नो तेने, मनागपि मुनिर्म्मनः। मंगलं प्रत्युतामंस्त, स एव विविक्ता[विदुषोऽ]ग्रणीः ॥३५॥ मम तुंदं बिभेदैषा, वराकी न हि जंबुकी । किं त्वनेकभवोपात्तं, कर्म्मग्रंथिं सुदुर्भिदम् ॥३६॥

संसारश्चारके या स्वं,क्षिपंती मां च मोचयेत् । कथंकारमिवैतस्या, अपरः परमो हितः॥३७॥ शोच्या मध्यस्थताऽप्यस्यां, द्वेषं चेत्त्वं करिष्यसि । कृतघ्नेषु तदाऽऽम्नंस्ते, रेखा मुख्या भविष्यति॥३८॥ किंचान्यजन्मतः कायो, नायातो न च यास्यति । तदस्मिन् कीदृशी मूर्च्छा ?, संमुखीनाध्वनीनवत् ॥ ३९ ॥ ध्यायन्निति महात्माऽसौ, विपक्षक्षणदाक्षये । विमाने नलिनीगुल्मे, महर्द्धिस्त्रिदशोऽभवत् ॥४०॥ उत्कृष्टसत्त्वतस्तुष्टैर्यथासंनिहितामरैः । कलेवरं तदाऽऽनर्चे, पुष्पगंधांबुवृष्टिभिः ॥४१॥ अवंतीसुकुमारस्य, प्रातः पत्न्यो विनिद्रिताः । भद्रात्मजमपश्यंत्योऽव्रजन्नाचार्यसन्निधौ ॥४२॥ गत्वाऽपृच्छन् क नो नाथस्तेऽपि सूत्रोपयोगतः । ज्ञात्वा वृत्तांतमेतस्य, यथावृत्तमचीकथन् ॥४३॥ द्रुतं भद्राऽंतिके गत्वा, ता अप्येतन्न्यवीविदन् । साऽपि ताभिः समं प्रेतगृहेऽगाच्छोकसंकुला ॥ ४४ ॥ आकृष्टं दिशि नैर्ऋत्यां, दृष्ट्वा सूनोः कलेवरम् । विललाप रुदत्युच्चैः, रोदयंतीव रोदसीम् ॥४५॥ कस्मादस्मानकस्मात्त्वमत्याक्षीर्वत्स ! वत्सलः । त्यजेर्वा दुःखदान् अस्मान्, विरक्तश्चेद् भवाद् भृशम् ॥४६॥ तत्किं गुरुपदांभोजं, स्वर्गमोक्षसुखप्रदम् । सर्वथा निर्ममत्वेन,दुस्त्यजं त्यक्तवानसि ? ॥४७॥ प्रकृत्या सुकुमारस्त्वं, तथा चापरिकर्म्मितः । कथमित्थं निजप्राणान् ,न तृणायाप्यमन्यथाः ॥४८॥ गृहं मे मंदभाग्याया, व्रतमुद्राभृता त्वया । स्वांघ्रिन्यासैः सकृद्वाऽपि, न पवित्रीकृतं हहा ॥४९॥ भद्रा सिप्रासरित्तीरे, विलप्यैवं वधूवृता । तस्यौर्ध्वदेहिकं कृत्वा, ययौ निजनिकेतनम् ॥५०॥ भवोद्विग्ना विमुच्यैकामंतर्वत्नीं वधूं गृहे । वधूभिः सममन्याभिर्भद्रा व्रतमुपाददे ॥५१॥ पश्चाद् जातेन तद्वध्वास्तारुण्यस्थेन सूनुना । एवं सा प्रश्निता मातर्ननु कुत्र पिता मम ?॥५२॥ तस्याग्रे कथयामास, साऽप्यश्रुप्लावितानना । अवंतीसुकुमारस्य, महाकालकथांतकम् ॥५३॥ स चाकार्षीन्महाकालं, नाम्ना देवकुलं महत् । पितृमूर्तियुतं तस्य, मूर्त्तं यश इवोज्ज्वलम् ॥५४॥ चिरं विहृत्य मेदिन्यां,सुहस्ती न्यस्य सूरिताम् । शस्ये शिष्ये स्वयं कृत्वाऽनशनं स्वर्गमीयि-

वान् ॥५५॥ अवंतिसुकुमारस्य, जीवो भुक्त्वा दिवः सुखम्। च्युत्वा चारित्रमाचर्य, क्रमान् मोक्षमवाप्स्यति ॥५६॥ इत्यवंतिसुकुमार-वृत्तकं, स्वर्गहेतुमधिगम्य मानवाः! । तद्वदध्वमनगारिणां मुदा, दानमत्र वसतेः कृतोद्यमाः॥५७॥ शय्यादानेऽवंतिसुकुमारकथा।

वंकचूलकथा त्वियम्—शय्यादानगुणख्यात्री, संवेगरसकूपिका। सप्तव्यसननिंदित्री, वंकचूलिकथोच्यते ॥१॥ अस्त्यपाग्भ-रतार्द्धेऽत्र, मध्येखंडस्य मध्यगम्। विश्वविश्वश्रियां धाम, श्रीपुरं नामतः पुरम् ॥२॥ यथार्थनामा विमलयशास्तत्र नृपोऽभवत्। प्रिया सुमंगला तस्य, नामतो गुणतोऽपि च ॥३॥ रूपलावण्यसंपन्नो, जज्ञे यमलजस्तयोः। पुष्पचूलाभिधः पुत्रः, पुष्पचूला पुनः सुता ॥४॥ तौ शिशुत्वमतिक्रांतौ, कलाकौशलशालिनौ। प्रेमयुक्तौ यथाकाममवियुक्तौ विचेरतुः ॥५॥ अप्यनेकगुणाकीर्णं, पुष्पचूलमथाश्रयत्। द्यूतवसनमत्युग्रं, चंदनद्रुमिवोरगः ॥ ६ ॥ शून्यागारे सभायां वा, मठे देवकुलेऽपि वा। प्रपायां गणिकागेहे, स्थाने नीचतरेऽपि वा ॥७॥ विटैश्च भट्टपुत्रैश्च, नटैश्चारभटैः समम्। रेमे रात्रिंदिवाऽप्येष, निःशेषैरपि कैतवैः ॥८॥ युग्मम् ॥ भूपति-स्तमथोऽवादीद्वत्स! त्वं वेत्सि किं नहि?। दुरोदरमिदं सर्वदोषाक्षय्यखनिर्यतः ॥९॥ "द्यूतं सर्वापदां धाम, द्यूतं दीव्यंति दुर्धियः। द्यूतेन कुलमालिन्यं, द्यूताय श्लाघतेऽधमः ॥१०॥ द्यूतादकीर्त्तिर्धूर्तस्य, व्यसनेषु धुरीणता। द्यूते दोषा भवेऽत्रैते, प्रेत्य दुर्गतिरेव च ॥११॥ किंचाक्षव्यसनात् पुंसां, चौर्यादिव्यसनान्यपि। प्रादुर्भवंति सर्वाणि, कुपथ्यादामया इव ॥१२॥ आदितोऽपि न चेत्त्यक्त-मेतत्तदनु दुस्त्यजम्। अपि तस्य विपाकज्ञैः, पामाकंडूयनं यथा ॥१३॥ तद्वत्स! मुंच मुंचैतत्, द्यूतमापन्नदूषणम्। समाश्रय सतां वृत्तमेतन्नृणां हि भूषणम् ॥१४॥ एवमुक्तोऽप्यसौ पित्रा, मुक्ताकुशलकर्म्मणा। पिशाचकीव सच्छिक्षां, पुष्पचूलो न शिश्रिये ॥१५॥ तथैव दीव्यतस्तस्य, जज्ञिरे भूरिदुर्णयाः। कुराजस्य यथा राज्येऽन्वहं नवनवाः कराः ॥ १६ ॥ पुरे भ्राम्यन्नशंकोऽसौ,

मृपोद्यालात् परस्वकम्। अस्प्राक्षीत् पाणिपाद्यैः, प्रेक्षणादौ पुरांगनाः ॥१७॥ पुष्पचूलस्य तस्यैवं, कुर्व्वतो दुर्णयान् बहून्। वंकचूलीति सान्वर्थामाख्यां पुरजनो व्यधात् ॥१८॥ उपालब्धोऽन्यदा पौरै, राजा तं निरवासयत्। छिद्यते किं न धीमद्भिर्देहस्थोऽपि हि दुर्व्रणः ॥१९॥ सांतःपुरपरीवारः, सोऽथ स्वसृसमन्वितः। स्वदेशान्निर्ययौ मानी, मानभ्रंशं सहेत किम्?॥२०॥ अथ क्रामन् क्रमेणोर्वीमेकत्र गिरिगह्वरे। पल्लीं सिंहगुहानाम्नीं, प्राप म्लेच्छकुलाकुलाम् ॥२१॥ ततः पल्लिपतित्वेन, तत्रस्थैः सोऽभ्यपिच्यत। सेव्यसेवकभावो हि, शस्यते समचेतसाम् ॥२२॥ वंकचूली ततस्तत्र, किरातव्रातसेवितः। सपक्षोऽहिरिवाशंक, एवं पापेष्ववर्त्तत ॥२३॥ जघान प्राणिनोऽलीकमूचेऽगृह्णात् परस्वकम्। परदारान् विदध्वंसे, मुमूर्च्छे च परिग्रहे॥२४॥ बुभुजे मद्यमांसानि, विश्वस्तेभ्योऽपि वा द्रुहन्। किंचान्यदपि यत्पापं, प्रचंडं तदसौ व्यधात् ॥२५॥ तदासन्नपथेनेयुरन्यदा केऽपि सूरयः। नेदीयसि घनारंभेऽनारंभाः सपरिच्छदाः ॥२६॥ ववर्ष च तदाऽखंडधारा धाराधरोऽधिकम्। वियोगिजनसारंगत्रासशार्दूलनिःस्वनः ॥२७॥ प्रेक्ष्य पूर्णं पयःपूरैः, परितः पृथिवीतलम्। सूरिर्भूरिकृपाक्रांतस्वांतः स्माह मुनीनिति ॥ २८ ॥ साधूनामधुना मार्गे, विहर्तुमुचितं न हि। समस्तेष्वपि सत्त्वेषु, सर्वथाऽभयदायिनाम् ॥२९॥ अस्यामपि ततः पल्ल्यां, वर्षासु स्थीयतां किमु?। मुनिभिर्बाढमित्युक्ते, तदंतः सूरयोऽव्रजन् ॥३०॥ तत्रावगम्य विमलयशोभूपालनंदनम्। ते वंकचूलिनं प्रोचुर्धर्म्मलाभपुरस्सरम् ॥ ३१ ॥ राजपुत्र! वयं वर्षस्खलिता अत्र संस्थितिम्। कुर्मो वर्षासु चेच्छय्यासमाधानं च ते भवेत् ॥ ३२ ॥ स स्माह सर्वमप्येतद्, भाव्यं युष्माभिरत्र तु। न कस्याप्युपदेश्यानि, धर्म्मइत्यक्षराण्यपि ॥ ३३ ॥ आमित्युक्ते मुनींद्रेण, शय्यां पल्लिपतिर्ददौ। सूरयः सपरिवारास्ततस्तत्रावतस्थिरे ॥३४॥ त्यजंतोऽसंयमं नित्यमैकध्यं द्वे च बंधने। एवमादीनि ते स्थानान्याचरंतो यथाऽऽगमम् ॥३५॥ चतुर्थ-

षष्ठप्रभृतितपःकर्म्मणि कर्म्मठाः। साधवस्तां चतुर्मासीं, सुखेन निरवाहयन् ॥३६॥ शय्यातरं तं विमलयशःक्षोणीशनंदनम्। विधिवत् समभाषंत, तत्राभ्येत्येति सूरयः ॥३७॥ युष्मच्छय्यादिसाहाय्याद्, वर्षारात्रोऽत्यगात् सुखम्। विहर्तुमधुना कालो, लक्ष्यते लक्षणैर्यथा ॥३८॥ निष्पन्नतुम्बिकास्तुम्ब्यो, लंघंते वृत्तिमिक्षवः। जातस्थामान उक्षाणो, ग्रामाः प्रस्त्यानकर्दमाः ॥३९॥ पंथानः स्वल्पपाथस्काः, पृथिव्यः पक्वमृत्तिकाः। लोकाक्रांताश्च मार्गास्तद्विहर्तुमुचितं यतः ॥ ४० ॥ श्रमणानां शकुनीनां भ्रमरकुलानां च गोकुलानां च। अनियतकालो वासः, शरदिभवानां च मेघानाम् ॥४१॥ एवमापृच्छ्य पल्लीशं, गुरवोऽथ प्रतस्थिरे।ताननुव्रजितुं राजपुत्रोऽपि मुदितोऽचलत् ॥४२॥ स्वसीमांतान्नमस्कृत्य, प्रत्यायांतं नृपात्मजम्। श्रुताब्धिपारदृश्वानः, सूरयस्तं बभाषिरे ॥४३॥ राजपुत्र! क्षणं चापि, तिष्ठेद् यो यस्य वेश्मनि। स हि तस्योपकाराय, यतेत मतिमान् पुमान् ॥४४॥ वर्षारात्रं पुनः सर्वमस्थाम त्वन्निकेतने। धर्म्माकथनसंधा च, पूर्णा तत् किंचिदुच्यते ॥४५॥ उत्पाटितपदा ह्येते, कथयिष्यंति मे कियत्?। विचिंत्येति गुरून्नत्वा, राजपुत्रोऽब्रवीदिदम् ॥४६॥ निष्कृपो भगवन्नस्मि, निःशीलो निस्तपोऽपि च। वह्निवत् सर्व्वभक्षी च, यन्मे योग्यं तदादिश ॥४७॥ स्वाचारगर्हणाद् भाविभद्रं ज्ञात्वा नृपात्मजम्। श्रुतोपयोगतश्चापि, सूरयस्तमवादिषुः ॥ ४८ ॥ महात्मन्! सर्वपापानां, पापर्धिः पापमादिमम्। तत्कर्तुः क्षणमाश्चर्यं, जन्मापैति तु जन्मिनः ॥४९॥ स्वदेहे दूयते देही, दर्भेणापि विदारितः। विदन्नेवं कथं हन्याज्जीवान् जीवितवल्लभान् ॥५०॥ उपेत्य निहते जंतावेकस्मिन्नप्यनागसि। विश्वैश्वर्यप्रदानेऽपि, शुद्धिर्न स्यात्तदंहसः ॥५१॥ किंच-मार्यमाणस्य हेमाद्रिं, राज्यं वाऽथ प्रयच्छतु। तदनिष्टं परित्यज्य, जीवो जीवितुमिच्छति ॥ ५२ ॥ राजपुत्रो जगादैतत्, सत्यमेवाद्य किं त्वहम्। प्राणिघातं निषेद्धुं नो, शक्तोऽस्म्यथ गुरुर्जगौ ॥ ५३ ॥ उदायुधो यदा हंता, भवान् जीवान् तदा सदा।

पदानि खलु सप्ताष्टौ, निवर्त्तेत प्रतीपतः ॥५४॥ नाद्यादज्ञातनामानि, फलानि नृपतेस्तथा। न सेवेत महादेवीं, काकमांसं च वर्जयेत् ॥५५॥ राजपुत्रोऽवदत् प्रीतश्चतुरोऽमूनभिग्रहान्। स्वजीवितवदामृत्योः,पालयिष्याम्यहं प्रभो! ॥५६॥ गुरुरूचे शिरश्छेदे,प्रवासे श्रीक्षयेऽपि च। प्रतिपन्नं सदा संतः, पालयंति सुनिश्चितम् ॥५७॥ प्रमाणं भगवद्वाक्यमित्युदित्वा प्रणत्य च। वंकचूली न्यवर्त्तिष्ट, विजह्रुः सूरयः पुनः ॥५८॥ पल्लीपतेस्ततस्तस्य, प्राक् पापानि प्रकुर्वतः। इहामुत्रानपेक्षस्य, वासराः कतिचिद्ययुः ॥५९॥ अथान्यदा स पल्लीशो, स्फुरच्चौर्योऽवदत् स्वकान्। गवेषयत कुत्रापि, किंचित् सार्थादिकं महत् ॥६०॥ लुंटयित्वा यतस्तत्तु, गृह्णामि प्रचुरं धनम्। तद्विना राजते नो ना, विना दम्म्यां यथाऽऽननम् ॥ ६१ ॥ तां वंकचूलिनः शिक्षां, गृहीत्वा गूढपौरुषैः। मार्गयद्भिर्म्महासार्थं, आयान् ज्ञात्वाऽस्य दीपितः ॥६२॥ संनह्य दस्युनाथोऽथ, बद्ध्वा पंथानमास्थितः। सार्थः कुतोऽपि तज् ज्ञात्वा, पथाऽन्येन गतस्ततः ॥६३॥ चिरं स्थित्वाऽथ पल्लीशोऽवेत्य सार्थं च दूरगं। द्वीपीव विफलस्फालो, व्रीडापन्नो न्यवर्त्तत ॥६४॥ प्रत्यायान् क्षुत्तृषार्त्तोऽथ, विशश्राम तरोस्तले। भिल्लान् फलेभ्य आयुंक्त, क्षुत्तृट्पीडा हि दुस्सहा ॥६५॥ कियती ते भुवं गत्वा, दृष्ट्वा किंपाकशाखिनम्। आस्कंधात् फलितं पक्कफलान्याददिरे ततः ॥ ६६ ॥ उत्तरीयेषु संयम्य, तान्यानीय समार्पयन्। पल्लीपतेः स सर्वेभ्यो, यथायोग्यमदात् स्वयम् ॥६७॥ स्मृत्वा स्वनियमं तेषां,नामाजानन्नरांस्तकान्। अपृच्छत् तेऽप्यजानंतः, प्रत्यूचुर्वंकचूलिनम् ॥६८॥ अतिखंडसितास्वादान्यग्रे नास्वादितानि च। आस्वाद्यंतां किमज्ञातान्यश्रोतस्सु विशति हि ॥६९॥ राजपुत्रोऽभ्यधादेभिः, सुधातुल्यरसैरपि। पर्याप्तं यदविज्ञातफलानां नियमो मम ॥ ७० ॥ गत्वराणामसाराणां, प्राणामां हि कृते कृती। स्थिरं सारं सुखं यच्छत्, व्रतं को नाम खंडयेत्? ॥ ७१ ॥ इत्युदित्वा वचः सारं, सत्त्वसारो नृपात्मजः। पटीं

प्रावृत्य सुष्वाप, क्षणं विश्रामहेतवे ॥७२॥ आपातमात्ररम्याणि, विपाकविरसानि ते। भिल्लाद्या बहवोऽप्याशुः, फलानि विषयानिव ॥७३॥ ततस्ते तत्क्षणादेव, निद्राघूर्णितलोचनाः। निरुद्धोच्छ्वासनिःश्वासा, मृत्युमापुर्वराककाः ॥७४॥ तज्जीवितापहारीवाद्दश्योऽभूद्दिनकृत्तदा। उदगात् भूपतेः पुत्रमिवाश्वासयितुं शशी ॥७५॥ प्रबुद्धो राजपुत्रोऽथ, शब्दादानेन तान् मृतान्। निश्चित्य चिंतयामास, स्वचित्ते मतिमानिति ॥७६॥ अहो अज्ञातनाम्नां हि, फलानां कीद्दगायतिः ?। अहमप्यत्स्यामीद्दक्षानग्रहीष्यं न चेद् व्रतम् ॥७७॥ जगज्जीवातुभूतानां, तेषां स्यामनृणः कथम् ?। व्रतव्याजेन दत्तं यैर्गुरुभिर्जीवितं मम ॥ ७८ ॥ ततोऽल्पपरिवारत्वात्, प्रच्छन्नं त्रपयैत्य च। स्वपल्लीमर्धरात्रेऽसावेकाकी स्वगृहेऽविशत् ॥७९॥ वासागारं ज्वलद्दीपं, ययौ यावत् समैक्षत। पल्यंके शयितं तावत्, स पत्न्या सहितं नरम् ॥८०॥ ललाटपट्टघटितभृकुटीभंगभीषणः। गुंजार्धरागवद्रक्तीकृताक्षोऽसौ व्यचिंतयत् ॥८१॥ इयतीं भूमिमायासीत्, कोऽयमप्रार्थितार्थकः ?। एषाऽपि हि दुराचारा, येद्दक्पापपरायणा॥८२॥ ततो द्वावपि खड्गेन, करिष्ये खंडशः क्षणात्। इत्याकृष्य क्रुधा कोशात्, कृपाणमुदपाटयत्॥८३॥ तमभिग्रहमस्मार्षीत्, क्षणे तस्मिन्नरोत्तमः। ततः पदानि सप्ताष्टौ, द्राक् चक्राम प्रतीपतः ॥८४॥ प्रतीपं क्रामतः खड्गदंडः पट्टे समास्फलन्। प्रबुद्धा तस्य शब्देन, पुष्पचूलेत्यवोचत ॥८५॥ वंकचूली मम भ्राता, चिरकालं हि जीवतात्। श्रुत्वेति भगिनीवाक्यं, शंकमानो व्यचिंतयत्॥८६॥ याऽतिस्नेहान्मया सार्द्धं, त्यक्त्वा राज्यं पुरं गृहम्। मात्रादि ज्ञातिवर्गं च, विदेशगमनं व्यधात् ॥८७॥ पुष्पचूलाभिधाना सा, किमत्रेयं मम स्वसा। इत्यारेकाविरेकार्थं, किमेतदिति तां जगौ ॥८८॥ साऽथ तं भ्रातरं ज्ञात्वा, निवेश्य प्रवरासने। पुष्पचूलाऽवदत्स्वीयं, वृत्तांतं स्नेहलाशया ॥ ८९ ॥ बहिर्गतानां युष्माकमत्रैयुः केऽपि नर्त्तकाः। ययाचेऽवसरस्तैस्तु, मयोक्तं निशि दास्यते ॥९०॥ भवान्नास्तीति न प्रोक्तं, माऽऽगा-

दत्र रिपुर्यथा। कोऽपि पल्लीमिमां भंक्तुं, मन्वानोऽस्वामिकामिति ॥९१॥ युष्मद्वेषमहं कृत्वा, भ्रातृजायासमन्विता। प्रेक्षणीयं ततोऽद्राक्षमर्धरात्रमलक्षिता ॥९२॥ तेभ्यो दत्त्वोचितं दानं, निद्राघूर्णितलोचना। तदाकल्पाऽपि पल्यंके, सुष्वाप सममेतया ॥९३॥ प्रबुद्धा खड्गखात्कृत्याऽतः परं भवतां स्फुटम्। स्ववृत्तांतमथाचक्ष्व, प्रसह्य मम बांधवः ॥ ९४ ॥ मुंचन्नजस्रमश्रूणि, गिरिवन्निर्झराणि सः। स्ववृत्तांतं निवेद्यासौ, जगादात्मजघन्यताम् ॥९५॥ वर्षारात्र स्वगेहेऽपि, स्थितानां क्षणमप्यहम्। गुरूणां न वचोऽश्रौषं, यत् सर्वत्रापि सौख्यदम्॥९६॥ चिंतारत्नमिव प्राप्तं, कल्पद्रुमिव चांतिकम्। निधानमिव चाक्षय्यं, तन्न स्वीकृतवानहम्॥९७॥ युग्मं। ममाधमाधमस्यापि, व्रजद्भिस्तैर्महात्मभिः। परोपकारसंभारकरणप्रवणाशयम् ॥९८॥ अप्येष विषरोचिष्णोरुपदेशसुधालवः। दानशौंडैरनिच्छोस्तु, नादायिष्यत चेत्तदा ॥९९॥ हत्वेदानीं निजां यामिं, जायां चापि निरागसम्। नायास्यं दुर्गतिं कां वा?, को वैक्षिष्यत मन्मुखम्? ॥१००॥ त्रिभिर्विशेषकम्। भूयः कदापि तान् साधून्, जगदद्वैतबांधवान्। प्रभूतपुण्यसंप्राप्यान्, प्राप्स्याम्याजीवितादपि?॥१०१॥ जातैतद्वाक्यपोतस्तत्तरिष्यामि भवार्णवम्। तुंबालंबनलग्नो हि, ग्रीवापि न निमज्जति॥१०२॥ ततःप्रभृति राट्पुत्रः, सारं सारं गुरूनसौ। तथैव गमयामास, सुखेनाहानि कानिचत् ॥१०३॥ सोऽथारेभे यमारंभं, वधाद्यं स वृथाऽभवत्। अंतिषद्भाविभद्रस्य, प्रायः पापं फलेन्न हि॥१०४॥ सीदतः स्वजनान् द्रव्याद्दते स प्रेक्ष्य दध्यकौ। खात्वा खात्रमपि ग्राह्यं, द्रव्यमेवोदितं यतः ॥१०५॥ द्वाविमौ पुरुषौ लोके, शिरःशूलकरौ परम्। गृहस्थश्च निरारंभो, यतिश्च सपरिग्रहः ॥१०६॥—इतश्चोज्जयिनीपुर्यां, श्रीमंत्योकांस्यनेकशः। विज्ञाय तस्कराधीशः, खड्गकपक्रकरो ययौ ॥१०७॥ तथासौ कल्पपालस्य, लक्षसंख्यधनेशितुः। गृहे समुद्रपालस्य, प्रदोषसमयेऽविशत् ॥ १०८ ॥ तत्रैकान् सीधुपान् सीधु, पीत्वा तच्छर्दिपिच्छले।

सोऽत्यर्थं लुठतोऽपश्यदमेध्ये शूकरानिव ॥ १०९ ॥ अपरांश्च नरीनृत्यमानान् भूतार्दितानिव । कांश्चिद्रारव्यमानांश्च, सशोकानिव पौरुषान् ॥११०॥ केशाकेशि विना द्वेषं,युध्यमानांश्च काश्चन । सास्वज्यमानानन्यांश्च,मिथः स्नेहं विनाऽपि हि ॥१११॥ गायतस्त्रे-पतोऽसभ्यं, वदतो मूर्छतोऽपि हि । विगुप्यत इति क्षीवान्, वीक्ष्य दध्याविदं हृदि ॥११२॥ धिगमी मद्यपा मत्ता, धिगसौ निग-मोऽपि च । धिगस्म्यहं धनायामि, योऽस्मात् पापीयसोऽपि हि ॥११३॥ दीर्घदर्शी विमृश्यैवं, विमुच्यैनं मलिम्लुचः । देवदत्त-वणिग्गेहे, प्रच्छन्नं प्रविवेश सः ॥ ११४ ॥ सोऽथ श्रेष्ठी निजं पुत्रं, तदाऽयाचत लेखकम् । तत्तेनादायि किं त्वस्य, विस्मृतौ द्वौ विशोपकौ ॥११५॥ पुनः श्रेष्ठिगिरा पुत्रोऽदात्ततो विस्मृतौ पुनः । लीलायष्ट्या ततः श्रेष्ठी, ताडयामास तं सुतम् ॥११६॥ प्रेक्ष्यैवं वृत्तमध्यक्षं, परमोषी मनस्यधात् । निःस्वनं धनवांस्त्वेष, धनस्यावृत्तिकर्म्मकृत् ॥११७॥ यो ह्यर्धरूपकस्यार्थे, प्रभूतार्थोऽपि दुर्लभम् । दुनोति निर्दयः पुत्रं, ग्रहीष्येऽस्य धनं यदि ॥ ११८ ॥ ततोऽसौ हृदयस्फोटान्, माऽस्मान् नूनं मरिष्यति । तदलं मे धनेनास्य, ध्यात्वेति स ततोऽप्यगात् ॥११९॥ स्वर्णरूप्यखनिस्तत्र, विश्वनंदी सुवर्णकृत् । विश्ववित्तोऽस्ति तद्वेश्म, सोऽविशत् तस्कराग्रणीः ॥१२०॥ विश्वनंदी दिनं सर्वं, पणायन्नापणे स्थितः । हेमरत्नमयान् सारानलंकाराननेकशः ॥१२१॥ स्वर्णरूप्यमणीनां च, कुर्वाणः क्रयविक्रयम् । अर्जयित्वा धनं भूरि, तोल्यमानान् पलादिभिः ॥१२२॥ दिनात्यये गृहे नीत्वा, स्वर्णचूर्णयुतं रजः । ध्मात्वा तत्र स्वयं सर्वं, धावित्वा तत् पुनः पुनः ॥१२३॥ गुंजां गुंजार्धमानं हि,सावधानोऽनिमेषदृक् । अपूर्णस्वर्णतृष्णस्तु,तूर्णं स्वर्णममीमिलत् ॥१२४॥ चतुर्भिः कलापकम् ॥ जालिकांतरितः सर्वमवेत्यैतस्य वृत्तकम् । स्तैन्यमिच्छुरपि स्तेनः, स्वचित्ते पर्यचिंतयत् ॥ १२५ ॥ अपश्यतामहं चौरः, किंचायं पश्यतोहरः । तत्रपेऽतो धनं गृह्णन्, भिक्षां भिक्षाचरादिव ॥१२६॥ किंच-श्रूयते स्वर्णकृत् स्वर्णं,

दृष्ट्वाऽजीवन्मृतः सकृत् । तद् यद्यस्य हरिष्ये तन्नूनमेष मरिष्यति ॥ १२७ ॥ पापिनः पापकारिण्या, तन्ममास्य श्रिया कृतम् । सत्त्वसारस्ततो गेहान्, निःससार स तस्करः ॥१२८॥ अस्ति कामध्वजा तत्र, वेश्या कोटिध्वजा पुरे । तदागारेऽर्धरात्रेऽगात्, स एकागारिकाग्रणीः ॥ १२९ ॥ द्वितीयां भूमिमारुह्य, प्रच्छन्नं तमसि स्थितः । जिघृक्षुर्भूषणान्यस्याश्चक्षुषी अक्षिपत् पुरः ॥ १३० ॥ तत्र माणिक्यपल्यंके, श्रीमतैकेन कुष्ठिना । समं भिन्नेन तां सुप्तां, ज्वलद्दीपत्विषैक्षत ॥१३१॥ ततोऽसौ चिंतयामास, हहा पण्यांगनाजनः ।सतां हि दूरतस्त्याज्यः, सर्वदोषखनिर्यतः ॥१३२॥ ध्यायत्यन्यद् वदत्यन्यच्चेष्टतेऽन्यत्तु या सदा । साधारणांगना सा स्यात्, पुंसां सौख्यप्रदा कथम्? ॥१३३॥ अनेकविटनिष्ठ्यूतपूतिमांसासवांचितम् । कुथितान्नमिवोच्छिष्टं, वेश्याऽऽस्यं कः समाश्रयेत्? ॥१३४॥ सर्वस्वमपि येनास्यै, दत्तं निःस्वः स चेदभूत् । निष्काशयति तं गेहाद्, गणिका निस्त्रपा क्षणात् ॥१३५॥ इयं त्वतिजघन्यैव, या लक्ष्मीलवलिप्सया । अपि लक्ष्मीनिधिर्बाढं, रमते गाढकुष्ठिना ॥१३६॥ स्वरूपपुण्यलावण्यनीरपूरतरंगितम् । वपुरप्यप्रियं यस्याः, पापीयस्याः श्रियः कृते ॥१३७॥ तस्याश्चेदपहर्त्ताऽस्मि, श्रियं सद्यो विपद्य सा । मुद्गलीभूय भूयोऽपि, तामधिष्ठास्यति ध्रुवम् ॥१३८॥ मनसाऽपि न वांछामि, तदेतस्याः श्रियं खलु । निंद्यां सदाऽतिनिंद्याया, उभयत्राप्यनर्थदाम् ॥ १३९ ॥ ध्यायन्निति ततो गेहान्निर्ययौ राजनंदनः। स्फुरद्विवेककल्पद्रुनंदनोद्यानसंनिभः ॥१४०॥ दध्यौ राजकुलाल्लामि, लक्ष्मीं किं सोऽपि दोष्यति ? । न ह्येकपादभंगेऽपि, खंजा शतपदी भवेत् ॥१४१॥ निश्चित्य चेतसा चैतन्, महासाहसिकः स तु । विशांपत्युर्विवेशौको, वप्रमुल्लंघ्य लीलया ॥१४२॥ तदा च भूभुजो राज्ञी, कस्मादपि च कारणात् । भूपाले विहितक्रोधा, प्रासादोपरिभूमितः ॥१४३॥ उत्तीर्याधस्तानावासे, यावत्तिष्ठति दुःस्थिता । तावत्तत्र स चौरेशः, समागात् धनकाम्यया ॥१४४॥ रत्नाभरणकांत्याऽस्त-

तमिश्रा साऽथ वीक्ष्य तम्। बभाषे भद्र! कोऽसि त्वं, मकरध्वजमूर्तिभृत्?॥१४५॥ स ऊचे वंकचूलीति, विश्वविख्यातोऽस्मि तस्करः। स्वर्णमाणिक्यरत्नानां, मोषणार्थमिहागमम् ॥१४६॥ तद्रूपमोहिता सोचे, सत्यं स्तेनो भवान् परम्। पश्यंत्या अपि मे यस्त्वं, हृदयं हृतवानसि ॥१४७॥ स साह मैवमुल्लापीर्धनमेव विवांछिषोः। पर्याप्तं मम नर्मोक्त्या, क्षुधार्त्तस्येव वीणया॥१४८॥ अथ स्मरार्त्तया देव्या, स्त्रीत्वात्तुच्छतयाऽपि च। कुलाभिमानमुल्लङ्घ्य, दूरीकृत्य नृपाद् भयम्॥१४९॥ गिरा सुस्निग्धयाऽभाणि, भजस्व सुभगाऽऽशु माम्। सर्व्वां संपादयिष्यामि, संपदं यां त्वमिच्छसि ॥१५०॥ तयैवं प्रार्थितोऽत्यर्थं, स तस्करशिरोमणिः। ध्वस्तपंचेष्वपसारः, सस्मार स्वमभिग्रहम्॥१५१॥ ततः पप्रच्छ तां भद्रे!,काऽसि त्वं किमिह स्थिता?। को वा ते प्राणनाथस्तु?, सर्वमेतन्निवेदय ॥१५२॥ तयोदितमहं राज्ञो,विचारधवलस्य तु। महादेवी क्रुधोत्थाय,तत्पल्यंकादिहागमम्॥१५३॥ राजपुत्रोऽवदत्तन्मे,वार्त्तयाऽप्यलमेतया। "कथंकारं सतां युक्तं,परस्त्रीगमनं यतः॥१५४॥ या मूलपतिमुज्झित्वाऽन्यं भजेत् क्षणिकाशया। हरिद्रारागतुल्यायां, तस्यां रज्यति कः कृती?॥१५५॥ कांदिशीकस्य दुःस्थस्य, सशंकस्य परस्त्रियाम्। रतिः का नाम तस्य स्याच्छागस्योपवृकं यथा॥१५६॥ अर्थहानिरकीर्त्तिश्च, कुलमालिन्यमंगभित्। परस्त्रीनिरतस्येह, प्रेत्य श्वभ्रे गतिः खलु ॥१५७॥ नरेषु रेखा तेषां स्याद्, ये परस्त्रीपराङ्मुखाः। ध्वंसंते ये तु तां तेषां, रेखा पादेन भज्यते ॥१५८॥ किंच—जगतः पितृतुल्यस्य, नृपस्याग्रमहिष्यसि। सर्वस्यापि नमस्याऽसि, त्वं मे माता नमोऽस्तु ते ॥१५९॥" प्रत्यूचेऽथ महादेवी, मन्मथव्यथिताऽधिकम्। हंहो न समयज्ञोऽसि, वातूलोऽसि स्ववैर्यसि॥१६०॥ भविष्यसि ममावश्यं, प्रसह्यापि वशंवदः। नग्नको यास्यसि स्वर्गं, विगुप्तः खलु केवलम् ॥१६१॥ विचार्य गुणदोषांस्त्वं, मन्यस्वाद्यापि मद्वचः। अनुरक्ता विरक्ता वा, मारयंत्येव योषितः ॥१६२॥ स साह समयज्ञोऽसि, व्रतस्य समयो ह्ययम्। बलं सुदुर्ब-

लस्यापि, वलीयस्यसमागते ॥१६३॥ वातूलोऽसि सदाचारादसमं प्रति सर्वदा। महांतो न ह्यपेक्षंते, पापकूपे पत्तज्ज-नम् ॥१६४॥ लोकद्वयविरुद्धानि, यः पुनः कुरुतेतराम्। नृशंसो निस्त्रपो हंत, स्ववैरी स निगद्यते ॥१६५॥ विश्वस्यापि हि जिष्णूनि, वशे यस्येंद्रियाणि तु। स वलात्कारतोऽकार्यं, शक्रेणापि न कार्यते ॥१६६॥ यत्तु रक्ता विरक्ता वा, वनिता हंति मानवम्। मन-स्यप्यकलंकस्य, तत्र मे नास्ति मृत्युभीः ॥१६७॥ यदुक्तं—"वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसंचितं व्रतम्। वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम् ॥१६८॥" इत्युक्त्वा पादयोस्तस्याः, पतित्वा स महामतिः। जगाद मातराशीर्भिः, प्रसीद शिवमस्तु ते॥१६९॥ राजाऽनुपदकस्तस्यास्तदा कुड्यांतराश्रितः। तयोर्वृत्तमवेत्यैवं, रुष्टस्तुष्टश्च हृद्यधात् ॥१७०॥ न स्त्री मधुरवाक्येन, सन्मानेन धनेन वा। कस्यापि वश्यतां, याति यमजिह्वेव दारुणा ॥१७१॥ प्रत्यक्षमीक्ष्यता-मेषा, देवी कुलकलंककृत्। अंतपुरःशिरोरत्नभूताऽप्येतादृशी हहा ॥१७२॥ चौरस्त्वयं जगच्चित्तचमत्कारिचरित्रकृत्। तत्याज तृण-वद्रामां, रम्यां योऽत्यर्थमर्थिनीम् ॥१७३॥ राक्षस्या अपि मुच्येत, व्याघ्रया अपि विचक्षणः। सर्वौपम्यमतीतायाः, पुमान् कोऽपि न तु स्त्रियाः ॥१७४॥ तद्धन्यो धुरि धन्यानां, धीरोऽधीतो धियां निधिः। धात्र्यामेको गुणाधारो, धृतिमान्निधि-भूतथा ॥१७५॥ धाता धर्मस्य शुद्धस्य, सिद्धिसौधाधिरोहकः। अयमेव यदेतस्या, मुक्तः क्षेमेण पुण्यभाक् ॥१७६॥ ईदृक् पुरुष-रत्नानि, यद्यापि महीतले। उत्पद्यंते ततः सत्यं, रत्नगर्भा वसुंधरा ॥ १७७ ॥ –इतश्च देवी निश्चित्य, चित्तं चौरस्य निश्चलम्। पूत्चक्रे कोऽपि चौरोऽयमत्र चंचूर्यते चिरम् ॥ १७८ ॥ श्रुत्वैतद्यामिकाः क्षिप्रमुद्दधावुरुदायुधाः। राज्ञाऽथ ते समादिष्टाश्चौरं रक्षत यत्नतः ॥१७९॥ प्रोचुरारक्षकास्तेऽपि, मुंच मुंचाचिरात् करात्। कलंक! करवालं त्वं, वीरमन्योऽसि यद्यपि ॥१८०॥ सोऽवादीन्नैव

मुंचेऽमुं, करिष्ये किं त्विदं भटाः! (करे)। न नश्यामि न वो हन्मीत्येवमप्यस्तु तेऽभ्यधुः ॥१८१॥ दृष्ट्वा राजाऽपि चौरस्य, शीलं सत्त्वं च विस्मितः। निवृत्त्यारुह्य पल्यंके, निशाशेषमतीयिवान् ॥ १८२ ॥ विभातायां विभावर्यां, तूर्येषु निनदत्स्वथ। जगदे माग-धेनेति, मंगल्यं युग्ममार्ययोः ॥१८३॥ अप्रतिहतप्रतापः समस्ततेजस्वितेजआच्छेत्ता। संपूर्णमंडलधरः प्रतिहतदोषाकरप्रसरः ॥१८४॥ उज्जृंभमाणकमलाकरोऽधिरूढस्तथाऽचले ह्युदये। सन्मार्गोद्योतकरो रविवत्त्वं देव! विजयस्व ॥१८५॥ श्रुत्वेति मंगलध्वानं, विबुद्धो वसुधाधवः। विधाय विधिवद्देहशुद्धिं शुद्धोदकादिभिः ॥१८६॥ कृत्वा च स्फारशृंगारं, गत्वा सदसि भूपतिः। सिंहासनमलंचक्रे, दिवीव दिविषत्पतिः ॥१८७॥ विश्वैकवीरं तं चौरं, विचारधवलस्ततः। तत्रानाय्य नतासीनं, कोऽसि त्वमिति पृष्टवान् ॥१८८॥ सोऽवोचत्क्रियया ज्ञाते, कुले पृच्छा न युक्तियुक्। उक्तार्थानां यथा शास्त्रे, प्रयोगो नैव युज्यते ॥१८९॥ भूपोऽभ्यधत्त भूयोऽपि, भद्र! त्वं भूरिभावभृत्। पृच्छ्यसेऽतस्ततः सत्यं, ब्रूहि साधितमन्मथ! ॥१९०॥ राजा रजनिवृत्तांतं, जानातीति विजानता। देव! देह्यभयं देव्यास्तावदित्यर्थितोऽमुना ॥१९१॥ राजाऽऽख्यान्नाकरिष्यस्त्वं, यद्येनां प्रार्थनां ततः। अभ्यर्थिष्ये इमां नूनं, सोऽथ नीति-पथं जगौ ॥१९२॥ अर्थनाशं मनस्तापं, गृहे दुश्चरितानि च। वंचनं चापमानं च, मतिमान्न प्रकाशयेत् ॥१९३॥ युक्तियुक्तं तदुक्तं तु, प्रतिपद्य नृपोऽवदत्। वत्स! त्वमपि मा कार्षीश्चौरिकां गुणचौरिकाम् ॥१९४॥ यस्माद्विनयवान् द्वेष्यः, हे-यः स्यात् कांतिमानपि। विश्वस्यापि पुमान् स्तैन्याद्दौर्भग्यादिव योषिता ॥१९५॥ जन्मन्यत्र फलं चौर्यद्रुमस्यांगच्छिदादिकम्। प्रेत्य प्रेष्यत्वदासत्वदौर्गत्यगमनादिकम् ॥ १९६ ॥ तच्चौर्यचोरणं चारु, चौरिकाव्यसनं यदि। त्वद्गुणव्रातशीतांशोरेष दोषः कलंकति ॥१९७॥ इत्याकर्ण्य कुमारोऽपि, प्रतिपेदे नृपोदितम्। हर्षप्रकर्षाद्राजाऽथ, तं सस्नेहमदोऽवदत् ॥१९८॥ परस्त्रीत्यागरूपोऽयं, तव

लोकोत्तरो गुणः । स ऊचे गुणिसंसर्गाद्, गुणीस्यान्निर्गुणोऽपि यत् ॥१९९॥ "संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते, मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं. प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥२००॥" राजाऽथ स्वाह वृत्तं स्वमादितोऽपि निवेदय । सोऽपि सर्वं तदाख्याय, भूयोऽप्येवमभाषत ॥२०१॥ यदज्ञातफलात् यच्च, स्वसृपत्न्योर्वधादपि । यद्राज्याग्रमहिष्याश्च, पार्श्वान् मुक्तिर्ममाभवत् ॥२०२॥ तत् परस्योपकाराय, श्रवणानां महात्मनाम् । गुरूणामुपकारोऽयं, गुणकृन्मे विजृंभते ॥२०३॥ युग्मम् । निशम्येति सभासीनो, जनस्तत्सत्त्वरंजितः । शिरांसि धूनयामासाभ्यस्यन्ती तत्कलामिव ॥२०४॥ ततस्तं स्थापयामास, सेनानीत्वे नृपो मुदा । अदाच्चात्मसुतस्येव, तस्य देशादिकं महत् ॥२०५॥ सोऽथ स्वजनसंयुक्तः, सज्जनानां शिरोमणिः । कियत्कालमतीयाय, राजकार्ये कृतोद्यमः ॥२०६॥ सुवृत्तं विमलं सौम्यं, कांतिमंतं सुशीतगम् । बोधयंतं कुवलयं, मुनिमंडलसेवितम् ॥२०७॥ पूर्णेंदुमिव संप्रेक्ष्य, सोऽन्यदा सुस्थितं गुरुम् । आनंदोदकपूर्णाक्षो, ववंदे तत्पदद्वयी ॥२०८॥ युग्मं ॥ निषण्णः शुद्धभूपीठे, गुरुपादांतिके सुधीः । योग्यतां तस्य विज्ञाय, गुरवो देशनां व्यधुः ॥२०९॥ "मानुष्यं प्राप्य दुष्प्रापं, चोल्लकादिनिदर्शनैः । कर्त्तव्यो धर्म्म एवायं, भो भव्या! भवभीतिभित् ॥२१०॥ स पुनर्द्विविधो ज्ञेयः, साधुश्रावकगोचरः । सर्वतो देशतश्चापि, क्रमात् सावद्यवर्जनात् ॥२११॥ प्रथमो दुष्करः सूक्ष्मः, किंतु शीघ्रं शिवप्रदः । द्वितीयः सुकरः स्थूलः, क्रमाच्च शिवसौख्यदः ॥२१२॥" वंकचूली निशम्यैवं, देशनां गुरुसन्निधौ । प्रपेदे गृहिणां धर्म्मं, सम्यक् सम्यक्त्वपूर्वकम् ॥२१३॥ उज्जयिन्यंतिकग्रामवासिना गुणराशिना । श्राद्धेन जिनदासेन, समं मैत्रीमसौ व्यधात् ॥२१४॥ ततःप्रभृति कुर्वाणस्त्रिसंध्यं जिनपूजनम् । वितरन्ननिशं वित्तं, सप्तक्षेत्र्यामनिंदितम् ॥२१५॥ शीलं पर्वसु बिभ्राणः, कुर्वाणः शक्तितस्तपः । विशिष्टं

श्रुतमभ्यस्यन्, भावयन् भव्यभावनाः ॥ २१६ ॥ व्रतानि निरतीचाराण्याचरन् सौचितीचणः । स्पृहयन् साधुधर्म्माय, गृहिधर्म्म-परोऽपि हि ॥२१७॥ गृह्णन्नसारसंसारफलमेवं विशारदः । त्रिवर्गसारोऽनेहांसमित्थं भूयांसमत्यगात् ॥२१८॥ चतुर्भिः कलापकम् ॥ विप्रत्यपद्यतान्येद्युः, कामरूपपुरेश्वरः । विचारधवलोऽयासीत्तज्जयार्थमथ स्वयम् ॥२१९॥ वृत्तांतमिति विज्ञाय,द्रुतमेत्य प्रणत्य च । वंकचूली द्विषन्माथो, महीनाथं व्यजिज्ञपत् ॥२२०॥ स्वामिन्! कोऽयं समारंभस्तस्योपरि तपस्विनः?। शृगालोपरि सिंहस्य, चपे-टोत्पाटनं यथा॥२२१॥ देहि मह्यं समादेशं,विजेष्येऽहमपि द्विषम्। दूरेऽरुणस्तमो हन्यात्, किं न तस्य प्रभाऽपि हि॥२२२॥ निवार्येति सनिर्बंधं, राजानं रचितांजलिः। स्वयं समस्तसामंतसंयुतः समरं प्रति ॥२२३॥ चतुरंगचमूचक्रसंचारचलिताचलः। अच-लाचलचेतस्को, वंकचूली ततोऽचलत् ॥२२४॥ युग्मं ॥ तमवैत्याभ्यमित्रीणं, कामरूपाधिपोऽपि हि। एत्य स्वदेशसीमांतेऽमिलत् सर्वाभिसारतः ॥२२५॥ राजपुत्रस्य राज्ञश्च, प्रवृत्तेऽथ महाहवे। सैन्याग्रं कांस्यतालेन, कांस्यतालमिवास्फलत् ॥२२६॥ मिथस्ताव-प्ययुध्येतां, कुंताकुंति शराशरि। नैकोऽप्येकेन जीयेत, वन्येभाविव दुर्म्मदौ ॥२२७॥ चिरं युद्ध्वा कुमारोऽथ, तेन गाढप्रहारितः। न्यपातयच्छलं लब्ध्वा, कामरूपमहीपतिम् ॥२२८॥ वंकचूली विजित्यैनं, निवृत्यागान्निजं पुरम्। राज्ञा प्रवेशितः पुर्यां, परमर्थ्या प्रमोदतः ॥२२९॥ राजा व्रणचिकित्सां च, कारयामास सादरः। कुमारस्य महावैद्यैर्न तु कोऽपि गुणोऽभवत्॥२३०॥ प्रत्युत क्षी-यते गात्रं, कुमारस्याधिकाधिकम्। स्थामापि हीयते नित्यं, पथ्यं चापि न रोचते ॥२३१॥ शोकार्त्तोऽकारयद्राजा, पुर्यामाघोषणा-मिति। यः कुर्यान् मत्सुतं कल्यं, ददे तस्मै यथोप्सितम् ॥ २३२ ॥ आगंतुकाश्च वास्तव्यास्ततः शीघ्रं भिषग्वराः। सम्यग् निरूप्य सर्वेऽपि, स्वरूपं वंकचूलिनः॥२३३॥ स्वस्मिन् विधाय संवादमथ राज्ञे व्यजिज्ञपन्। काकमांसौषधेनैव, देवायं प्रगुणीभवेत् ॥२३४॥

राजा सपरिवारोऽथ, कुमारमिदमूचिवान्। वत्स! वैद्योदितं काकमांसं भुङ्क्ष्व वपुःकृते ॥२३५॥ वंकचूली कुमारोऽपि, प्रत्यूचे पितरं प्रति। देवान्यदपि को मांसमश्नीयान् मतिमान् पुमान्? ॥ २३६ ॥ यस्मान्मांसं ध्रुवं जीवघातात्तस्माच्च दुर्गतिः। तस्यां च सततं दुःखं, दुरंतं देहिनां तथा ॥२३७॥ वधकस्य क्षणं तृप्तिर्वध्यस्यापैति जन्म तु। अहो निस्त्रिंशता काऽपि,रक्षोवत्पिशिताशिनाम् ॥२३८॥ निःशूको निर्घृणो नान्यः, कोऽपि लोके पुमांस्ततः। रसरक्तजमांसेन, स्वं यो स्वीयेन पोपयेत् ॥२३९॥ पिशितव्यसनी स्थूलं, यं यं पश्चाद्यमीक्षते। हंतुमिच्छेत् सदा तं तं, शाकिनीव सुदुर्म्मतिः ॥२४०॥ विश्रस्थानोद्भवं विश्रं, सदा निंद्यममेध्यवत्। भक्ष्याभक्ष्यविवेकज्ञः, कोऽश्नीयाद् दक्ष! निष्कलम् ॥२४१॥ काकमांसादने यत्तु, तातपादाः सदा हिताः। समादिशंति मां तत्र, विशेषोऽयं निशम्यताम् ॥२४२॥ योऽत्ति पूतिशवान् विष्ठां, विष्ठाकीटांश्च नित्यशः। ध्वांक्षस्तत्पिशितं कोऽत्ति, पुमान् यद्येष नास्थिभुक्? ॥२४३॥ यच्चिदं भेषजायोक्तं, सुवैद्यैर्वपुषः कृते। तत्रापि देव! संशीतिर्बाधते नियमश्च माम् ॥२४४॥ अथोचे नृपतिर्दृष्टप्रत्यया भिषजो ह्यमी। नियमस्य पुनर्भंगे,प्रायश्चित्तं समाचरेः ॥२४५॥ कुमारः पुनरप्यूचे, छाद्मस्थिकविनिश्चयात्। सर्वज्ञोक्तव्रतभ्रंशं,कुर्यात् कोऽनंतदुःखदम्? ॥२४६॥ यस्य भंगे पुनः कार्या,शुद्धिस्तत्किमु भज्यते?। प्रक्षालनाद्धि पंकस्य, दूरादस्पर्शनं वरम् ॥२४७॥ विनश्वरस्य देहस्य, विश्रस्यास्य कृते कृती। स्वर्गापवर्गलक्ष्मीकृत्, व्रतं को नाम खंडयेत्? ॥२४८॥ कुमारस्याग्रहं वीक्ष्य, तद्विमोक्षणकांक्षया। जिनदासं समानेतुं, पुरुषान् प्रैषयन्नृपः ॥२४९॥ सोऽप्यागच्छत् पुरोद्याने, रुदत्यौ त्रिदशांगने। प्रेक्ष्यापृच्छद् भवंत्यौ के?, किमत्र रुदितोऽथवा! ॥२५०॥ ते अप्यवदतां देव्यावावां सौधर्म्मकल्पगे। सांप्रतं नौ पतिस्तस्माच्च्युतः श्रावककुंजर! ॥२५१॥ वंकचूलपतिर्नौ स्यान्, मृत्वाऽसावक्षतव्रतः। तत् खंडयिष्यसि त्वं तु, तदावां रुदितः खलु ॥ २५२ ॥ जिनदासस्ततः

प्रोचे, स्वस्थे स्थः स न भंक्ष्यति । व्रतं न खंडयिष्यामीत्युक्त्वा सोऽगान्नृपांतिकम् ॥२५३॥ राजा जगाद वत्स ! त्वं, यतस्व सुमते ! तथा । काकमांसं यथाऽश्नाति, सुहृच्चे जीविताशया ॥२५४॥ कुमारं देव ! वक्ष्येऽहमित्युदित्वा तदंतिके । श्राद्धोऽगात्तं च संप्रेक्ष्य, सोऽमुमुदे राजनंदनः ॥२५५॥ परिष्वज्यावदन्मित्र !, मद्भाग्यैस्त्वमिहागमः । जिनदासस्ततस्तस्मै, नृपादेशमुपादिशत् ॥२५६॥ सोऽप्युवाच त्वमप्येवं, मित्रादेशं ददासि किम् ? । जिनदासोऽवदद्राजादेशादेवेदमभ्यधाः ॥ २५७ ॥ अवोचद्राजपुत्रश्चेन्, मेरोश्चलति चूलिका । न भुंजे नियमं भंक्त्वा, काकमांसं तथाऽप्यहम् ॥२५८॥ सर्वथा मे निरीहस्य, पूर्णं पथ्यौषधादिभिः । पर्यंताराधनां किंतु, धर्म्मबंधो ! विधापय ॥२५९॥ सोऽप्येतद् भूपतेरग्रे, निवेद्याष्टाहिकामहम् । कारयित्वा च चैत्येषु, ततः सूरीनजूहवत् ॥ २६० ॥ वंकचूली जिनं नत्वा, वंदित्वा च गुरूनपि । तत्पार्श्वे च विशुद्धात्मा, विधिनाऽऽराधनां व्यधात् ॥ २६१ ॥ कृतानशनकर्म्मा च, ससंस्मरन् पंचमंगलम् । वंकचूली विपद्याभून्महर्धिस्त्रिदशोऽच्युते ॥२६२॥ जिनदासोऽथ तं ग्रामं, गच्छन् देव्यौ तथैव ते । रुदंत्यौ वीक्ष्य पप्रच्छ, रुदिथोऽद्यापि किं युवाम् ? ॥२६३॥ ते अप्यवोचतामेष, सविशेषसुकृत्यतः । मृत्वोपरितनस्वर्गे, जज्ञे देवो न नौ पतिः ॥२६४॥ रुदितोऽद्याप्यतो हेतोरित्युक्त्वा ते तिरोहिते । जिनदासोऽपि शश्लाघे, जिनधर्माय शुद्धधीः ॥२६५॥ नरकातिथिरप्येष, सम्यग्नसंश्रयात् । इहामुत्रापि सद्धर्मात्, शिश्रिये कीदृशीं श्रियम् ? ॥ २६६ ॥ सम्यक् प्रशंसन्निति जैनधर्म्मं, सुश्रावकोऽसौ जिनदासनामा । गत्वा स्वगेहे सविशेषधर्म्मकर्म्मण्यजस्रं निरतो बभूव ॥२६७॥ इत्येवं नृपनंदनः प्रतिदिनं निःशेषपापोद्यतः, शय्यादानमनुत्तरं गुणवतां दत्त्वा मुनीनां मुदा । जन्मन्यत्र परत्र सुंदरसुखान्येषोऽपि यत्संश्रितस्तद्दानेऽत्र निरंतरं सुमतयो ! यत्नं कुरुध्वं जनाः ॥२६८॥ शय्यादाने वंकचूलिकथा ॥

'उप्पल'त्ति 'भीमो भीमसेन' इति न्यायात् पदेऽपि पदसमुदायोपचार इत्युत्पलमालेति द्रष्टव्यं, तद्दृष्टांतश्चायं–अत्थि इह भरहखित्ते वच्छादेसे समिद्धजणजुत्ते । रिद्धिजियवासवपुरी कोसंबीनाम पवरपुरी ॥ १ ॥ तत्थऽत्थि गुणसमिद्धो भरहे भरहुव्व तिहुयणपसिद्धो । हणियरिउचक्कवालो पसन्नचंदो महीवालो ॥२॥ तस्सासि महुरवाणी जिणवरपूयणपवित्तवरपाणी । अणवज्ज-कज्जसज्जा चंदमई नाम वरभज्जा ॥३॥ निवदिन्नछत्तचामरसहस्सलंभा विसिट्ठगुणविसरा । चउसट्ठिकलाकुसला रत्तुप्पलरत्तपाणितला ॥४॥ कन्नीरहप्पयाया अट्ठारसदेसभासविन्नाया । तत्थेव चारुवेसा उप्पलमालत्ति वरवेसा ॥ ५ ॥ तत्थुसभसेणगुरुणा अहऽन्नया पेसिया दुवे समणा । वसहिकए तेऽवि तहिं मग्गंति विसुद्धयं वसहिं ॥६॥ बहुयाओ लद्धाओ वमहीओ एसणाहिं सुद्धाओ । असज्झायाइदुट्ठा ताओ इय ते मुणिवरिट्ठा ॥७॥ मग्गंति य अन्नाओ वसहि असज्झाइयाइविमलाओ । जं असज्झायकलिए न मुणी चिट्ठंति भूवलए ॥८॥ बहिरुज्जाणं दट्ठुं रक्खगपुरिसे हि तेहि ते पुट्ठा। कस्सेयं? अह वुत्तं तेहिवि जं उप्पलायत्तं ॥९॥ तो मग्गियं मुणीहिं तं चउपासाय पेसलधणीहिं । तेहिवि विगयविवायं गणियं पुच्छित्तऽणुन्नायं ॥१०॥ तो तं पडिलेहित्ता क-हिया तेहिं गुरूण सा वत्ता । ववगयभवदवदाहो तओ ठिओ तत्थ मुणिनाहो ॥ ११ ॥ ते निच्चं दुहहरणं रक्खगपुरिसा सुणंति गुरुवयणं । जाया धम्माभिमुहा कमेण विगलियबहुअसुहा ॥१२॥ तेहऽन्नया कयाई कहाविओ धम्मलाभ गणियाए । सूरीहिं तेहिं-वि तओ हिट्ठेहिं तीए उ आहियओ ॥१३॥ निच्चं च तीएँ विमलं सासंती ते गुरूण गुणपडलं । तं सोउं सा जाया भद्दगभावा विगय-माया ॥१४॥ अह तत्थ गुरूण गया नमणत्थं निययतंतपरियरिया । सूरीहिं तीएँ धम्मो जोग्गो कहिओ अइसुरंमो ॥१५॥ तह पंच नमुक्कारे पढाविया सा गुरूहिं जगसारे। तो नमिउं साहुजणं गया पहिट्ठा नियं भवणं ॥१६॥ नवकारं चिंतंती बहुकालं सा गमेइ

भत्तीए। वित्ते वरिसारत्ते गओ गुरू अन्नहिं खित्ते ॥१७॥ अह अन्नया य तीए विचिंतियं ही मए गयमतीए । पुट्ठो न गुरू अत्थो मंतस्सेयस्स सुपसत्थो ॥१८॥ तत्थ इओ परमोसी सुरप्पहो नाम सयलपुरमोसी। हरिउं देवीहारं तीए अप्पेइ अतितारं ॥ १९ ॥ उज्जाणऊसवंमी हारं परिहित्तु सा गया कंमी। दिट्ठो य रयणसारो देवीचेडीहिं सो हारो ॥ २० ॥ आगंतुं विन्नत्तो निवस्स सो ताहिं हारवुत्तंतो। तो तग्गहणकयमई रम्मे पुरिसे समादिसई ॥२१॥ गहिओ य सो य तेहिं अचिरेणं गहियआउहसएहिं। सूलाइ झत्ति खित्तो आणाएँ निवस्स सा तत्तो ॥२२॥ चिंतइ महप्पमाया इण्हिं अस्सेरिसी दसा जाया। तो किंचि उवगरेमी एयस्सेयंमि समयंमी ॥२३॥ तह नवकारपभावं पिच्छामी अज्ज दुक्खवणदावं। इय सा गणिया मंतं पढावए तं जगपवित्तं ॥२४॥ इय कारइ य नियाणं जइ य एयस्स किंचिवि पमाणं। तो इत्थ पुरे होहं एयस्स निवस्स पुत्तोऽहं ॥ २५ ॥ तो मरिउं उप्पन्नो देवीउयरंमि सो सुकयपुन्नो। तो उप्पलाएँ राणी पुरओ भणिया इमा वाणी ॥२६॥ जह होही तुह पुत्तो नवकारपहावओ पउमनेत्तो। तो उप्पलं पम्मुइया एवं भणई निवइदइया ॥२७॥ जइ होही अंगरुहो मज्झं पडिपुन्नचंदसोममुहो। तो तुज्झ तं अवस्सं जायमेत्तं समप्पिस्सं ॥२८॥ इय भणिए निवभवणा गउप्पला नियगेहे पहिट्ठमणा। दोहलओ ससिपियणे तीए जाओ य अन्नदिणे ॥ २९ ॥ सो पूरिओ नरेहिं विहस्सईसरिससेमुहिधरेहिं। तीए कयाइ जाओ धम्मस्सवणे अभिप्पाओ॥३०॥ अह भणइ गणियमेवं सहि! मे मेलेसु तं खु मणिदेवं। जेण तयंते संमं सुणामि जिणदेसियं धम्मं ॥३१॥ सा भणइ विगयदोसो विहरइ अन्नत्थ कत्थवि गुरू सो। जं एगत्थ खगगणो इव चिट्ठइ नेव साहुजणो ॥ ३२ ॥ परमत्थि नाणधम्मा पवत्तिणी इत्थ सुव्वया नामा। तीइ समीवे धम्मो सुव्वउ कयभव्वजणसंमो ॥३३॥ तत्तो गंतुं धम्मं तदंतिए सा सुणेइ अइरंमं। दट्ठु पवित्तिणिरूवं विम्हियहियया भणइ एवं ॥३४॥

कत्तो तं वेरग्गा भगवइ! धम्मंमि एरिसे लग्गा ?। तो सुव्वयाइ भणियं सुव्वउ जइ तुम्ह अच्छरियं॥३५॥ अत्थिंदपुरे नयरे ससं-
कनिम्मलजिणिंदघरविसरे। भूमिवइ इंदसेणो पयावहणियारिनिवसेणो॥३६॥ तस्स य गुणवइ दइया लज्जासीलाइगुणसलिलसरिया।
पुत्ता य उसहसेणो पढमो इअरो य गुणसेणो ॥३७॥ कइयाइ सो नरिंदो विरत्तचित्तो विवेयतरुकंदो। रज्जभरे बहुपत्तं गुणसेणं
ठविय गुणजुत्तं ॥३८॥ जायाजेट्ठसुयजुओ धम्मं सोऊण झत्ति पव्वज्ज। गयसव्वभवविवाहो कमेण सिद्धो महीनाहो ॥३९॥ सो
उसहसेणसमणो सूरी जाओ कमेण विमलमणो। सा इंदसेणजाया अहयं तु पवित्तिणी जाया ॥४०॥ इय सोउं चंदमई गया तओ
नियगिहं विसुद्धमई। कालेण पुत्तरयणं पसवइ पुव्वव्व दिणरयणं ॥४१॥ तो कारवेइ अणहं तस्स पिया दस दिणाणि जंममहं।
तस्स नवकारचंदो इय नामं कुणइ साणंदो ॥४२॥ उप्पलमालाईहिं सो लालिज्जंतु पंचधाईहिं। संजायअट्ठवरिसो कमेण गुरु-
लोयकयहरिसो ॥४३॥ अह सो सुजोगजुत्ते दिवसंमी सोहणंमि य मुहुत्ते। पियरेहिं सुविणीओ लेहायरियस्स उवणीओ ॥४४॥
तेणवि सउज्जमेणं गुरुप्पसाएण सेमुहिगुणेणं। पढियाओ अइसिग्घं सयलाओ कलाओ निव्विग्घं ॥४५॥ तत्तो जुव्वण पत्तो उब्भ-
डरूवेण विजियरइकंतो। पियरेहिं पवरजत्तं विवाहिओ सिरिमइं कन्नं ॥४६॥ सो तीएँ समं भोए भुंजंतो सुहसुहेण गयसोए।
बहुकालमइक्कमई धम्मत्थाविग्घओ सुमई ॥४७॥ अह कइया वेरग्गा उप्पलमालत्ति चिंतिउं लग्गा। अयि! जिणधम्मपहावो जगंमि
कह फुरइ हयपावो ? ॥४८॥ जं पंचनमुक्काराराहणओ चेव निहयदुहवारो। पावी चोरोवि वरे जाओ एसो निवस्स घरे ॥४९॥ तो किं
न दुहावासं छड्डेऊणं झडित्ति घरवासं। आराहिज्जइ रंमो सयलोवि जिणिंदवरधम्मो ॥५०॥ इय सा विरत्तचित्ता रायाणं विन्नवेइ
गुरुसत्ता। गिण्हिस्सं पव्वज्जं देवाहं सयलजगपुज्जं ॥५१॥ तो पुच्छइ तं राया कओ विरत्ता तुमं विसयसाया ?। अह तीए वुत्तंतो

कहिओ सव्वोऽवि पुव्वुत्तो ।।५२।। तं सोउं गयदंदो गणियादेवीजुओ नरवरिंदो। नवकाचंदतणयं रज्जभरे ठावइ सपणयं ।।५३।। पव्वइओ गुणगुरुणो पासे सो उसहसेणवरगुरुणो। ते तिन्निवि चिरकालं काऊण तवं तु सुविसालं ।।५४।। पज्जंते कयऽणसणा मरिउं सग्गंमि ते गया समणा। तत्तो चुया कमेणं ते जाइस्संति निव्वाणं ।।५५।। इय वसहिफलंमी दुक्खक्कखानलंभी, निसुणिय सुपवित्तं उप्पलाए चरित्तं। सततवसहिदाणं देह वाचंजमाणं, लहह सयलसुक्खं जेण तुम्हेवि मुक्खं ।।५६।। इत्युत्पलादृष्टांतः ।। आदिशब्दात् कपिलब्राह्मणादयोऽन्येऽपि ज्ञातव्या इति ।। शय्यादातॄणां दिवश्च्युतानां सुखमुपदर्शयन्नाह—

लहंति सुक्खं तु अणन्नतुल्लं, आउं सुदीहं अवमच्चुहीणं ।
सुदंसणा गाढसुगिज्झवक्का, विसाललच्छीइ जुया महप्पा ।।१९४।।

सुगमं, नवरं सुदंसणात्ति सुरूपाः सुसम्यक्त्वाश्च 'गाढसुगिज्झवक्क'त्ति गाढं भक्त्यतिरेकात् सुष्ठु—अतिशयेन ग्राह्यं—आदेयं वाक्यं येषां ते तथा ।। यदुक्तं प्राग् 'शय्यादानं सर्वदानेभ्यः श्रेष्ठतमं' तत् सहेतुकमाविर्भावयन्नाह—

वायंति सत्थं तह चिंतयंति, पाढंति भव्वे तह सावयंति ।
कुणंति वक्खाणमणण्णसत्ती, धण्णस्स गेहे मुणिणो सयावि ।।१९५।।

सुबोधं, नवरं 'सावयंति'त्ति एकेनापि भव्येन पृष्टमर्थं व्याकुर्वंति, व्याख्यानं तु पर्षद्मध्ये, न केवलं शय्यास्वाम्येव धन्यः, किंतु अनुमोदमाना अन्येऽपीत्यत आह—

राया देसो नगरं भवणं तह गिहवई य सो धन्नो। विहरंति जत्थ साहू अगुग्गहं मण्णमाणाणं ।।१९६।।

राजा—मूर्धाभिषिक्तः देशो नगरं भवनमिति तात्स्थ्यात्तद्व्यपदेश इतिन्यायाद्देशनगरभवनस्था जना गृह्यंते, तथा गृहपतिश्च—सामंतादिर्धन्यः, यत्र किं ?—विहरंति यत्र क्षेत्रे साधवः, किं कुर्वंतां तेषामित्याह—अनुग्रहं—महाप्रसादं मन्यमानानामिति शय्यादान-माहात्म्यं निगमयन्नाह—

जो देइ उवस्सयं जइवराण गुणसयसहस्सकलियाणं । तेणं दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥१९७॥

कंठ्या ॥ दानविधावेव कृत्यशेषमुपदर्शयन् कृत्यांतरं प्रस्तावयन्नाह—

तओ तेसु नियत्तेसु, गच्छई जाव दारयं । वंदित्ता मुणिणो ताहे, करे अन्नं तओ इमं ॥१९८॥ कंठ्यः॥ तदेवाह—

साहम्मियाण वच्छल्लं, कायव्वं भत्तिनिब्भरं। देसियं सव्वदंसीहिं, सासणस्स पभावणं ॥१९९॥

समानः—सदृशो धर्म्मः—अर्हच्छासनं येषां ते साधर्म्मिकास्तेषां, वात्सल्यं—वस्त्रान्नपानाद्यैः सन्माननं कर्तव्यं भक्तिनिर्भरं—बहुमानसारं, नतु कीर्त्याद्यर्थं, कस्माद्धेतोरित्यत आह—देशितं सर्वदर्शिभिः शासनस्य प्रभावनां, अनंतरदृष्टांतदर्शनद्वारेणेति ॥ तथा चाह—

महाणुभावेण गुणायरेणं, वयरेण पुव्विं सुयसायरेणं ।
सुयं सरंतेण जिणुत्तमाणं, वच्छल्लयं तेण कयं तु जम्हा ॥२००॥

महानुभावेन—क्षीराश्रवादिमहालब्धिप्रभावयुक्तेन गुणाकरेण—अलुब्धत्वादिगुणनिवासेन वज्रेण—श्रीवज्रस्वामिना पूर्वमिति ऐदंयुगीनजनापेक्षमुक्तं, श्रुतसागरेण—दशपूर्वपयःपारावारकल्पेन श्रुतं—जिनोत्तमानां आगमं 'साहमियवच्छल्लंमि उज्जुये' त्याद्यर्हद्वचनं सरता, यस्मात् तेनापि साधर्मिकजनवात्सल्यं—दुर्भिक्षाद्यापदुद्धरणरूपं कृतमित्यक्षरार्थः। भावार्थस्तु ज्ञातगम्यः, तच्चेदं—इहैव भरत-

क्षेत्रेऽधिज्यीकृतधनुर्निभे । श्रिया स्वर्देशदेशीयेऽवंतिदेशोऽस्ति विश्रुतः॥१॥ तत्र तुंबवनाभिख्यं,विद्यते सन्निवेशनम् । श्राद्धो धनगिरि-स्तत्र,महर्द्धिः श्रेष्ठिसूरभूत्॥२॥ स सुधीर्वर्त्तमानोऽपि,वयसि स्मरवल्लभे । नावांछीद्वल्लभां कर्तुं,व्रतमिच्छुः सुदुर्लभम्॥३॥ यत्र यत्र तदर्थं तत्पितरौ वव्रतुः कनीम् । तत्र तत्र व्रतं लास्यामीत्युक्त्वा स न्यषेधयत्॥४॥ धनपालमहेभ्यस्य,सुनंदा नंदनाऽन्यदा । ऊचे धनगिरेरेव, देयाऽहमिति मातरम् ॥५॥ प्रार्थयित्वा ततोऽत्यर्थं,धनो धनगिरेर्ददौ । सुनंदां सोऽप्युपायंस्त,पित्राग्रहवशंवदः ॥६॥ भ्राताऽऽर्यसमितो नाम,सुनंदायाः पुराऽग्रहीत् । पारिव्राज्यं जगत्पूज्यं,पार्श्वे सिंहगिरेर्गुरोः॥७॥ प्रियां धनगिरिर्भेजेऽन्यदा ब्रह्मप्रियोऽपि हि । बलीयोऽ-वश्यवेद्यं हि,कर्म्म भोगफलं खलु॥८॥ इतश्चाष्टापदे पुंडरिकाख्यं गौतमर्षिणा । प्ररूपितं पुरा येनाध्ययनं ह्यवधारितम्॥९॥ श्रीदस्यो-त्तरदिक्पस्य,सामानिकसुपर्वणः । सुनंदायास्तदा कुक्षौ,प्रच्युत्यावततार सः॥१०॥ युग्मं॥ ज्ञात्वा धनगिरिर्गुर्व्वीं,गर्भोऽयं ते द्वितीयकः। भावीत्युक्त्वा स्वयं दीक्षां, सिंहगिर्यंतिकेऽग्रहीत् ॥११॥ जगदानंदकालेऽथ, सुनंदाऽसूत नंदनम् । अनेकगुणकल्पद्रुप्रादुर्भावैकनंदनम् ॥१२॥ आयातः सूतिकागेहे, प्रतिजागरितुं तदा । सुनंदायाः सखीलोकस्तं दारकमदोऽवदत् ॥१३॥ हे जात ! यदि ते तातस्तदा नादास्यत व्रतम् । अतुच्छमुत्सवं नूनं, तदद्याकारयिष्यत ॥१४॥ बालोऽप्यबालधीः सोऽथ, तच्छृण्वन् कर्म्मलाघवात् । ईहापोहं वि-तन्वानो, जातिस्मृतिमवाप सः ॥१५॥ कथं व्रताय मां माता, मोक्ष्यतीति विचिंत्य सः । रोदनं कर्तुमारेभे, क्रोडस्थोऽपि दिवा-निशम् ॥१६॥ एवं च रुदतस्तस्य, मासाः षडतिचक्रमुः । सुनंदाऽप्यतिनिर्वेदमासदत्तेन सूनुना ॥ १७ ॥ तदा च तत्र कामेभसिंहः सिंहगिरिर्गुरुः । आययावार्यसमितधनगिर्यादिसंयुतः ॥१८॥ नत्वाऽथ धनगिर्यार्यसमितौ मुनिनायकम् । पप्रच्छतुर्यथा ज्ञातीनिच्छावो वीक्षितुं प्रभो ! ॥१९॥ तयोश्च पृच्छतोर्दृष्ट्वा, शकुनं शुभसूचकम् । जजल्पानल्पसंवित्तिरेतत्सिंहगिरिर्गुरुः ॥२०॥ लभेयाथां सचित्तं

चाऽप्यचित्तं शाऽद्य यद् युवाम्। तदादेयं ततस्तौ तु, प्रतिपद्य गुरोर्वचः ॥२१॥ भिक्षाचर्याप्रविष्टौ तौ, दृष्ट्वाऽन्या योषितोऽभ्यधुः। पित्रेऽमुं दारकं दत्त्वा, सुनंदे! पश्य कौतुकम् ॥२२॥ क्रमेण विचरंतौ तौ, सुनंदागृहमीयतुः। सुतमादाय सोत्थाय, निरानंदाऽब्रवीदिदम् ॥२३॥ अहमुद्वेजिताऽश्रांतं, रुदताऽनेन सूनुना। ततो मे कृतमेतेन, गृहाणेमं स्वमंगजम् ॥२४॥ स्थैर्यनिर्जितगीर्वाणगिरिर्धनगिरिर्जगौ। करिष्येऽहमिति त्वं तु, पश्चात्तापं व्रजिष्यसि ॥२५॥ मा कार्षीः सर्वथेदक्षं, कुरुषे चेत् कुरुष्व तत्। कृत्वा तु साक्षिणः पश्चान्न ह्येनं लप्स्यसे पुनः ॥२६॥ विधाय साक्षिणः साऽथ, निर्विण्णा तं कुमारकम्। मुनेः समार्पयत् सोऽपि, मूर्त्तं पुण्यमिवाददे ॥२७॥ पात्रबंधेन तं दध्रे, गुणपात्रं प्रयत्नतः। सद्विवेकाभिरामोऽथ, विरराम स रोदनात् ॥२८॥ अथार्यसमितेनायं, ययौ धनगिरिर्मुनिः। तस्य बालस्य भारेण, नमद्बाहुरुपाश्रये ॥२९॥ तमीक्षित्वा गुरुः प्रोचे, भिक्षाभारं ममार्पय। भूरिभारभराक्रांतं, विश्रामय निजं भुजम् ॥३०॥ कांत्या मारकुमाराभं, कुमारं सोऽथ यत्नतः। गृहीत्वा तं गुरोर्हस्ते, न्यासीकृतमिवार्पयत् ॥ ३१ ॥ अनंसीदंजलिः क्षिप्रं, तद्भारेण गुरोरपि। कृपालोर्जगदाक्रष्टुमिव संसारगर्ततः ॥३२॥ ततः सविस्मयः साधुमूचे वाचंयमोत्तमः। वज्रवद् गुरुभारोऽयमहो धर्त्तुं न पार्यते ॥३३॥ तीर्थाधारो हि भाव्येष, नृरत्नं तेन बालकः। रक्ष्यो यत्नेन यद्रत्नं, प्रायोऽपायपरायणम् ॥३४॥ इत्युक्त्वाऽर्प्यत साध्वीनां, पालनाय स सूरिभिः। अदायि वज्र इत्याख्यां, वज्रसारस्य तस्य तु ॥३५॥ तं बालकं व्रतिन्योऽपि, गत्वा शय्यातरौकसि। संघाधारोऽयमित्युक्त्वा, पालनायार्प्पयंस्ततः ॥३६॥ शय्यातर्योऽपि बालं तं, बालचापलवर्जितम्। अधिकं स्वस्वपुत्रेभ्यः, पश्यंत्योऽपालयन् मुदा ॥३७॥ अचिकीर्षीत् स बालोऽपि, किंचिन्मूत्रादिकं यदा। तदा तदाऽकरोत् संज्ञां, मुस्फुटां स्फुटपाटवः ॥३८॥ सुनंदापि तमालोक्य, नेत्रकैरवशीतगुम्। शय्यातरेभ्योऽयाचिष्ट, मत्पुत्र इतिभाषिणी ॥३९॥

जानीमहे न ते मातृसंबंधममुना सह । गुरूणां किंत्वसौ न्यास, इति तस्यै न ते ददुः ॥४०॥ महताऽथोपराधेन, सा तेषामेव मंदिरे। आगत्य स्तन्यपानादि, ददावाशावशंवदा ॥४१॥–अथाचलपुरे कन्यावेण्णाकूलकषांतरे । अवात्सुस्तापसाः केचित्, तत्रैकः पादलेप-वित् ॥४२॥ स नित्यं पादुकारूढः, पादलेपाद् जलेऽपि हि । स्थलवत् संचचारोच्चैर्जनयन् विस्मयं जने ॥४३॥ यादृक्षो दर्शनेऽस्माकं, प्रभावोऽध्यक्षमीक्ष्यते । न तादृक्षोऽस्ति वः श्राद्धानेवं धृष्णग् दधर्ष सः ॥४४॥ तदाऽऽर्यसमिताचार्यस्तत्रागाद्वज्रमातुलः । अनेकयोग-संयोगसरित्पूरसरित्पतिः ॥४५॥ श्रद्धया वर्धितोत्साहाः, श्राद्धाः सर्वर्धिसंयुताः । द्रुतमेत्य तमाचार्यं, यथाविधि ववंदिरे ॥४६॥ तस्मै चाचार्यवर्यायाशंसन्निर्व्याजभक्तयः । उपहासं स्वतीर्थस्य, तापसैः कृतमार्हताः ॥४७॥ अथ सूरिरुवाचैवं, वंचयत्येष कूटधीः । केनापि पादलेपादिप्रकारेणाबुधं जनम् ॥४८॥ नास्य काऽपि तपःशक्तिस्तापसस्य तपस्विनः । ततोऽसौ श्रावकैर्भोक्तुं, कूटभक्त्या न्यमंत्र्यत ॥४९॥ एकस्योपासकस्यागाद्, गेहे सोऽपि जनैर्वृतः । भक्तिमानिव स क्षिप्रमभ्युत्थायाभ्यधादिदम् ॥५०॥ प्रक्षालयामि ते पादौ, भदंतानुगृहाण माम् । महत्सु जायते जातु, न वृथा प्रार्थनाऽर्थिनाम् ॥५१॥ स तस्यानिच्छतोऽप्युष्णांभसा तत्पादपादुकाः। तथा दधाव तत्रास्थाल्लेपगंधोऽपि नो यथा ॥५२॥ अभोजयच्च तं श्राद्धः, प्रतिपत्त्या गरिष्ठया । नाज्ञासीत् भोजनास्वादं, विगोपा-गमभीः स तु ॥ ५३ ॥ भुक्त्वा च तापसो द्वीपवतीतीरं पुनर्ययौ । वृतः पौरैः जलस्तंभकौतुकालोकनोत्सुकैः ॥ ५४ ॥ लेपांशोऽद्यापि कोऽप्यत्र, भावीत्येवं विभावयन् । साहसं स समाधाय, मूर्खः प्राविक्षदंभसि ॥५५॥ ततस्तस्मिन् सरित्तीरे, ब्रुडति स्म स तापसः। आत्मीयमुपहासं हि, जने द्रष्टुमिवाक्षमः ॥५६॥ तत्कालं दत्ततालश्च, लोकः कलकलं व्यधात् । तदा च तत्र तेऽप्येयुः, सूरयो भूरि-शक्तयः ॥५७॥ अथो विधिरसनो जैनशासनस्य प्रभावनम् । क्षिप्त्वा नद्यंतरे योगविशेषमिदमूचिरे ॥५८॥ हे वेण्णे ! ते परे तीरे, व्रजि-

ष्यामस्ततो द्रुतम्। तत्तटे मिलिते सायमम्लिकादलवत् स्वयम् ॥ ५९ ॥ प्रमोदभरसंपूर्णशेषसंघसमन्वितः। अथार्यसमिताचार्यः,
परतीरभुवं ययौ ॥६०॥ ते तापसाः प्रभावं तं, प्रेक्ष्याचार्यप्रदर्शितम्। सर्वे मथितमिथ्यात्वास्तत्पार्श्वे जगृहुर्व्रतम् ॥६१॥ ते ब्रह्मद्वीप-
वास्तव्या, इत्यभूवंस्तदन्वयाः। ब्रह्मद्वीपकनामानः, श्रमणाः श्रुतविश्रुताः ॥६२॥ एवं विबोधं जनयन् जनानां, पद्माकराणामिव
तिग्मरश्मिः। योगप्रभावद्रुममेघकल्पश्चिरं विजह्रे समितः पृथिव्याम् ॥६३॥ –इतश्च वज्रस्तत्रस्थः, क्रमाज्जज्ञे त्रिहायनः। तदा च
धनगिर्याद्यास्तत्राभ्येयुर्महर्षयः॥६४॥ तेभ्योऽत्यर्थं सुनंदा सा, ययाचे तं कुमारकम्। नार्प्पयंस्ते त्वथो राजकुलेऽभूद् व्यवहारकः॥६५॥
तत्र भूपस्य सव्येन, सुनंदा समुपाविशत्। श्रीसंघस्त्वपसव्येन, यथास्थानं च पूर्जनः॥ ६६ ॥ राजा स्वांके व्यधाद्वज्रं, विचार्यैवं
ततोऽवदत्। येनाकारित आयाति, तस्य स्यात् खल्वसौ शिशुः ॥६७॥ मेनाते नृपनिर्णीतं, तच्चौ पक्षावुभावपि। ऊचतुश्चात्र कः पूर्व-
मेनमाह्वातुमर्हति ? ॥६८॥ अथाचचक्षिरे पौराः, साधूनामयमर्भकः। चिरं संघटितस्नेहो, नातिलंघेत तद्वचः ॥६९॥ मातैवाह्वातु
तत्पूर्व्वं, यस्माद्दुष्प्रतिकारिणी। नारीति सत्त्वहीना च, राजाऽप्येवममन्यत ॥ ७० ॥ सुनंदाऽथ शिशुं क्रीडनकैर्हस्तिहयादिभिः।
भक्ष्यभेदैश्च तं बालं, प्रालोभयन् मुहुर्मुहुः ॥ ७१ ॥ जनन्या उपकाराब्धेः, पारीणः स्यान्न कोऽपि ना। एवं जानन्नपि सुधीर्वज्रो
दध्याविदं हृदि ॥७२॥ श्रीसंघमपमन्ये चेन्, मातुर्मोहेन मोहितः। भविष्यामि तदाऽहं त्वनंतसंसारिकः खलु ॥७३॥ वज्रो वज्र-
दृढस्वांतस्ततोऽसौ मातृसंमुखम्। मनागपि निजस्थानान्नाचालीच्छैलनिश्चलः ॥७४॥ राज्ञाऽथ प्रेरितो दंतद्युतिविद्योतिताधरः। रजो-
हरणमुत्क्षिप्येत्यूचे धनगिरिर्मुनिः ॥७५॥ चेद्व्रते व्यवसायस्तेऽशुभकर्म्मरजोहरम्। तद्रजोहरणं धर्म्मध्वजमादत्स्व मेऽर्भक ! ॥७६॥
वज्रस्तदैव तातस्योत्संगमागम्य शुद्धधीः। तद्रजोहरणं मूर्तिमंतं धर्म्ममिवाददे॥७७॥ जयताच्छ्रीमहावीरशासनं भवनाशनम्।

इति लोकप्रघोषोऽभूद्रोदःकुक्षिंभरिस्ततः ॥७८॥ म्लानवदनांभोजा, हिमार्त्तेव सरोजिनी । निरानंदा सुनंदा तु, दध्यावेवं मनस्विनी ॥७९॥ भववासादितो भीतौ, शार्दूलाविव पावकात् । परिव्रज्यामुपादत्तां, मम भ्रातृपती पुरा ॥८०॥ सांप्रतं स्वर्भकोऽप्येष, मत्पुत्रः प्रव्रजिष्यति । तन्ममापि व्रतं श्रेयो, निःश्रेयसपदप्रदम् ॥८१॥ आत्मनैव विचिंत्यैवं, सुनंदा स्वगृहं ययौ । साऽऽमोदा वज्रमादाय, वसतिं यतयोऽप्ययुः ॥८२॥ नापात् स्तन्यं व्रताकांक्षी, धन्यो धनगिरेः सुतः । प्रव्राज्य सूरिभिः सोऽथ,मुक्तः साध्वीप्रातिश्रये ॥८३॥ शिवशर्म्मैकसानंदा, सुनंदाऽपि समाददे । श्रीसिंहगिरिपादांते,लोकद्वयहितं व्रतम् ॥८४॥ वज्रोऽधीयानसाध्वीभ्यः, शृण्वन्नेकादशापि हि । अंगान्यनंगमातंगमृगेंद्रोऽध्यैष्ट सुष्ठुधीः ॥८५॥ आर्यकोपाश्रयादष्टवर्षो वज्रो महर्षिभिः । हर्षफुल्लेक्षणांभोजैरानिन्ये स्वप्रतिश्रये ॥८६॥ अन्यदोज्जयिनीं सूरिसिंहः सिंहगिरिर्ययौ । ववर्ष चाव्यवच्छिन्नधारं धाराधरस्तदा ॥८७॥ अथ वज्रमुनेः पूर्वसंस्तुतैर्जृंभकामरैः । वज्रसत्त्वपरीक्षार्थं,वणिग्रूपानुकारिभिः ॥८८॥ विकुर्व्वितमहासार्थैः,स्थितप्राये घनाघने । गुरुः सिंहगिरिर्भक्त्या,भिक्षार्थं तैर्न्यमंत्र्यत ॥८९॥ युग्मं । वृष्टिर्नास्तीति विज्ञाय, गुरुणा करुणावता । बालर्षिः प्रेषितो वज्रो, विहर्तुं निर्गतस्ततः ॥९०॥ सूक्ष्मवृष्टिं ततो वीक्ष्य, वज्रो निववृते द्रुतम् । रुद्धाऽथ सर्वथा वृष्टिमाहूयत पुनस्तु तैः ॥९१॥ तेषामत्योपरोधेन,वर्षाभावेन चागमत् । सौनंदेयस्तदावासमीर्या-समितिसंयुतः ॥९२॥ भक्तादि दित्सया तेषु, सुमनस्सूत्थितेषु सः । उपयोगमदाद् द्रव्यक्षेत्राद्यैरेषणोद्यतः ॥९३॥ कूष्मांडाद्यमिदं द्रव्यं, क्षेत्रं चोज्जयिनी ह्यदः । कालो वर्षागमो भावोऽनिमेषाक्षादिकस्तथा ॥९४॥ तन्नूनं देवपिंडोऽयं, यतीनां नहि कल्पते । इत्यनादाय तद्भिक्षां, वज्रस्वामी न्यवर्त्तत ॥९५॥ ततस्ते मुदिताः स्वीयवृत्तांतख्यानपूर्वकम् । विद्यां वैक्रियलब्ध्याख्यां, ददुर्वज्रमहर्षये ॥९६॥ ज्येष्ठे मासेऽन्यदा वज्रो, बहिर्भुवि गतः सुरैः । नैगमीभूय तैर्भूयो, घृतपूरैर्न्यमंत्र्यत ॥९७॥ सदोपयोगयुग् वज्रो, देव-

पिंडं च पूर्ववत् । विज्ञाय नाग्रहीत् पिंडग्रहणे पंडितो हि सः ॥९८॥ ततस्ते पूर्वमित्राय, दत्त्वा वज्राय भक्तितः । आकाशगामिनीं विद्यां,स्वस्थानमगमन् सुराः ॥९९॥ सुस्थिरैकादशांगोऽसौ,यद्यत् पूर्वगतान्यपि । अपूर्वप्रतिभोऽश्रौषीत्तत्तज्जग्राह लीलया॥१००॥ पठेति स्थविराः प्राहुर्यदा वज्रं तदा च सः । उद्घृणन्नस्फुटं किंचिच्छुश्राव पठतोऽपरान् ॥१०१॥ अपरेद्युर्दिनामध्ये, भिक्षार्थं भिक्षवो ययुः । बहिर्भूमौ गुणग्रामगुरवो गुरवोऽप्ययुः ॥१०२॥ तस्थौ तु वज्र एकाकी, वसतौ सोऽथ वेष्टिकाः । विन्यस्य साधुमंडल्यां, स्वयं मध्ये निपद्य च ॥१०३॥ एकादशानामंगानामपि पूर्वगतस्य च । वाचनां दातुमारेभे, मेघगंभीरया गिरा ॥१०४॥ उपोपाश्रयमायाताः, श्रुत्वा गद्गदस्वरम् । दध्युरित्यात्तभिक्षास्ते, किं त्वेयुर्मंक्षु भिक्षवः ॥१०५॥ क्षणाच्च जज्ञुर्वज्रस्य, यथाऽयं वाचनाध्वनिः । गर्भ-स्थोऽयं किमध्यैष्टाचिंतयंश्चेति सूरयः ॥१०६॥ अस्मास्वच्छ्रवणाशंका, मा भूदिति विचिंत्य सः । अपसृत्य शनैरुच्चैश्चक्रे नैषेधिकीं ततः ॥१०७॥ तामाकर्ण्य सुनंदासूर्गिरुत्थाय विष्टरात । कृतहस्तोऽमुचत्सर्वाः,स्वस्वस्थानेषु वेष्टिकाः ॥१०८॥ समेत्य च गुरोर्दंड-माददेऽंह्री ममार्ज च । आसनस्थस्य पादौ चाक्षालयत् प्रासुकांभसा ॥१०९॥ एवं च दध्युराचार्या, विद्यावृद्धोऽर्भकोऽप्यसौ । अजा-नद्भयोऽन्यसाधुभ्यो, रक्ष्योऽवज्ञास्पदीभवन् ॥ ११० ॥ एवं विमृश्य यामिन्यां, शिष्येभ्योऽकथयन्निति । गंता स श्वोऽमुकं ग्रामं, द्वित्र्यहं तत्र नः स्थितिः ॥१११॥ अथोचुर्मुनयो योगप्रपन्ना वाचनाप्रदः । को नो भावीत्यथो सूरिर्वज्र इत्यादिशत् पुनः ॥११२॥ ऋजवस्ते विनीताश्च, तत्तथैव प्रपेदिरे । न संतो जातु लंघंते, गुर्वाज्ञां भद्रदंतिवत् ॥११३॥ प्रातः कृत्वा तु योगस्य, सा-मग्रीं ते गते गुरौ । वज्रर्षिं गुरुवद्भक्त्या,निषद्यायां न्यपादयत् ॥११४॥ वज्रोऽथाज्ञानभूमीभृद्वज्रोऽमृतकिरा गिरा । आनुपूर्व्या मह-र्षीणां, तेषामालापकान् ददौ ॥ ११५ ॥ ये मंदमेधसस्तेऽप्यभूद्वज्रो ह्यमोघवाक् । तद्वीक्ष्य नव्यमाश्चर्यं, गच्छः सर्वो विसिष्मये

॥११६॥ आलापान् मुनयः पूर्वपठितान्निस्तुषानपि । संवादहेतवेऽपृच्छन्, सोऽपि व्याख्यात्तथैव तान् ॥११७॥ ये यावत् सूरितो-ऽनेकवाचनाभिरधीयिरे । पेठुर्व्रजाच्छ्रुतं तावदेकवाचनयाऽपि ते ॥ ११८ ॥ अथोचुः साधवो हृष्टा, विलंबेत गुरुर्यदि । वज्रांतिके तदाऽऽश्वेष, श्रुतस्कंधः समाप्यते॥११९॥ एतावद्भिर्दिनैर्वज्रो, भावी ज्ञातगुणः खलु । मुनीनामिति मत्वैयुर्मुदितास्तत्र सूरयः॥१२०॥ मुनयस्तानवंदंत, भक्तिभाजोऽथ सूरिभिः । पृष्टाः स्वाध्यायनिर्वाहं, शशंसुस्ते यथास्थितम् ॥ १२१ ॥ नत्वा भूयोऽपि ते शिष्या, गुरुमेवं व्यजिज्ञपन् । भगवन्! वाचनाचार्यो, वज्र एवास्तु नः सदा ॥१२२॥ गुरुर्बभाषे सर्वेषामेष भावी गुरुः क्रमात् । किंतु मा-न्योऽधुनाऽप्युच्चैर्गुणैर्वृद्धोऽर्भकोऽपि हि ॥१२३॥ अत एव वयं ग्रामेऽगमामायं च वोऽर्पितः । सूरिर्यथा हि जानीथ, यूयमस्येदृशान् गुणान् ॥१२४॥ नत्वस्य वाचनाचार्यपदवी युज्यतेऽधुना । कर्णश्रुत्याऽऽददेऽनेन, श्रुतं यन्न गुरोर्मुखात् ॥१२५॥ ततश्च श्रुतसारज्ञः, श्रुतमर्थसमन्वितम् । अध्यापयत् गुरुर्वज्रं, विधायोत्सारकल्पकम् ॥१२६॥ साक्षीकृतगुरुर्वज्रमुनिर्गुर्वर्पितं श्रुतम् । मातृकापदवत्सर्वं, स जग्राह कुशाग्रधीः ॥१२७॥ तथाऽभूच्छ्रुतविद्वज्रो, यथा सिंहगिरेरपि । चिरसंदेहभूमीभृद्भेदे भिदुरतां ययौ ॥ १२८ ॥ विह-रंतोऽन्यदा सिंहगिरयः सपरिच्छदाः । विहारक्रमयोगेन, ययुर्दशपुरं पुरम् ॥१२९॥ तदा चोज्जयिनीसंस्थं, संपूर्णदशपूर्विणम् । आ-चार्यं भद्रगुप्ताख्यं, शुश्रुवुर्जनवार्त्तया ॥१३०॥ तत्पार्श्वे पठनायाथ, गुरुर्वज्रं समादिशत् । वत्स! गत्वा विशालायां, दश पूर्वाण्य-धीष्व हे ॥१३१॥ उररीकृत्य गुर्वाज्ञामवंतीं प्रति सोऽचलत् । संघाधारस्य तस्यादाव्, साधुसंघाटकं गुरुः ॥१३२॥ ययावुज्जयिनीं सायं, वज्रोऽऽस्थात्तद्बहिर्निशि । स्वप्नमेनं निशाशेषे, भद्रगुप्तस्तदैक्षत ॥१३३॥ यदद्य पयसा पूर्णः, केनाप्यसत्पतद्ग्रहः । अपाय्या-

गंतुना तेन, तृप्तिश्च परमाऽऽप्यत ॥१३४॥ प्रभाते तं विनेयेभ्यः, स्वप्नं गुरुराचीकथत्। विविधं तेऽपि तस्यार्थं, यथाप्रज्ञं व्यचारयन् ॥१३५॥ गुरुः प्रोवाच नो वित्थ, कोऽप्येष्यति ममातिथिः। स उपादास्यतेऽस्मत्तः, सर्वं सार्थं श्रुतं सुधीः ॥१३६॥ भद्रगुप्तगुरूणां तु, पार्श्वे वज्रो ययौ प्रगे। तांश्च त्रिचतुरावर्त्तवंदनेनाभ्यवंदत ॥१३७॥ गुणिनं जितकंदर्प्परूपं त श्रुतपूर्विणः। दक्षमुख्या उपालक्ष्य, परिपस्वजिरेऽथ ते ॥१३८॥ तैरागमनकार्यं च, पृष्टो धनगिरेः सुतः। अध्येतुं दश पूर्व्वाणीत्यूचे वंदनपूर्वकम् ॥ १३९ ॥ ततो वज्रमुनिं तुष्टो, भद्रगुप्तो गणाधिपः। अध्यापयितुमारेभे, पूर्वाण्यादरपूर्वकम् ॥१४०॥ अचिरेणापि कालेन, सुनंदानंदनो मुनिः। पूर्व्वाण्यधीतपूर्व्वीव, दशाप्यध्यैष्ट लीलया ॥१४१॥ यत्रैवाध्येतुमारब्ध, ग्राह्याऽनुज्ञाऽपि तत्र हि। इति स्वस्थमतिर्वज्र, आपपृच्छे गुरूंस्ततः ॥१४२॥ तैश्चादिष्टः सुनंदासूरागाद्दशपुरं पुनः। पूर्वानुज्ञा कृता तस्य, श्रीसिंहगिरिणा ततः ॥१४३॥ वज्रस्य विदधे पूर्वानुज्ञायां जंभृकामरैः। दिव्यप्रसूनचूर्णाद्यैर्महिमा महिमांबुधेः॥१४४॥ समर्प्य समये वज्रसूरेः सिंहगिरिर्गणम्। कृतानशनकर्म्मा च, सत्कर्म्मा त्रिदिवं ययौ॥१४५॥ साधुपंचशतीयुक्तो, वज्रोऽथ विहरन् गुरुः। यत्र यत्र ययौ तत्र, तत्र ख्यातिरभूदियं॥१४६॥ अस्याहो रूपमस्याहो, श्रुतं विश्वैकविश्रुतम्। उद्दामो महिमाऽस्याहो, अस्याहो कीर्त्तिरुज्ज्वला॥१४७॥ –इतश्च पाटलीपुत्रेऽभवच्छ्रेष्ठी धनाह्वयः। तत्पुत्री रुक्मिणी नाम, रुक्मिणीवातिरूपिणी ॥१४८॥ तस्यैव श्रेष्ठिनो यानशालायामन्यदाऽऽर्यिकाः। तस्थुर्वज्रगुरोस्तास्तु, व्यधुर्नित्यं गुणस्तुतिम् ॥१४९॥ तत्पार्श्वे रुक्मिणी वज्रस्वामिनो गुणसंस्तवम्। रूपं चाकर्ण्य तं मुक्त्वा, नान्यं वरमियेष सा॥१५०॥ आर्यिकास्तां ततः प्रोचुर्भद्र! मुग्धाऽसि रुक्मिणि!। नीरागमात्तदीक्षं च, यद्वज्रं त्वं वुवूर्षसि॥१५१॥ रुक्मिण्युवाच चेद्वज्रः, प्राव्राजीत्तन्ममापिहि। दीक्षैव श्रेयसे हंत, किं भोगैस्तं पतिं विना ॥१५२॥–इतश्च पाटलीपुत्रनगरासन्नमाययौ। क्रमेण विहरन्नुर्व्यां, श्रीमान् वज्रगणा-

धिपः ॥१९३॥ आयांतं वज्रमाकर्ण्य, पाटलीपुत्रपार्थिवः । सपौरः सपरीवारस्तत्कालं संमुखो ययौ ॥१९४॥ आयातो वीक्ष्य वज्रर्षि-वृंदीभूतांस्तपोधनान्। भूपतिः संशयापन्नो, दध्यावेवं स्वचेतसि ॥१९५॥ सर्वेऽमी जितकंदर्पाः, कंदर्प्पोपममूर्त्तयः । तत्को नामैषु वज्रर्षिर्यो वंद्यः प्रथमं मया ? ॥१५६॥ अथ स्थित्वा नृपोऽपृच्छद्भगवंतो मुमुक्षवः !। आख्यात किमयं वज्र०, किमेषः किमसाविति ? ॥१५७॥ तेऽप्यूचुः सोऽत्र नो किंतु, तदंतेवासिनो वयम् । राजन्माऽस्मासु तं मंस्थाः, क्व खद्योताः क्व चार्यमा ? ॥१५८॥ इत्येवं साधुवृंदेषु, सर्वेषु प्रश्नयन् नृपः । पश्चाद्वृंदस्थितं वज्रं, समीक्ष्य प्राणमन्मुदा ॥१५९॥ उद्याने समवासार्षीदथासौ सपरिच्छदः । विदधे च सुधासारमधुरां धर्म्मदेशनाम्॥१६०॥ श्रीवज्रस्वामिनः क्षीराश्रवलब्धिमतस्तया । धर्म्मदेशनया राजा, रारज्यत निजे हृदि ॥१६१॥ देशनांते प्रभुं नत्वा, गत्वा च निजसद्मनि । राजा जगाद राज्ञीनामग्रे वज्रगुरोर्गुणान् ॥१६२॥ ततस्ता वंदितुं वज्रं, भक्त्याऽपृच्छंत भूपतिम्। तेनापि प्रेषिता राज्यः, श्रीवज्रं वंदितुं ययुः ॥१६३॥ वज्रमागतमाकर्ण्य, जनश्रुत्याऽथ रुक्मिणी। तमेव चिंतयंत्यस्थादंभोजमिव हंसिका ॥ १६४ ॥ द्वितीये दिवसे रुक्मिण्युवाच जनकं निजम् । सनिर्बंधं यथाऽद्यैव, देहि वज्राय तात ! माम् ॥१६५॥ धनोऽथ तां विवाहार्थं, सर्वालंकारभूषिताम् । अनेकधनकोटीभिर्युक्तां वज्रांतिकेऽनयत् ॥ १६६ ॥ तद्दिनात्पश्चिमे चाह्नि, वज्रे कुर्वति देशनाम् । सप्रमोदः पुरीलोकोऽन्योऽन्यमेवमभाषत ॥१६७॥ अहो वज्रस्य सौस्वर्यं, शृण्वद्भिर्यस्य देशनाम्। इहापि प्राप्यते मोक्षावस्थासौख्योपमं सुखम्॥१६८॥ रूपं गुणानुरूपं हि, यद्येतस्मिन् महामुनौ । भवेदुच्चैस्त किं तर्हि, सौरभ्यमिव कांचने ॥१६९॥ वज्रेणापि तदा तत्र, प्रवेशे रूपमात्मनः । शक्त्या संक्षिप्तमेवासील्लोकक्षोभातिशंकया॥१७०॥ भगवानथ विज्ञाय, तेषां भावं मनोगतम् । विश्ववंद्यांह्रिकमलः, कमलं कांचनं व्यधात्॥१७१॥ कृत्वा स्वाभाविकं रूपमनुरूपं सुपर्वणाम् । वज्रोऽध्यास्त

परब्रह्म, ब्रह्मेव तत्पयोरुहम् ॥१७२॥ श्रीमद्वज्रस्य तद्रूपं, दृष्ट्वा लोकः सविस्मयः। शिरांसि धूनयन् हर्षादेवमूचे परस्परम् ॥१७३॥ अस्यामरकुमाराभं, रूपमेतत् स्वभावजम्। मा भूवं प्रार्थनीयोऽहं, सामान्यं ह्यस्तनं त्वतः ॥१७४॥ तेन रूपेण वज्रर्षिर्देशनानीरनीरदः। अमंदानंदजननीं, विदधे धर्मदेशनाम् ॥१७५॥ देशनांते धनश्रेष्ठी, मुनिश्रेष्ठमदोऽवदत्। सद्यः प्रसद्य नः स्वामिन्नुद्वहैनां मदुद्वहाम् ॥१७६॥ उद्वाहानंतरं हस्तमोचने दुःखमोचनः। अनेका द्रव्यकोटीस्ते, प्रदास्ये भवतादिदम् ॥१७७॥ गुरुर्गंभीरगीरूचे, धनं धर्मधनैकधीः। कृतं मे धनकोटीभिः, कन्ययाऽप्यनयाऽनघ! ॥१७८॥ स्त्रियोऽर्था विषयास्ते तु, विशिष्यंते विषादपि। भवांतरेऽपि जंतूनां, ये भवंति हि दुःखदाः ॥१७९॥ दुःखदान् विषयान् ज्ञात्वा,कथं कक्षीकरोम्यमून्?। किं कोऽपि निपतेत् कूपे, वीक्षमाणो हि चक्षुषा ॥१८०॥ इयं मय्यनुरक्ता चेन्मदात्तं तदसावपि। उपादत्तां परिव्रज्यं, द्वारं निर्वाणसद्मनः ॥१८१॥ श्रुत्वेति रुक्मिणी सद्यो, बुद्धा वज्रांतिके व्रतम्। जग्राह न हि कोऽपि स्यात्, सुधास्वादनिरादरः ॥१८२॥ पदानुसारिश्रीवज्रः, संघस्योपचिकीः सुधीः। विद्यां महापरिज्ञातोऽन्यदोद्दध्रे नभोगमाम् ॥१८३॥ अभापिष्ट च वज्रर्षिरेतया विद्ययाऽस्ति मे। जंबूद्वीपभ्रमे शक्तिर्गंतुं वा मानुषोत्तरम् ॥१८४॥ परं मयैव विद्येयं,धर्त्तव्या न तु कस्यचित्। देयेत ऊर्द्धमन्ये यद्भविष्यंत्यल्पसत्त्वकाः ॥१८५॥ अन्यदा पूर्वदिग्भागादंत्योऽसौ दशपूर्विणाम्। उदग्देशं ययौ भव्यनेत्रकैरवचंद्रमाः ॥१८६॥ तदा करालो दुष्कालः, कालरात्रिरिवापतत्। सर्वतः सस्ववन्मार्गा, अपि व्युच्छिन्नतां ययुः ॥१८७॥ तस्मिन् महति दुष्काले, दुःखितः सकलोऽपि हि। श्रीसंघः संघनेतारं, वज्रमेवं व्यजिज्ञपत् ॥१८८॥ अस्माद् दुःखांबुधेरस्मान्, कथंचिदपि तारय। स्वामिन्नित्युदिते वज्रो, विचक्रे विद्यया पटम् ॥१८९॥ तत्रारुरोह संघोऽथ, ततो वज्रप्रयुक्तया। विद्ययोत्पुप्लुवे व्योम्नि, पटो वातात्ततूलवत् ॥ १९० ॥ तदा दत्ताभिधः

शय्यातरो वज्रगणेशितुः । समागादग्रतः सोऽभूद्गतश्चारैः कृते किल ॥१९१॥ श्रीसंघसंयुतं वज्रस्वामिनं व्योमगामिनम् । वीक्ष्य मंक्षु शिखां दक्षः, प्रोत्खायेति स आख्यत ॥१९२॥ भगवंतः ! पुराऽभूवं, तावच्छय्यातरो हि वः । साधर्म्मिकोऽधुना त्वस्मि, तत्ता-रयसि किं न माम् ?॥१९३॥ शय्यातरस्य वज्रस्तां, वाचं वाचंयमाग्रणीः । श्रुत्वा समीक्ष्य चोत्खातकेशं सूत्रार्थमस्मरत् ॥१९४॥ ये साधर्म्मिकवात्सल्ये, प्रह्वाः प्रवचनोन्नतौ । स्वाध्याये संयमे चैतान्, शक्त्या साधुः समुद्धरेत् ॥१९५॥ ततो भगवता तेन, सोऽपि शय्यातरो द्रुतम् । अध्यारोपि पटे तस्मिन्, दुर्दशार्णवपोतके॥१९६॥ सोऽथ संघयुतः सूरिः, समीरण इव क्षणात् । प्राप पापतमः-पूषा, पुरीं नाम महापुरीम् ॥१९७॥ तस्यां समृद्धसच्छ्राद्धसंयुतायां सदाऽभवत् । सुभिक्षं प्रायसः किंतु, बुद्धभक्तो महीपतिः ॥१९८॥ तत्रार्हताः सौगताश्च, देवपूजादि चक्रिरे । स्पर्धया श्रावकैर्दुष्टबोधा बौद्धास्तु जिग्यिरे ॥१९९॥ यद्यच्छ्राद्धाः पुरे वीक्षांचक्रिरे कुसुमा-दिकम् । तत्तत् प्रभूतमूल्येन, समस्तमपि चिक्रियुः ॥२००॥ सौगतास्तु कदर्यत्वात्, पुष्पाद्यादातुमक्षमाः । शौद्धोनिविहारेऽभूत्, ततः पूजा तनीयसी ॥२०१॥ वीक्षापन्नास्तु बौद्धास्ते, विज्ञपय्य नरेश्वरम् । सर्वं पुष्पादिकं जैनश्राद्धानां प्रत्यषेधयन् ॥२०२॥ दानशौंडा अपि श्राद्धाः, पुष्पवृंतान्यपि क्वचित् । अथैर्न लेभिरे सौख्यमिव धर्माद्दतेऽगिनः ॥२०३॥ उपस्थिते पर्युषणावासरेऽर्हदुपासकाः । बाष्पार्द्रनेत्रयुगलाः, श्रीमद्वज्रमुपाययुः ॥२०४॥ तीर्थापभ्राजनां तां च, बुद्धैर्दुर्बुद्धिभिः कृताम् । तेऽस्मै निवेदयामासुः, खेदगद्गदया गिरा॥२०५॥ धीरा भवत हे श्राद्धा !, यतिष्ये वः सुतेजसे । इत्युक्त्वोदपतद् व्योम्नि, पक्षिप्रभुरिव प्रभुः ॥२०६॥ क्षणेनाप्यगमद्रुद्धे-श्वरो माहेश्वरीं पुरीम् । तत्रोत्ततार चैकस्मिन्नारामे रमणीयके॥२०७॥ हुताशनाभिधानव्यंतरस्योपवनं तकत् । योऽस्ति चारामिकस्तत्र, मित्रं वज्रपितुः स तु ॥२०८॥ अकस्मादागतं वज्रं, समीक्ष्य तडिताह्वयः । स आरामिक इत्यूचे, रोमांचितवपुर्मुदा ॥२०९॥ मत्पुण्यैः

प्रेर्यमाणस्त्वं, स्वामिन्निह समागमः। तवातिथेः किमातिथ्यं, तदत्र करवाण्यहम्?॥२१०॥ सुमनः! सुमनोभिर्नः, कार्यमस्ति भवांस्तु ताः। प्रदातुमीशिता?ऽसीति, प्रत्यूचे तं पुनः प्रभुः॥२११॥ सोऽप्यूचेऽनुग्रहं धेहि, पुष्पैर्मयि विभोऽन्वहम्। स्युरत्र विंशतिर्लक्षाः, पुष्पाणां स्वाम्यथावदत् ॥२१२॥ प्रगुणीकुरु पुष्पाणि, तावद्यात्रद्विधाय भोः। कार्यांतरमिहायामीत्युक्त्वाऽगाद् हिमवद्गिरिम् ॥२१३॥ तदा च देवपूजार्थमवचित्यैकमंबुजम्। श्रीदेव्या देवतागारं, यांत्या श्रीवज्र ऐक्ष्यत ॥ २१४ ॥ ततोऽवंदत सा वज्रममंदामोदसुंदरा। प्रांजलिः स्माह च स्वामिन्!, समादिश करोमि किम्?॥२१५॥ स्वाम्यूचे पाणिपद्मस्थं, पद्मे! पद्ममिदं मम। अर्पयेत्युदिते साऽपि, तत्तदैवार्पयत् प्रभोः ॥ २१६ ॥ तदादाय ययौ वज्रो, हुताशनगृहं पुनः। विनिर्ममे विमानं च, तीर्थोन्नतिकृते सुधीः ॥२१७॥ तन्मध्येऽस्थापयत् पद्मं, पद्मादेवीसमर्पितम्। विंशतिपुष्पलक्षाणि, तानि तत्पार्श्वतो न्यधात् ॥२१८॥ असार्षीच्च तदा पूर्वसंस्तुतान् जृंभकामरान्। उपातिष्ठन् क्षणात्तेऽपि, श्रीवज्रं वज्रिणं यथा॥२१९॥ ततस्तैस्त्रिदशैः स्वामी, वृतस्तारैरिवोडुपः। आगान्निमेषमात्रेण, तां पुरीं बौद्धदूषिताम् ॥ २२० ॥ आयांतं नभसा वज्रं, सविमानामरैर्वृतम्। संवीक्ष्य सौगताः स्वल्पसंविदः संबभाषिरे ॥२२१॥ अहो सातिशयं कीदृग्?, दृश्यते बौद्धशासनम्। यत्रायांति सुराः साक्षात्तद् बुद्धाय नमो नमः ॥२२२॥ एवं च जल्पतां तेषां, वज्रोऽगाज्जिनसद्मनि। भूयोऽप्यथोचिरे बौद्धा, मषीधौताननाः इव ॥२२३॥ अहो अर्हच्छासनेऽभूदियं दैवी प्रभावना। चिंतितं ह्यन्यथाऽस्माभिर्विधिना त्वन्यथा कृतम् ॥२२४॥ ततोऽकार्युल्लसन्मोदैरर्हदायतनेऽमरैः। स कोऽपि महिमा यो हि, भूस्पृशां गोचरोऽपि न ॥ २२५ ॥ तामामर्त्यकृतां वीक्ष्य, शासनस्य प्रभावनाम्। मर्त्येंद्रस्त्यक्तमिथ्यात्वः, सप्रजोऽप्यार्हतोऽभवत् ॥२२६॥ विहरन्नन्यदा श्रीमान्, सौनंदेयो गुरुर्ययौ। भूर्भुवःस्वस्त्रयस्यापि, दक्षिणो दक्षिणापथम् ॥ २२७ ॥ तत्रापरेद्युर्वज्रर्षेः,

श्लेष्मबाधाऽभवद् भृशम् । ततः शुंठीं समानेतुं, व्रतिनं कंचिदादिशत् ॥२२८॥ तेनानीतां च तां शुंठीं, भुक्त्वा भोक्ष्ये इतिं प्रभुः । न्यधात्कर्णेऽध्यापनादिविवशो व्यस्मरच्च ताम् ॥ २२९ ॥ सायमावश्यके तस्य, मुखवस्त्रिकया वपुः । प्रतिलेखयतः शुंठी, न्यपतत् कर्णमूलतः ॥२३०॥ खाट्कृत्य पतितां तां च, ससार श्रमणाग्रणीः । इदक्प्रमादिनं धिग्मामित्यात्मानं निनिंद च ॥२३१॥ संयमो हिं प्रमत्तस्य, नाकलंकः कथंचन । तद्विना मानुषं जन्म, जन्मिनो हि निरर्थकम् ॥२३२॥ इति स्वामी सनिर्वेदं, संवेगमणिसागरः । दुःखगेहस्य देहस्य, त्यागं कर्तुमचिंतयत् ॥२३३॥ तदानीं विश्वसंहारं, विधातुमिव सोद्यमः । समंततोऽपि दुष्कालो, जज्ञे द्वादशवार्षिकः ॥२३४॥ लक्ष्यमूल्योदनस्थाल्या,यदा भिक्षां त्वमाप्नुयाः । तदा सुभिक्षं जानीयास्तद्द्वितीयदिनादपि ॥२३५॥ स्वशिष्यमनुशिष्यैवं, श्रुतसारविशारदम् । वज्रसेनाख्यमन्यत्र,विहर्तुं प्राहिणोत् प्रभुः ॥२३६॥ युग्मं । विजहार ततः सोऽथ, शिष्या वज्रगुरोः पुनः । नाप्नुवंति क्वचिद्भिक्षां, भ्राम्यंतोऽपि गृहे गृहे ॥२३७॥ ततस्तेभ्यो ददौ सूरिः, पिंडमानीय विद्यया। तेऽप्यूचुर्भगवन् ! इदक्पिंडोऽयं कल्पते न वा ? ॥२३८॥ विद्यापिंडो ह्यकल्प्योऽयं, जगादेति गुरुर्मुनीन् । साधवोऽप्यभ्यधुर्भोज्यः, कियत्कालमयं प्रभो ! ॥२३९॥ स्वाम्यूचे द्वादशाब्दानि, भोज्योऽयं यदि वोऽधिकम् । क्षुद्बाधा बाधते तद्वो, दास्याम्याहृत्य नित्यशः ॥२४०॥ नो चेत्तदा सहान्नेन, त्यागं देहस्य कुर्म्महे । ततस्ते शुद्धचारित्रवर्तिनो व्रतिनोऽभ्यधुः ॥२४१॥ धिक् पोषणमिमं पिण्डं, पिंडपोष्यमिमं च धिग् । स्वामिन् ! प्रसीद येनेदं, त्यजामो द्वितयं वयम् ॥२४२॥ श्रीवज्रर्षिः ऋषीन् सर्वानथादाय गिरिं प्रति । चचाल जातु मुह्यंति, स्वकार्ये सुधियो न हि ॥२४३॥ तत्रैकः क्षुल्लकस्तस्थौ, वार्यमाणोऽपि नो यदा । प्रतार्य तं क्वचिद्ग्रामे, तदाऽऽरोहद्गुरुर्गिरिम् ॥२४४॥ गुरूणां मानसेऽप्रीतिर्मा भूदिति विचिंत्य सः । गिर्यधोऽन्नं च देहं च, व्युत्सृज्यास्थात् समाधिना

॥२४५॥ मध्यंदिनार्कसंतापद्रवीयितशिलातले । विलीनः क्षुल्लको मंक्षु, मृद्गंगो म्रक्षणं यथा ॥२४६॥ सोऽथ योगीव सच्छक्त्या, विहायाग्रेतनीं तनुम् । स्वर्गांतरतनुश्रेयांस्तन्वंतरमशिश्रियत् ॥२४७॥ तस्मिन् जाते द्युमद्ग्रामनयनानयनातिथौ । तस्य विग्रहमानर्चुर्द्यु-मदः प्रोल्लसन्मुदः ॥२४८॥ वीक्ष्याथ सुरसंपातं, श्रीवज्रं साधवोऽभ्यधुः । स्वामिन् ! किमेष गीर्वाणसंपातोऽत्र विलोक्यते ?॥२४९॥ स्वाम्यूचेऽक्षुल्लधीः क्षुल्लः, स्वकार्यमधुनाऽकृत । तत्संपतंत्यमी देवास्तद्देहार्चाविधित्सया॥२५०॥ तच्चाकर्ण्य सकर्णास्ते, दध्युः क्षुल्लोऽप्ययं यदि । स्वकार्यमकरोद् वृद्धा, अपि कुर्मो न किं ततः ? ॥२५१॥ इति संवेगपाथोधिनिमग्नांस्तान् मुनीश्वरान् । तदैव श्रावकीभूय, मिथ्यादृग्देवताऽभ्यधात् ॥२५२॥ भोः पारणदिनं वोऽद्य, तदेतन्मोदकादिकम् । मद्दत्तं प्रतिगृह्णीध्वं, पारणायपिंवारणाः ॥२५३॥ अवग्रहोऽयमेतस्याः, प्रीतये नेति सूरयः । सद्यो नगांतरं जग्मुर्ग्रामांतरमिवाध्वगाः ॥२५४॥ कृत्वा स्वांते च तत्रत्यां, देवतां यतयो न्यधुः । कायोत्सर्गमथागत्य, नत्वा तानित्युवाच सा ॥ २५५ ॥ महाननुग्रहोऽयं मे, यद्भवंत इहागमन् । न जातु जायते रोरसदने स्वर्णवर्षणम् ॥२५६॥ ततस्ते मुनयस्तत्र,पर्वते गुरुणा समम् । विहितानशनाः प्रापुः, स्वःस्त्रीनेत्राब्जसूर्यताम् ॥२५७॥ ज्ञात्वैतच्छैलमिच्छैलं, तमेत्य च रथस्थितः । अपूजयन् मुदापूर्णो, वज्रादीनां तनूस्तदा ॥२५८॥ शक्रः प्रदक्षिणीचक्रे, रथस्थो ह्येव तं गिरिम् । भूरुहाननमयन्नुच्चैर्भक्तिनम्रः स्वदेहवत् ॥२५९॥ तादृक्षा एव तेऽद्यापि, विद्यंते तत्र भूधरे । रथावर्त्त इति ख्याततत्तः सोऽभून्महीतले ॥२६०॥ स्वर्गमीयुषि वज्रर्षौ, भव्याध्वन्याध्वपादपे । व्युच्छिन्नं दशमं पूर्व्वं, तुर्यं संहननं तथा ॥२६१॥ –सोऽथ वज्रगुरोः शिष्यो, वज्रसेनः परिभ्रमन् । मापाद्भुतश्रियाऽपारं, सोपारं नाम पत्तनम् ॥२६२॥ तत्र शत्रुनृपोलूकार्यमाऽभूज्जितशत्रु-गद् । प्रिया च धारिणी तस्य, रोहिणीव हिमद्युतेः ॥२६३॥ तत्रैव जिनदत्ताह्वः, श्राद्ध आसीन्महाधनः । ईश्वरस्तेन तस्यासीदी-

श्वरी नाम वल्लभा ॥२६४॥ तस्मिन् महति दुष्काले, क्षयकाल इवाभवत्। धान्यैर्विनाऽतिदुःस्थं तत्, समस्तं क्षोणिमंडलम् ॥२६५॥ अथेश्वरी निजान् बंधूनित्यूचे कलया गिरा। अद्य यावदिहास्माभिरूर्जितं युधि शूरवत् ॥२६६॥ धान्यं विनाऽधुना त्वेष, दुर्लंघ्यो दुर्दशार्णवः। तद्वरं विषमिश्रान्नमुपभुज्य समाधिना ॥२६७॥ स्मृत्वा पंचनमस्कारं, प्रपद्यानशनं तथा। तनुत्यागं विदध्मोऽथ, मेनिरे तेऽपि तद्गिरम् ॥२६८॥ पक्त्वाऽथ लक्षमूल्यान्नं, यावत् सा नाक्षिपद्विषम्। तावत्तत्राययौ वज्रसेनस्तज्जीवनौषधम् ॥२६९॥ तं निरीक्ष्येति सा दध्यावहो मे पुण्यसंगमः। यदोदनस्य पाकोऽभूत्, प्रादुर्भावोऽतिथेस्तथा॥२७०॥ दत्त्वा तदेतत्पात्राय, श्लाघ्यं जन्म करोम्यदः। चित्तवित्तसुपात्राणां,सामग्री हि सुदुर्लभा॥२७१॥ इति मोदभरापूर्णा, तस्मै भिक्षामदत्त सा। ते लक्षमूल्यपाकस्य, वृत्तांतं च न्यवेदयन् ॥२७२॥ अथोवाच मुनिर्माविभद्रे! मा स्म कृथा इदम्। यस्मान्निस्संशयं प्रातर्भविष्यति सुभिक्षकम् ॥२७३॥ साऽपि तं प्रणिपत्याथ, पप्रच्छातुच्छसंमदा। किं प्रभो! भवता ज्ञातमिदं स्वत उतान्यतः? ॥२७४॥ बभाषे वज्रसेनोऽपि, भद्रे! ज्ञातमिदं मया। श्रीवज्रस्वामिनो ज्ञानोल्लोलकल्लोलिनीपतेः॥२७५॥ इति तद्वाक्यपीयूषमज्जामज्ञाशयेश्वरी। तं वासरं विषावेगमिवाक्षैप्सीद् झगित्यथ ॥२७६॥ द्वितीये चाह्नि सूर्यांशुस्तोमैस्तिमिरपूरवत्। दूरं प्राक्षेपि दुर्भिक्षं, धान्यैः पोतशतागतैः ॥२७७॥ ततश्चाजनि लोकस्य, सुभिक्षे सति सुस्थता। तत्रैव वज्रसेनोऽपि, तस्थिवान् कतिचिद्दिनान् ॥२७८॥ जिनदत्तेश्वरीमुख्या, विमुखा भववासतः। अन्येद्युर्जगृहुर्दीक्षां, वज्रसेनर्षिसंनिधौ ॥ २७९ ॥ एवं शाखाप्रशाखाद्यैः, प्रसरन् वटशाखिवत्। श्रीवज्रस्वामिसंतानो, दृश्यतेऽद्यापि भूतले ॥ २८० ॥ इत्यार्यवज्रस्य कथां निशम्य, भो भव्यलोकाः! सततं यतध्वम्। सद्धर्म्मसाधर्म्मिकवत्सलत्वे, तथोन्नतौ श्रीजिनशासनस्य ॥ २८१ ॥ साधर्म्मिकवात्सल्ये वज्रस्वामिकथा ॥ एवं साधर्म्मिकवात्सल्यं व्यवस्थाप्य यथा

तद्विधेयं तथा सदृष्टांतं पट्सूत्र्याऽऽह—

तम्हा सव्वपयत्तेणं, जो नमुक्कारधारओ । सावओ सोऽवि दट्ठव्वो, जहा परमबंधवो ॥२०१॥
विवायं कलहं चेव, सव्वहा परिवज्जए । साहंमिएहिं सद्धिं तु, जओ एयं वियाहियं ॥२०२॥

जो किर पहणइ साहम्मियंमि कोवेण दंसणमणंमि ।
आसायणं तु सो कुणइ निक्किवो लोगबंधूणं ॥ २०३ ॥

तं अत्थं तं च सामत्थं, तं विन्नाणं सुउत्तमं । साहम्मियाण कज्जंमि, जं विंचंति सुसावया ॥ २०४ ॥

अन्नन्नदेसाण समागयाणं, अन्नन्नजाईइ समुब्भवाणं ।
साहम्मियाणं गुणसुट्ठियाणं, तित्थंकराणं वयणे ठियाणं ॥२०५॥
वत्थन्नपाणासणखाइमेहिं, पुप्फेहि पत्तेहि य पुप्फलेहिं ।
सुसावयाणं करणिज्जमेयं, कयं नु जम्हा भरहाहिवेणं ॥२०६॥

कण्ठ्यः, नवरं नमस्कारधारक इति दर्शनमात्रधारकोऽपि ॥ विवादो—राजकुलादौ पणादिमोचनं, कलहो—राटिकरणं चशब्दात् मुष्ट्यादिभिस्ताडनं च, एतानि तावदन्येनापि सह सुश्राद्धो न विधत्ते, साधर्म्मिकैः पुनः सार्द्धं सर्वथा परिवर्जयेत्, कुत इत्याह—यत एतद्वक्ष्यमाणं पूर्वाचार्यैर्व्याख्यातं—प्रतिपादितमिति ॥ कण्ठ्यः ॥ स एवार्थो—धनधान्यादिसंचयः सुष्ठु—अतिशयेनोत्तमं—प्रधानं, तथा तच्च सामर्थ्यं—प्रभुत्वं शरीरवीर्यं वा, तथा तदेव विज्ञानं—राजकुलादौ विज्ञपनादिनैपुण्यं यत्किंचित् साधर्म्मिकाणां कार्ये व्ययंते—चरितार्थयंति सुश्रावका इति ॥ प्राकृतत्वादन्यान्यदेशेभ्यः सुराष्ट्रमरुमालवाद्यपरापरमंडलेभ्यस्तीर्थयात्राद्यर्थं समागतानां, तथा अन्या-

न्यजातौ-प्राग्वाटपल्लीवालादिवंशे ब्राह्मणक्षत्रियादिकुले वा समुद्भवानां साधर्म्मिकाणां, किंविशिष्टानामित्याह-'गुणे'त्यादि, गुणाः-सम्यक्त्वाणुव्रतादयः क्षांत्यादयश्च तेषु सुष्ठु-अतिशयेन स्थितानां-असद्ग्रहत्यागेन भगवदाज्ञानुपालकानामिति ॥ कण्ठ्यं, नवरं अन्नमिति-दुर्भिक्षादौ धान्यमिति सूत्रषट्कार्थः ॥ भरतचरितं त्विदं-आर्षभिर्भरतस्तेन, तयोश्चरितमुत्तमम्। सत्साधर्म्मिकवात्सल्यप्रस्तावात् किंचिदुच्यते ॥१॥ अत्र प्रत्यग्विदेहेषु, पुरे क्षितिप्रतिष्ठिते। सार्थवाहो धनाख्योऽभूद्, धनी दाता प्रियंवदः ॥२॥ प्रतस्थे सोऽन्यदा ग्रीष्मे, वसंतपुरपत्तनम्। तत्समं धर्मघोषाख्यः, सूरिश्च सपरिच्छदः ॥३॥ अरण्यानीं ततस्तत्र, वर्षारात्रमसौ स्थितः। तत्रर्षिभ्यो गतप्राये, धनो घनमदाद् घृतम् ॥४॥ मृत्वोत्तरकुरुक्षेत्रे, जज्ञे युगलधर्म्मभृत्। त्रिपल्यायुस्ततश्चायं, सौधर्म्मे त्रिदशोऽभवत् ॥५॥ अथापरविदेहेऽस्ति, विजयो गंधिलावती। तत्र वैताढ्यभूमीध्रे, गंधाराख्ये च नीवृति ॥६॥ पुरे गंधसमृद्धेऽतिबलपुत्रो नृपोऽभवत्। नाम्ना शतबलस्तस्य, चंद्रकांता च वल्लभा ॥७॥ धनजीवस्ततश्च्युत्वा, तत्कुक्षौ नंदनोऽजनि। महाबलनृपस्तस्य, प्रिया विनयवत्यभूत् ॥८॥ सचिवौ तु स्वयंबुद्धसंभिन्नश्रोतआह्वयौ। आद्योऽन्यदा नृपं प्राह, प्रेक्षणेक्षणतत्परम् ॥९॥ सर्वं विलपितं गीतं, सर्वं नाट्यं विडंबना। भाराः सर्व्वेऽप्यलंकाराः, सर्वे कामाश्च दुःखदाः ॥१०॥ एवं विमृश्य त्यक्त्वैतत्, परलोकसुखावहम्। विधेहि देव! सद्धर्म्मं, तमथो नृपतिर्जगौ ॥११॥ त्याजयन्नैहिकं प्राप्तं, सुखमामुष्मिकं दिशन्। संदिग्धं हंत मे नित्यं, हितैषी कथ्यसे कथम्? ॥१२॥ द्वितीयो मंत्र्युवाचैवं, देवायं सचिवो ननु। शोचिष्यति चिरं मांसत्यागिमीनैषिफेरुवत् ॥१३॥ स्वयंबुद्धोऽभ्यधाद् भद्र!, तुच्छसौख्यकृते कृती। कस्ते वचः प्रपद्येत, संसारानित्यतां विदन्? ॥१४॥ पुनः स प्राह भाव्येव, मृत्युश्चेत्किं पुराऽपि हि। खेयं पितृवने किंच, टिट्टीभीवासि यत्नकृत् ॥१५॥ स्वयंबुद्धोऽब्रवीन्मुग्ध!, लग्ने युद्धे न शक्यते।

दमनं दन्तिनां कूपखननं च प्रदीपने ॥१६॥ अन्यद्विषयगृध्नूनां, दुःखमत्र परत्र च। काकाख्यानकमाख्यासीत्, करिकायोपलक्षितम् ॥१७। संभिन्नश्रोत! एवं यो, ज्ञात्वा कामान् विमुच्य च। चरिष्यति तपस्तीव्रं, शोचिष्यति न च क्वचित् ॥१८॥ यः पुनर्विषयाकांक्षी, मृत्युकालानपेक्षकः। स जंबुक इवाविज्ञो, भावी दुःखैकभाजनम् ॥ १९ ॥ वने वनचरः कश्चिच्छरेणैकेन कुंजरम्। व्यापाद्यादित्सुरेपोऽपि, तदन्तादीनथोद्यतः ॥ २० ॥ विमुच्यारोपितं चापं, गृहीत्वा च परश्वधम्। असौ पतद्द्विपाक्रांतसर्प्पदष्टो मृतस्ततः ॥२१॥ दृष्ट्वा तत्रागतः क्रोष्ट्रा, हृष्टो दध्याविदं हृदि। सर्प्पः पुमानिभो भावी, भक्ष्यं मे जीवितावधिः ॥२२॥ ज्याबंधानधुनाऽद्मीति, ध्यात्वा तानेष भक्षयन्। त्रुटन्मौर्व्या धनुष्कोट्या, तालुदेशे हतो मृतः ॥ २३ ॥ एवं ज्याबंधवत् तुच्छे, सक्तो मानुष्यके सुखे। न पश्यत्यायतिं यस्तु, स क्रोष्टेव विनंक्ष्यति ॥२४॥ अथोचे नृपतिर्मंत्रिन्!, परलोकोऽस्ति किं ननु?। स्वयंबुद्धोऽप्यभाषिष्ट, बाढं शिष्टाग्रणीः शृणु ॥२५॥ यदावां देव! बालत्वे, वनेऽगच्छाव नंदने। तत्रातिबलराड्जीवोऽवदत्त्वां लांतकाधिपः ॥२६॥ स ते पितामहस्त्यक्त्वा, राज्यं प्रव्रज्य लांतके। इंद्रोऽभूवं ततो वत्स!, धर्म्मे मा भूः श्लथाशयः ॥ २७ ॥ इत्युक्त्वा स तिरोऽधत्त, तत्ते किं नाथ! विस्मृतम्। राज्ञोचे नेत्यथो लब्धावकाशः सोऽब्रवीदिदम् ॥२८॥ युष्मद्वंशे पुरा जज्ञे, नास्तिकः कुरुचंद्रराट्। प्रिया कुरुमती तस्य, हरिश्चंद्रश्च नंदनः ॥२९॥ कुरुचंद्रो महापापतत्परोऽपूरयद्भवम्। सर्वेन्द्रियविपर्यासात्, पंचत्वं प्राप दुःखितः ॥३०॥ हरिश्चंद्रस्य सद्दृष्टिः, सुबुद्धिर्धर्म्ममंत्र्यभूत्। सोऽथर्षेः केवलाभ्यर्चा, दृष्ट्वा राज्ञे न्यवेदयत् ॥३१॥ गत्वा नत्वा ततो भूपस्तमप्राक्षीत् पितुर्गतिम्। केवली कथयामास, सप्तमीं नरकावनीम् ॥३२॥ ततो मंत्रियुतो राजा, स प्राज्य ययौ शिवम्। असंख्येषु नृपेष्वेवं, गतेषु त्वमभूर्नृपः ॥३३॥ तथा सुबुद्धिवंशेऽहमभूवं धर्म्मधीसखः। ततो निजनियोगत्वादेवं विज्ञप्यसे मया ॥३४॥

विज्ञप्तं यत्त्वकाले तु, तत्रेदं शृणु कारणम् । गतोऽहं नंदनोद्यानेऽद्याद्राक्षं चारणौ मुनी ॥३५॥ वंदित्वा भवदायुष्कं, तौ पृष्टाविदमूचतुः । मासमेकं ततोऽभ्येत्य, राजन्नेवं व्यजिज्ञपम् ॥३६॥ श्रुत्वेत्येष विलीनो द्राक्, पयःपूर्णामकुंभवत् । कृतांजलिरथोत्थाय, स्वयंबुद्धमदोऽवदत् ॥३७॥ स्वल्पायुः किं करिष्येऽहं, मंत्र्यूचे मा विषीद यत् । साम्यभाजां क्षणेनापि, क्षीयते कर्म्मसंचयः ॥३८॥ चैत्येष्वष्टाह्निकां कृत्वा, स सिद्धायतने नृपः । संस्तारकव्रतिर्भूत्वाऽनशनं प्रत्यपद्यत ॥३९॥ द्वाविंशतिदिनांतेऽसौ, विपद्य त्रिदशोऽजनि । ईशाने ललितांगाख्यो, विमाने श्रीप्रभाभिधे ॥४०॥ स्वयंबुद्धोऽपि निष्क्रम्य, मृत्वेशाने सुरोऽभवत् । च्युता स्वयंप्रभादेवी, ललितांगप्रियाऽन्यदा ॥४१॥ दृष्ट्वा तं तद्वियोगार्त्तं, जीवस्तस्यैव मंत्रिणः । उवाच शृणु वृत्तांतं, त्वत्कार्यं येन सिध्यति ॥४२॥ द्वीपेऽत्र धातकीखंडे, मेरोः पूर्वविदेहजे । विजये मंगलावत्यां, नंदिग्रामोऽस्ति नंदिभाक् ॥४३॥ नागिलाख्यो गृहपतिस्तत्राभूत्तस्य गेहिनी । नागश्रीरिति तस्यास्तु, जज्ञिरे सप्त पुत्रिकाः ॥४४॥ सुलक्षणा सुमंगला, धन्निका चोज्झितादयः । षडेता सप्तमी निर्नामिकेत्यकृतनामिका ॥४५॥ साऽन्यदा बालकानन्यान्, वीक्ष्य कस्मिंश्चिदुत्सवे । भक्ष्यहस्तान् स्वयं भक्ष्यकामाऽयाचत मातरम् ॥४६॥ तया दुर्गतया क्रोधे, ताडयित्वा चपेटया । गत्वाऽम्बरतिलकेऽद्रौ, फलान्यद्धि म्रियस्व वा ॥४७॥ निर्नामिका ततो गेहात्, तत्राद्रौ रुदती ययौ । तदा युगंधराचार्यस्तत्रैव समवासरत् ॥४८॥ चतुर्ज्ञानी महात्माऽसौ, समस्तश्रुतकेवली । तं नंतुं ग्रामतो लोकः, प्रभूतो याति तत्क्षणात् ॥४९॥ तं दृष्ट्वा साऽगमत्तत्र, नत्वा पृष्टवती गुरुम् । जगद्बंधो! जगत्यस्मिन्, किं मत्तः कोऽपि दुःखितः ? ॥५०॥ सूरिरूचे सुदुःखार्त्ता, दूरे ते श्वभ्रवासिनः । पश्याध्यक्षं नृतिर्यक्षु, दुःखं वाचामगोचरम् ॥५१॥ तत्र नृणां वियोगादिव्याधिबंधवधादिकम् । तिरश्चां तु बुभुक्षातृट्शीतवातातपादिकम् ॥५२॥ दुःखं कुतस्ते धर्म्मं तु, कुरु सर्वसुखावहम् । श्रुत्वेति

गृहिधर्म्मं सा, गृहीत्वा सुचिरं व्यधात् ॥५३॥ अधुनाऽनशनं कृत्वा, सा तत्रास्ति त्वदीक्षणात् । निदानेन विपद्यासौ, पत्नी तव भविष्यति ॥५४॥ तथैव विहिते तेन, तस्य साऽभूत् स्वयंप्रभा । सुखांभोनिधिमग्नोऽसौ, ततः स्वायुरपूरयत् ॥५५॥ जंबूद्वीपेऽस्ति मेरोः प्राग्, विजयः पुष्कलावती । पुरं लोहार्गलं तत्र, स्वर्णजंघोऽस्ति भूपतिः ॥ ५६ ॥ प्रिया लक्ष्मीवती तस्य, तत्कुक्षौ स ततश्च्युतः । पुत्रत्वेन समुत्पद्य, वज्रजंघोऽभवन्नृपः ॥५७॥ च्युत्वा निर्नामिकाजीवस्तत्रैव विजये पुनः । नगर्यां पुंडरीकिण्यां, वज्रसेनस्य ! चक्रिणः ॥५८॥ पत्न्यां गुणवतीनाम्न्यां, श्रीमतीत्यभिधा सुता । देवसंपातमालोक्य, जातिस्मृतिपराऽभवत् ॥५९॥ सोचे पूर्वं पतिं मुक्त्वा, परिणेष्यामि नेतरम् । ततस्तच्चरितं तां तु, दृष्ट्वा धात्री पटेऽलिखत् ॥६०॥ राज्ञामदर्शयच्चक्रिवर्षग्रंथौ समेयुषाम् । तद् दृष्ट्वा वज्रजंघोऽपि, जातिस्मृत्याऽवदत् स्फुटम् ॥६१॥ चक्रिणाऽथ स सत्कृत्य, श्रीमत्या परिणायितः । विसृष्टः श्रीमतीयुक्तो, ययौ लोहार्गलं पुरम् ॥६२॥ प्राव्राजीद्वज्रसेनोऽथ, राज्यं न्यस्य जिनोऽन्यदा । सुते पुष्कलपालाख्ये, सोऽन्यदा द्विषतां भयात् ॥६३॥ आजूहवत् स्वसूपतिं, सप्रियं नगरे स्वके । सुतं संस्थाप्य सोऽचालीदंतःशरवणाध्वना ॥६४॥ बभाषेऽथ जनोऽत्रास्ति, दृग्विषाहिकुलं किल । ततः सोऽगात् पथाऽन्येन, नगरीं पुंडरीकिणीम् ॥६५॥ अरातयस्ततोऽनेशन्नसौ श्यालेन सत्कृतः । वासरान् कतिचित्तत्र, स्थित्वा वज्रो न्यवर्त्तत ॥६६॥ जनोऽवोचच्छरवणे, मुनेरेकस्य केवलम् । जज्ञे तत्रामरोद्योताद्, बभूवुस्तेऽहयोऽविषाः ॥६७॥ ऋजुनैव पथा राज्ञा, गच्छताऽथ निजानुजौ । मुनिः सागरसेनाख्यो, मुनिसेनश्च वीक्षितौ ॥६८॥ सप्रियेण प्रणत्यैतौ, भक्ताद्यैः प्रतिलंभितौ । धन्यंमन्यस्ततो राजा, राज्ञी चागान्निजं पुरम् ॥६९॥ पुत्रेण विषधूमेन, राज्यलुब्धेन तौ हतौ । मृत्वोत्तरकुरुक्षेत्रेऽभूतां युगलधर्म्मिणौ ॥ ७० ॥ ततो देवौ च सौधर्म्मे, त्रिपल्योपमजीवितौ । च्युत्वाऽथ वज्रजंघस्य, जीवः पूर्व-

विदेहगे ॥७१॥ वच्छावत्याख्यविजये, पुरी याऽस्ति प्रभंकरा। तस्यां सुविधिसद्वैद्योऽभयघोषाभिधोऽभवत् ॥७२॥ (ग्रंथाग्रं ७५००) जज्ञिरे चास्य राड्मंत्रिसार्थेशश्रेष्ठिनां सुताः ।वयस्याः श्रीमतीजीवः, केशवाख्यसुवर्णिकृत्तः ॥७३॥ ते पंचाप्यन्यदा वैद्यसद्मस्थाः कुष्ठिनं मुनिम् । वीक्ष्य मित्रमभाषंत, युष्माभिर्भक्ष्यते जनः ॥७४॥ न कस्यचित्तपस्व्यादेश्चिकित्सा क्रियते किल । स प्राह क्रियते किंतु, भेषजानि न संति मे ॥ ७५ ॥ ते प्रोचुर्दद्महे मूल्यं, शाधि साध्वौषधानि नः । सोऽब्रवीत् कंबलीरत्नं, तथा गोशीर्षचंदनम् ॥७६॥ लक्षद्वयेन तत् क्रेयं,तृतीयं तु मदोकसि । विद्यते लक्षपाकाख्यं,तैलं तद् गृह्यतां पुनः॥७७॥ लक्षद्वयं गृहीत्वाऽथ,तेऽप्ययुः कुत्रिकापणे ।.अयाचंतौषधे तांस्तु, श्रेष्ठ्यूचे किं प्रयोजनम् ? ॥७८॥ तेऽवोचन् कुष्ठिनः साधोश्चिकित्साऽऽभ्यां विधास्यते । सोऽवोचज्जातसंवेगो, गृह्यतामौषधे मुधा॥७९॥ ते दत्त्वा व्रतमादाय, स श्रेष्ठी शिवमीयिवान् । वयस्यास्ते तु सामग्रीं, कृत्वाऽयुः साधुसन्निधौ ॥८०॥ नत्वाऽनुज्ञाप्य तैलेन, सर्वांगं म्रक्षितः स तैः । वेष्टितः कंबलेनाथ, निरीयुः कृमयस्ततः ॥ ८१ ॥ शीतत्वात्तत्र ते लग्ना, निर्यद्भिस्तैस्तु पीडितः । लिप्तश्च चंदनेनाशु, पुनः स्वस्थो बभूव सः ॥८२॥ त्रिरेवमाद्यवेलायां, निर्गताः कृमयस्त्वचः । मांसगास्तु द्वितीयस्यां, तृतीयस्यां च तेऽस्थिगाः ॥८३॥ कृपालवः कृमींस्तांस्ते, चिक्षिपुर्गोकलेवरे । संरोहण्या च तं साधुं, सज्जीचक्रुश्च तत्क्षणात् ॥८४॥ क्षमयित्वा च नत्वा च, गत्वा च नगरं ततः । चैत्यं चक्रुश्च विक्रीय, तेऽर्धमूल्येन कंबलम् ॥ ८५ ॥ गृहीत्वा गृहिधर्म्मं ते, पश्चात्कृत्वा च संयमम् । ते षडप्यच्युतेऽभूवन्निंद्रसामानिकाः सुराः ॥८६॥ द्वीपेऽत्र प्राग्विदेहेषु, विजयः पुष्कलावती । समस्ति श्रीनिवासौकस्तत्र पूः पुंडरीकिणी ॥८७॥ वज्रसेनो नृपस्तत्र, धारिणी तस्य वल्लभा । तत्कुक्षौ वैद्यजीवः स, पूर्वं च्युत्वा सुतोऽभवत् ॥८८॥ स चक्री वज्रनाभाख्य, इतरेऽपि ततश्च्युताः । बभूवुरनुजास्तस्य, चत्वारोऽपि क्रमादमी ॥ ८९ ॥ बाहुः

सुबाहुः पीठोऽथ, महापीठाभिधस्तथा। षष्ठो निर्नामिकाजीवः,सारथिश्चक्रिणस्त्वभूत् ॥९०॥ वज्रसेनो जिनो राज्यं, न्यस्य ज्येष्ठसुते व्रतम् । जग्राह ते तु सर्वेऽपि, भोगान् बुभुजिरे वरान् ॥९१॥ वज्रसेनस्य यत्राह्नि, जिनस्याजनि केवलम् । उत्पेदे वज्रनाभस्य, चक्रं तत्राह्नि चक्रिणः ॥ ९२ ॥ तेऽन्यदा तु पितुः पार्श्वे, जगृहुः षडपि व्रतम् । तत्राद्यो द्वादशांगीभृत्, शेषा एकादशांगिनः ॥९३॥ साधूनां भक्तपानाद्यैर्व्यधाद् बाहुरुपग्रहम् । विश्रामणं सुबाहुस्तु, गुरुस्तानन्वमोदत ॥९४॥ ततः पीठमहापीठौ, चक्राते(ऽ)प्रीतिकं गुरौ । विंशत्या कारणैस्त्वाद्यस्तीर्थकृत्त्वमुपार्जयत् ॥९५॥ भोगानुपार्जयद् बाहुः, सुबाहुर्बाहुजं बलम् । स्त्रीत्वं पीठमहापीठावर्जेतां मायया तया ॥९६॥ कालस्त्रिंशत्कुमारत्वे, मंडलित्वे च षोडश । चक्रित्वे पूर्वलक्षाणां, विंशतिश्चतुरन्विता ॥९७॥ व्रते तु वज्रनाभस्य, पूर्वलक्षाश्चतुर्दश । सर्वायुः पूर्वलक्षाणामशीतिश्चतुरर्गला ॥९८॥ आराधनाविधानेन, मृत्वा सर्वेऽपि जज्ञिरे । देवाः सर्वार्थसिद्धाख्ये, विमाने प्रवरर्द्धिके ॥ ९९ ॥ भरतेऽत्रावसर्प्पिण्यां, नाभिः कुलकरोऽतिमः । तृतीयारकपर्यंते, जज्ञे तस्य प्रिया पुनः ॥१००॥ मरुदेवीति तत्कुक्षौ,शुक्तौ मुक्तामणिर्यथा । शुचौ कृष्णचतुर्थ्यां तु, वैश्वीनक्षत्रगे विधौ ॥१०१॥ स जीवो वज्रनाभस्य, पुत्रत्वेन ततश्च्युतः । चतुर्दशमहास्वप्नसूचितः समवातरत् ॥१०२॥ शक्रस्तत्रैत्य नत्वांबामूचे भावी सुतस्तव । आद्योऽर्हन् केऽपि व्याख्यांति, शक्रा द्वात्रिंशदाययुः ॥१०३॥ वैश्व्यां चैत्रासिताष्टम्यां, परिपूर्णदिनेष्वथ । वृषांकं स्वर्णवर्णं च, निशीथेऽसूत सा सुतम् ॥१०४॥ विधिवद्दिक्कुमारीभिः,सूतिकर्म्मणि निर्म्मिते । मेरौ जन्ममहश्चक्रे,सचेंद्रैः प्रथमार्हतः ॥१०५॥ नाभिर्वृषभ इत्याख्यां, व्यधात् प्रातः प्रमोमुदा । शक्रश्च वर्षजातेऽस्येक्ष्वाकुवंशव्यवस्थितिम्॥१०६॥ स्वामिना सह संजाता, कन्या चैका सुमंगला। अकाले च मृतस्यान्या, सुनंदा त्वन्ययुग्मिनः ॥१०७॥ शक्रेण वृषभस्वामी, समयेऽथ विवाहितः । सार्द्धं ताभ्यां कुमारीभ्यां, विवाह-

स्थितिहेतवे ॥१०८॥ षट्पूर्वलक्षजातस्याभूवन् पत्न्योस्तयोः प्रभोः । बाह्वादयस्ततश्च्युत्वा, चत्वारोऽपि क्रमादमी ॥१०९॥ युग्मे भरतब्राह्म्यौ बाहुबली सुंदरीति च । आद्यास्ततः सुतयुग्मैकोनपंचाशतं पुनः ॥११०॥ गतेषु पूर्वलक्षेषु, विंशतौ जन्मतः प्रभोः। महर्ध्या देवराजेन, चक्रे राज्याभिषेचनम् ॥१११॥ विनीतां नगरीं शक्रः, कुबेरेण न्यवेशयत्। स्वामी शिल्पकलादीनि, भरताद्यानशिक्षयत् ॥११२॥ त्रिषष्टिपूर्वलक्षाणि, राज्यं कृत्वा जगत्पतिः । न्यस्य पुत्रशतं राज्ये, दत्त्वा दानं च वार्षिकम् ॥११३॥ वैश्र्व्यां चैत्रासिताष्टम्यामपराह्णे सुदर्शनाम् । आरुह्य शिबिकां गत्वोद्याने सिद्धार्थनामनि ॥११४॥ कृत्वा लोचं चतुर्मुष्टिं, सहस्रै राजभिः समम् । चतुःसंख्यैः प्रवव्राज, कृतषष्ठतपाः प्रभुः ॥११५॥ सोऽथ निर्नामिकाजीवश्च्युत्वा सर्वार्थसिद्धितः। पुत्रः सोमप्रभाख्यस्य,बाहुबल्यात्मजस्य सः ॥११६॥ पुरे गजपुरे जज्ञे, श्रेयांसो नाम तेन च । अकारीक्षुरसेणैष, वर्षांते पारणं प्रभुः ॥११७॥ स्वामी तक्षशिलां गत्वा, यत्रावात् प्रतिमां निशि । रात्रं बाहुबली तत्र, धर्म्मचक्रं व्यधात् प्रगे ॥११८॥ आयानार्येषु मौनेन, विहृत्याब्दसहकम् । पुरे पुरिमतालाख्ये, ययौ स्वामी समाहितः ॥११९॥ उद्याने तत्र शकटमुखे वटतरोरधः । जन्मर्क्षे फाल्गुने कृष्णैकादश्यां परमेश्वरः ॥१२०॥ पूर्वाह्णेऽष्टमभक्तेन, केवलज्ञानमासदत्। महिमानं ततश्चक्रुः, सर्वे देवासुरादयः ।'१२१॥ भरतस्यायुधागारे,चक्ररत्नं तदाऽजनि । युगपत्केवलं तच्च, राज्ञे पुंभिर्निवेदितम् ॥१२२॥ अचिंतयत्ततो राजा, किं पूज्यं प्रथमं मया ?। क्षणान्निर्णीतवांस्तातः, पूज्यः प्रेत्य सुखावहः ॥१२३॥ रुदंतीं पुत्रशोकेन, नीलीच्छन्नदृशं ततः । सिंधुरस्कंधमारोप्य, मरुदेवीं स्वयं नृपः ॥१२४॥ जिनं नंतुं व्रजन्नूचे, मातः! पश्य श्रियं प्रभोः। अनन्यसदृशीं देवासुराणामपि दुर्लभाम् ॥१२५॥ हर्षाश्रुप्रगलच्छाया, सा पश्यंती प्रभोः श्रियम् । क्षणात् कर्म्मक्षयं कृत्वा, निर्वृता शुभभावतः ॥१२६॥ ततः प्रथमसिद्धोऽयमित्यभ्यर्च्य कलेवरम् । तस्याः क्षीर-

महांभोधौ, चिक्षिपेऽनिमिषैर्मुदा ॥१२७॥ अभ्रच्छायातपाभ्यां हि, शरत्काल इव क्षणात् । नृपो हर्षविषादाभ्यां, युगपत् सस्वजे-तराम् ॥१२८॥ ततः समवसृत्यंतर्गत्वा नत्वा जगद्गुरुम् । निषद्य च यथास्थानमश्रौषीद् देशनामिति ॥१२९॥ "जीवाः सुखैषिणः सर्वे, तन्मोक्षे मुख्यमक्षयम् । स च ज्ञानक्रियाभ्यां हि, यतध्वं तत्र सज्जनाः ! ॥१३०॥" श्रुत्वेमां देशनां भर्त्तुः, प्रावाजीद्भरतात्मजः । पुंडरीकस्तथाऽन्येऽपि, भूयांसः साधवोऽभवन् ॥१३१॥ साध्व्यो ब्राह्म्यादिकाः श्राद्धा, भरताद्यास्तु सुंदरी । व्रताय तेन नो मुक्ता, तदाद्याः श्राविकास्ततः ॥१३२॥ विधायेत्यादिमं संघं, विजह्रेऽन्यत्र तीर्थकृत् । भरतस्तु गृहं गत्वा, चक्रमानर्च कृत्यवित् ॥१३३॥ तत्पूर्वाभिमुखं गत्वा, योजनांते स्थितिं व्यधात् । योजनप्रमितिर्जज्ञे, ततो भरतभूतले ॥ १३४ ॥ चतुरंगचमूयुक्तो, भरतस्तदनु व्रजन् । मागधं तीर्थमासाद्य, ततश्चक्रेऽष्टमं तपः ॥१३५॥ रथेनैत्यांबुधौ चक्रनाभिदघ्नपयोऽवधिम् । स्वाख्यांकमिषुमक्षैप्सीन्, मागधाधिपतिं प्रति ॥१३६॥ स पपात पुरस्तस्य, गत्वा द्वादशयोजनीम् । चुकोप सोऽपि तं प्रेक्ष्याशाम्यन्नाम निरीक्ष्य च ॥१३७॥ शरं हारं किरीटं च, चूडारत्नं च कुंडले । कटके च गृहीत्वैत्य, नत्वोवाचेति चक्रिणम् ॥१३८॥ अहं ते पूर्वदिक्पालः, सदैवाज्ञाविधायकः । सत्कृत्य तं विसृज्याथ, भरतोऽष्टाह्निकां व्यधात् ॥१३९॥ तथैव वरदामानं, गत्वा प्राच्यां वशे कृते । राज्ञे सोऽपि कटीसूत्रं, ददौ ग्रैवेयकादि च ॥१४०॥ प्रभासमपरस्यां तु, मुक्तामालादि सोऽप्यदात् । ततोऽप्यसाधयत्सिंधुं, सा कुंभाष्टसहस्रकम् ॥१४१॥ अदाद्रात्नं ततः प्राप, वैताढ्योपत्यकं नृपः । धीमानसाधयत्तत्र, वैताढ्याद्रिकुमारकम् ॥१४२॥ कृतमालं तमिश्राख्यगुहेशं चाथ सोऽप्यदात् । दिव्यं स्त्रीरत्नयोग्यं तु, सर्वालंकारमप्यथ ॥१४३॥ सुषेणो नाम सेनानीः, सिंधुमुत्तीर्य चर्म्मणा । सैन्यार्द्धयुगपाच्यं सोऽसाधयत् सिंधुनिष्कुटम् ॥१४४॥ सोऽश्वरत्नस्थितो दंडरत्नेन त्रिरताडयत् । तमिश्रायाः कपाटे तत्स्वामी ते

उदघाटयत् ॥१४५॥ षण्मासीं तु प्रतीक्ष्याथ, हस्तिरत्नस्थितो नृपः। गुहांतः प्राविशत् कुर्वंनुद्योतं मणिरत्नतः ॥१४६॥ काकण्यै-कोनपंचाशत्तद्भित्त्योर्मंडलानि च। धनुःपंचशतीमानान्यालिलेख क्षितीश्वरः ॥१४७॥ तत्रोन्मग्नानिमग्नाख्ये, नद्यावुत्तीर्य पद्यया। कृतया सूत्रधारेण, गुहाया निर्ययौ ततः ॥१४८॥ चिलातैश्चक्रिसेनान्या, युद्धे भग्नैः स्वदेवता। स्मृता मेघमुखाश्चक्रिसैन्येऽथ ववृ-षुर्भृशम् ॥१४९॥ चतुरंगचमूं चक्रं, चक्री चक्रेऽथ चर्म्मणि। उपरिष्टाच्छत्ररत्नं च, तन्मूले च मणिं व्यधात् ॥१५०॥ लूयंते चात्र मध्याह्ने, प्रातरुप्तास्तु शालयः। लोके ब्रह्मांडसंज्ञं तत्सप्तरात्रमवस्थितम् ॥१५१॥ ततो मेघमुखा देवा, भग्नाश्चक्र्याभियोगिकैः। भृत्य-भावं ततो भेजुर्म्लेच्छास्ते भरतेशितुः ॥१५२॥ गिरौ हिमवति क्षुद्रे, गत्वा राट् शरमक्षिपत्। सोऽप्यूर्द्ध्वं योजनानां तु, द्वासप्ततिम-गाच्छरः ॥१५३॥ मागधाधिपवत् कृत्वा, तद्गिरीशं वशंवदम्। चक्री स्वरथतुंडेन, तमद्रिं त्रिरताडयत् ॥१५४॥ काकिण्यर्षभकूटाद्रौ, लिलेखाथ स्वनाम सः। असाधयच्च सेनानीरुदीच्यां सिंधुनिष्कुटम् ॥१५५॥ गंगां चासाधयत्तां च, बुभुजेऽब्दसहस्रकम्। असा-धयत् सुषेणोऽथ, गंगानिष्कुटमुत्तरम् ॥१५६॥ वैताढ्ये खेचराधीशौ, नमी च विनमी तथा। द्वादशाब्द्या जितौ राज्ञा, खड्गरत्नभृता ततः ॥१५७॥ नमी रत्नान्यदादन्यः, स्त्रीरत्नमथ राड् व्यधात्। वश्यं खंडप्रपाताख्यं, गुहेशं नाट्यमालिनम् ॥१५८॥ प्राग्वदुद्घा-टितद्वारा, निर्गत्य गुहया तया। असाधयन्निधीन् गंगामूलस्थान् स नवाप्यमून् ॥१५९॥ नैसर्प्पः१ पांडुक२ श्चैव, पिंगलः३ सर्व-रत्नकः४। महापद्मश्च५ कालश्च६, महाकालश्च७ मानवः८ ॥१६०॥ शंखस्थिताश्च९ ते यक्षसहस्रेण पृथक् पृथक्। क्रमात्तेषु भवन्त्ये-तच्चक्रिपुण्यप्रभावतः ॥१६१॥ निवेशो नगरादीनां १, धान्यमानधनोद्भवः २। नृतिर्यग्भूषणविधि३ श्चक्रिरत्नोद्भवस्तथा४ ॥१६२॥ वस्त्रोत्पत्तिश्च५ कालस्य,ज्ञानं६ स्वर्णादिकोद्भवः७। शुद्धा नीतिप्रसूतिश्च८, काव्यनाटकयोर्विधिः९ ॥१६३॥ तेऽष्टचक्रप्रतिष्ठा योजनानि

द्वादशायताः । अष्टोच्चा नवविस्तीर्णा, मंजूषाकारधारिणः ॥१६४॥ सुषेणोऽप्यजयद्गंगानिष्कुटं दाक्षिणात्यकम् । भरतोऽसाधयत् षष्ट्यब्दसहस्र्येति भारतम् ॥१६५॥ न्यस्तकृत्यो गृहपतौ, कृतशांतिः पुरोधसा । राजन् राजा महर्ध्याऽसौ, विनीतामाययौ पुरीम् ॥१६६॥ चक्रे राज्याभिषेकोऽस्य, राजभिर्द्वादशाब्दिकः । चक्री स्वौकस्ततो गत्वा, ज्ञातिवर्गं व्यलोकत ॥१६७॥ अथ सा सुंदरी दीक्षानिषेधाद्दः प्रभृत्यपि । आचाम्लानि व्यधान्नित्यमुक्त्वा मुक्तौ महामनाः ॥१६८॥ तपःपरां कृशांगीं तां, वीक्ष्योचे प्रव्रजिष्यसि । किं स्वसः ? साऽब्रवीद् बाढं, ततस्तां भरतोऽमुचत् ॥१६९॥ तदा च समवासार्षीदृषभोऽष्टापदाचले । गत्वा सा तत्र जग्राह, व्रतं तीर्थकृदंतिके ॥१७०॥ राजा दूतमुखेनाख्यत्, सौदर्यास्तांल्लघूनिति । सेवध्वं मां मया सार्द्धं, युध्यध्वं वाऽधुना ध्रुवम् ॥१७१॥ कुमारास्तेऽपि गत्वाऽऽशु, नत्वा तातं बभाषिरे । युष्मद्दत्तानि राज्यानि, लात्यसौ किमु कुर्म्महे ? ॥१७२॥ (ग्रंथाग्रं । ६८००) स्वाम्यथोवाच हे वत्सा !, या वांछा विषयेषु वः । न च्छिन्ना स्वःसुखैः सा हि, च्छेत्स्यते नृसुखैः कथम् ? ॥१७३॥ अत्रार्थेऽचीकथन्नाथः, कथामांगारदाहिकीम् । वैतालिकं च ते श्रुत्वाऽध्ययनं शिश्रियुर्व्रतम् ॥१७४॥ प्रैषीद् दूतमथो बाहुबलिने भरतः स तु । गत्वा नत्वेत्यभाषिष्ट, स्पष्टवाक् भरतानुजम् ॥१७५॥ भरतो भरतक्षेत्रे, विभुरद्वैतवैभवः । कल्पद्रुः सेवकानां यो, द्विषां महिषवाहनः ॥१७६॥ ज्येष्ठो भ्राता जगज्ज्येष्ठ !, सर्वत्राप्यौचितीचणः । तदसौ सेव्यतां स्वामिंस्ततो बाहुबलिर्जगौ ॥१७७॥ सेवकानामसौ कर्तुमलं पुण्याद्दतेऽपि किम् ? । जिताश्वानेन केऽमित्रा, अजय्ये मय्यनिर्जिते ? ॥१७८॥ राजाऽधमौचितीचंचुर्दीक्षयन्ननुजानहो । ज्ञास्यते युधि लग्नेऽन्यदित्युक्त्वा तं व्यसर्जयत् ॥१७९॥ ततश्च भरतः सर्वसामग्रीसहितोऽचलत् । सौनंदेयोऽपि तं ज्ञात्वा, भरतायाभ्यषेणयत् ॥१८०॥ संग्रामसमये तूक्तौ, सुरविद्याधरैरिमौ । युवां ननु महात्मानौ, युध्येथां दृग्युधादिभिः ॥१८१॥ आमेत्युक्ते ततश्चक्री, विजिग्ये दृष्टिसंयता ।

वाग्बाहुमुष्टिदंडैश्च, सौनंदेयेन लीलया ॥१८२॥ ततश्चितातुरश्चक्री, चक्रं सस्मार तत्करे। आगाद् बाहुबली तं च, दृष्ट्वोचे चक्रिणं क्रुधा ॥१८३॥ धिक् त्वां भ्रष्टाश्रवः किं च, सचक्रं चूरयामि मे। किंत्वेभिर्भोगसंयोगैरीदृग्भिर्दारुणैः कृतम् ॥१८४॥ इत्युक्त्वा प्राव्रजत् सोऽथ, भरतस्तमवर्षयत्। न्यस्य सोमप्रभं तस्य, राज्येऽसौ स्वां पुरीमगात् ॥१८५॥ दध्यौ बाहुबली मानाद्वंदिष्येऽहं कथं लघून्। बंधुर्बंधुसुतादींश्च, प्रभुपार्श्वे स्थितान् मुनीन्? ॥१८६॥ केवलार्थी ततस्तत्र, तस्थौ प्रतिमया च सः। वर्षांते प्राहिणोद् ब्राह्मीं, सुंदरीं च जगद्विभुः ॥१८७॥ तृणवल्ल्यादिभिर्व्याप्तं, ते तं दृष्ट्वेत्यवोचताम्। स्वाम्याख्यत् केवलं न स्यात्, करिस्कंधजुषां क्वचित् ॥१८८॥ स दध्यौ मे कुतो हस्ती?, ज्ञातं मानो मतंगजः। धिग् मां विनयविध्वंसकारिमानविडंबितम् ॥१८९॥ इयत्कालं मुधा सेहे, शीतवातातपादिकम्। ततश्चारित्रपूतांस्तान्, वंदिष्येऽद्य शिशूनपि ॥१९०॥ ध्यायन्निति विशुद्धात्मा, सोऽथ पादमुदक्षिपत्। केवलं प्राप्य गत्वाऽस्थात्तत्र केवलिपर्षदि ॥१९१॥ राज्यं भरतराजोऽथ, कुर्व्वन्नेतैर्युतो यथा। यक्षाणां कृतरक्षाणां, सहस्रास्तत्र षोडश ॥१९२॥ राज्ञां मुकुटबद्धानां, द्वात्रिंशच्च सहस्रकाः। चतुष्षष्टिसहस्राश्च, राज्ञीनां वरयोषिताम् ॥१९३॥ पत्तनानां सहस्राण्यष्टाचत्वारिंशदप्यथ। द्वासप्ततिसहस्राश्च, समृद्धानां पुरां तथा ॥१९४॥ तथा षोडश खेटानां, संबाधानां चतुर्दश। कर्बटानां सहस्राश्च, विंशतिश्चतुरन्विता ॥१९५॥ मटंबानां च तावंत, आकराणां च विंशतिः। द्रोणमुखसहस्राणां, नवतिर्नवभिर्युता ॥१९६॥ तथा त्रिषष्टिसंयुक्ताः, सूदानां च शतत्रयी। श्रेणीप्रश्रेणयश्चाष्टादश सेवाकृतोऽनिशम् ॥१९७॥ प्रत्येकं च रथाश्वेभलक्षाश्चतुरशीतिकाः। प्रत्येकं ग्रामपत्तीनां, कोट्यः षण्णवतिस्तथा ॥१९८॥ अत्र च विषमपदानामर्थो यथा—ग्रामो वृत्यावृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभं, खेटं नद्यद्रिवेष्टं परिवृतमभितः कर्बटं पर्वतेन। ग्रामैर्युक्तं मडंबं दलितदशशतैः पत्तनं रत्नयोनिर्द्रोणाख्यं सिंधुवेलावल-

यितमथ संत्राधनं चाद्रिशृंगे॥१९९॥ कुराज्यैकोनपंचाशत्, पंचाशच्चांतरोदकाः। प्रयुक्ता चैवमादीनां, वस्तुनामनुशासिता॥२००॥ द्वात्रिंशतः सहस्राणां, देशानामीशिता तथा। द्वात्रिंशद्बद्धसंज्ञानां, नाटकानामपीयताम्॥२०१॥ भरतः पूर्वजन्मर्षिदानपुण्यप्रभावतः। समग्रभरतैश्वर्यसुखं सुचिरमन्वभूत्॥२०२॥ अन्यदा समवासार्षीद्गिरावष्टापदे प्रभुः। सर्वर्ध्या भरतस्तत्र, गत्वाऽर्हंतमवंदत॥२०३॥ तत्र दृष्ट्वाऽनुजान् दध्यौ, भुंक्ते काकोऽपि नैककः। विटभोज्यं व्यधां राज्यं, श्ववोच्छिद्य निजं कुलम्॥२०४॥ संप्रत्यपि ततो भोगैः, प्रार्थयिष्येऽनुजानमून्। राजा ध्यात्वेति राज्येन, नत्वा तानभ्यमंत्रयत्॥२०५॥ स्वाम्युवाच न लांत्येते, राज्यं वांतमिवाथ सः। आनाय्य मोदकानांसि, पंचशत्या प्रदत्तवान्॥२०६॥ अकल्प्यमिदमूचेऽर्हन्नाधाकर्म्माहृतं ह्यदः। अकृताकारितान्नं तु, यच्छन्नूचेऽर्हताऽथ सः॥२०७॥ यतीनां राजपिंडत्वात्, कल्पते नैतदप्यथ। निषिद्धः सर्वथा राजा, दध्यौ म्लानमुखांबुजः॥२०८॥ त्यक्तोऽहं तातपादैस्तु, सर्वथा पापकर्मकृत्। धिग्मां कुकर्म्मचंडालं, भविष्यामि कथं हहा?॥२०९॥ शोकार्त्तं तं हरिर्ज्ञात्वाऽप्राक्षीत् प्रभुमवग्रहम्। स्वाम्याख्यात् शृणु देवेंद्रावग्रहः पंचधा पुनः॥२१०॥ शक्रचक्रिनृपागारिसाधुभेदादमीषु तु। पूर्वः पूर्वः समग्रोऽपि, पाश्चात्येन विबाध्यते॥ २११॥ शक्रोऽथोवाच साधुभ्यो, द्रव्यादिभिरवग्रहः। दत्तो मया निजोऽथोचे, प्रीतचित्तो नृपः प्रभुम्॥२१२॥ स्वकीयोऽवग्रहो दत्तो, यतिभ्यः सर्वथा मया। ऋभुक्षाणं बभाषेऽथ, हर्षभाग् वृषभात्मजः॥ २१३॥ ददे कस्मायिदं भक्तं?, वद विद्वन्! दिवस्पते!। गुणोत्तरेभ्य इत्यूचे, शक्रः सोऽथेत्यचिंतयत्॥ २१४॥ के ते मत्तस्ततो ज्ञातं, विरताविरताः खलु। तत्तेषां भक्तपानाद्यैः,करिष्ये भक्तिमादृतः॥२१५॥ तुष्टः पुनरभाषिष्ट, दृष्ट्वा सृष्ट्वाकृतिं हरिम्। स्वर्गे तिष्ठत किं यूयं,रूपेणानेन? सोऽभ्यधात्॥२१६॥ नैतत्स्वाभाविकं तत्तु, मर्त्यैर्द्रष्टुं न शक्यते। राजोचे कौतुकं मेऽत्र, तद्दर्शय यथा तथा॥२१७॥ शक्रोऽ-

प्यंदर्शयत्तस्यैकांगुलीं भूषणान्विताम् । दृष्ट्वाऽत्यंतप्रदीप्तां तां, मुमुदे मेदिनीपतिः ॥२१८॥ शक्रांगुलीं च संस्थाप्याकार्षीदष्टाह्निकां नृपः । ततःप्रभृति संजज्ञे, पृथ्व्यामिंद्रमहोत्सवः ॥२१९॥ विजह्रेऽन्यत्र तीर्थेशः, पृथ्वीशोऽप्येत्य मंदिरे। आकार्य्य श्रावकानूचे, भक्तिनिर्भरया गिरा ॥२२०॥ युष्माभिः कृषिवाणिज्यं, नैवान्यदपि कर्म्म च । कार्यं किंतु सदाऽप्यत्र, भोक्तव्यं मम सद्मनि ॥२२१॥ अपूर्वं श्रुतमध्येयं, पूर्वाधीतं च गुण्यताम् । धर्म्मैकमानसैः स्थेयं, भो भोः साधर्म्मिका यतः ॥२२२॥ सत्साधर्म्मिकवात्सल्ये,परा प्रवचनोन्नतिः । तया च तीर्थकृन्नामकर्म्म जीवः समार्जयेत् ॥२२३॥ ब्रूयते च मदग्रे तु, संभूयेति जितो भवान्। वर्द्धते च भयं येभ्यस्तस्मान्मा हन मा हन ॥२२४॥ तथैव चक्रिरे ते तु, चक्री त्वाकर्ण्य तद्वचः । अचिंतयज्जितोऽहं कैर्हुं कषायैस्ततश्च मे ॥२२५॥ भयमस्ति ततः कस्माद्धेतोर्हन्मि यतोऽगिनः। संवेगमित्यगाद्राजा, शृण्वानस्तां गिरं क्षणम् ॥२२६॥ पुनः पश्यन्नसौ प्रीत्या, साम्राज्यश्रियमुत्तराम्। सिषेवे विषयान् भोगफलं हि बलवद्यतः ॥२२७॥ सूदैर्नृपोऽथ विज्ञप्तो, भूयिष्ठा इह भोजिनः। परीक्षार्थं ततो राजा, श्रावकानिति पृष्टवान् ॥२२८॥ व्रतानि कति वः संति ?, तेऽप्यूचुर्न व्रतानि नः। अणुव्रतानि पंच स्युः, सप्त शिक्षाव्रतानि च ॥२२९॥ रेखात्रयेण काकण्या, तेऽथ राज्ञाऽकिता हृदि । लांछ्यंते तेऽपि षण्मास्या, षण्मास्यैत्र महीभुजा ॥२३०॥ ब्राह्मणा इत्यजायंत, ते पुत्रान् स्वानदीक्षयन् । परीषहासहिष्णूंस्तु, कानपि श्रावकान् व्यधुः ॥२३१॥ आर्यान् वेदान् व्यधाच्छाद्धधर्म्माचार-परान्नृपः । तेऽनार्याः सुलसायाज्ञवल्क्याद्यैश्चक्रिरे पुनः ॥२३२॥ पश्चाद्यज्ञोपवीतानि, सौवर्णादीनि जज्ञिरे । मिथ्यात्वं ब्राह्मणास्ते-ऽगुरंतरे नवमार्हतः ॥ २३३ ॥ राज्ञाऽन्यदा जिनोऽत्रत्यान्, पृष्टो भाविजिनादिकान् । जगाद पितृमातायुर्मानवर्णादिमिश्च तान् ॥२३४॥ विहृत्याब्दसहस्रोनं, पूर्वलक्षमथ प्रभुः । केवलित्वेन धर्म्मं च, पंचयाममुपादिशत् ॥२३५॥ चतुर्युक् पुंडरीकाद्या, अशी-

तिर्गणधारिणः । सहस्रास्तु चतुर्युक्ताशीतिश्चाप्यनगारिणाम् ॥२३६॥ साध्वीनां ब्राह्मिकासुंदर्यादीनां च त्रिलक्षिका । श्रावकाणां त्रिलक्षी च,सहस्रैः पंचभिर्युता ॥२३७॥ श्राविका पंचलक्षी चतुष्पंचाशत्सहस्रयुक् । प्रभोः चतुःसहस्री चाभूच्चतुर्दशपूर्विणाम् ॥२३८॥ सार्द्धसप्तशतीयुक्तास्तथाऽवधिमतां नव । सहस्राः केवलज्ञानभृतां ते विंशतिः पुनः॥२३९॥ विंशतिर्वैक्रियर्द्धीनां,सहस्राः षट्शतीयुताः। सहस्रा द्वादशाभूवन् सार्द्धानि षट्शतानि च ॥२४०॥ मनःपर्यययुक्तानां, तावंतो वादिनोऽपि च । द्वाविंशतिसहस्राश्चानुत्तरेषूपपातिनाम् ॥२४१॥ युक्ता नवशतैरेवं, भव्यवर्गं प्रबोध्य सः । धनुष्पंचशतीमानश्चाष्टापदसमद्युतिः ॥ २४२ ॥ गिरावष्टापदेऽन्येद्युः, स्वामी नष्टापदाग्रणीः । आययौ जगतामष्टापदादिव्यसनैकहृत् ॥२४३॥ अष्टभिः कुलकं । तृतीयारे स सार्द्धाष्टमासत्र्यब्दावशेषके । माघकृष्णत्रयोदश्यां, पूर्वाह्णेऽभीचिगे विधौ ॥२४४॥ चतुर्दशेन भक्तेन, सहस्रैर्दशभिः समम् । मुनीनामथ पर्यंकनिषण्णो योगरोधतः ॥२४५॥ सर्वायुः पूर्वलक्षास्त्वतीत्याशीतिं चतुर्युताम् । प्रथमस्तीर्थकृत् प्राप, शाश्वतं परमं पदम् ॥२४६॥ त्रिभिर्विशेषकं ॥ सुरासुराश्च चक्री च, पूर्वायातास्ततः प्रभोः । विधिवच्चक्रिरे मोक्षमहं कृत्वा चितित्रयीम् ॥२४७॥ पूर्वापाच्यपराशास्वर्हतस्तद्वंशजन्मिनाम् । शेषाणां च क्रमाद् वृत्तां, त्रिकोणां चतुरश्रिकाम् ॥२४८॥ त्रीनग्नींस्तान्नृपो भक्त्या, श्रावकाणां समार्प्पयत् । तेऽपि त्रिवार्षिकैर्व्रीहियवाद्यैर्जुहुवुश्च तान् ॥२४९॥ ते वृद्धश्रावकास्तेन, प्रथिता अग्निहोत्रिकाः । लोकोऽपि राजपूज्यत्वात्तेभ्यो दानमदात्तदा ॥२५०॥ तत्र सिंहनिषद्याख्यं, चैत्यं वर्द्धकिरत्नतः । त्रिकोशोच्चं द्विगव्यूतपृथु दैर्घ्यं च योजनम् ॥२५१॥ चतुर्द्वारं च तत्रार्चाः, स्वस्ववर्णप्रमाणतः । जिनानां वृषभादीनां, चतुर्विंशतिमप्यथ ॥२५२॥ भक्त्या स्तूपशतं चक्री, भ्रातॄणां प्रतिमाशतम् । एकोनं तु गिरौ तत्र, दंडेनाष्टौ पदानि च ॥२५३॥ कारयित्वेति तत्तीर्थं, चक्र्यागत्य निजां पुरीम् । भेजे भोगान् पुनः पंच, पूर्वलक्षीं यथा-

सुखम् ॥२५४॥ अन्यदा च कृतस्नानः, सर्वालंकारभूषितः । गत्वाऽन्तर्दर्प्पणागारं, सिंहासन उपाविशत् ॥२५५॥ पश्यतस्तस्य संक्रांतं, स्वगात्रं मणिभित्तिषु । अंगुलीयकमेकं चापतद्राज्ञाऽप्यलक्षितम् ॥२५६॥ तद्विना चांगुलीं तां तु, क्ष्मापतिर्वीक्ष्य विश्रियम् । दध्यावागंतुकाऽत्र श्रीः, पुस्ताद्यैरिव भित्तिषु ॥२५७॥ स्वांगेभ्यो भूषणान्येष, उत्ततार यथा यथा । तथा तथाऽतिभूयांसं, संवेगमगमत् परम् ॥२५८॥ आरुह्य क्षपकश्रेणीं, शुक्लध्यानाग्निना क्षणात् । घातिकर्म्माणि निर्दह्य, केवलश्रियमाप सः ॥२५९॥ शक्रोऽथासनकंपेन, तत्रागाद्भरतोऽपि च । देवतादत्तमादत्त, द्रव्यलिंगं च तद्गिरा ॥२६०॥ स्वर्णांभोजे निषद्याथ, कृत्वा सद्देशनामसौ । प्रबोध्य दीक्षयामास, सहस्रान् दश भूभुजाम् ॥२६१॥ भरतः पूर्वलक्षाणि, कौमार्ये सप्तसप्ततिम् । अतीत्य मंडलित्वे च, सहस्रं शरदां पुनः ॥२६२॥ तदूनायां कृतायां च, पुनः षट्पूर्वलक्षिकाम् । विहृत्य केवलित्वे तु, पूर्वलक्षं तथैककम् ॥ २६३ ॥ सिद्धः शत्रुंजये तीर्थे, तत्पुत्रस्तु बिडौजसा । अथादित्ययशोऽभिख्यः, पितृराज्येऽभ्यषिच्यत ॥२६४॥ एवमष्टौ क्रमात्ते तु, त्रिखंडेशाः शिवं ययुः । दिग्मात्रमिदमित्युक्तं, चरितं भरतेशितुः ॥२६५॥ साधर्म्मिकाणां भरतेश्वरेण, वात्सल्यमेवं विहितं निशम्य । सुश्रावकाः ! श्रावकलोकवर्गे, भक्तिं स्वशक्त्या कुरुताशनाद्यैः ॥२६६॥ साधर्म्मिकवात्सल्ये भरतेश्वरकथा ॥ वात्सल्यमेव राजग्रहाद्यापदुद्धाररूपं सदृष्टांतमाह—

वज्जाउहस्स रामेणं, जहा वच्छल्लयं कयं ।ससत्तिअणुरूवं तु, तहा वच्छल्लयं करे ॥२०७॥

अक्षरार्थः सुगमो, भावार्थस्तु ज्ञातगम्यः, तच्चेदं—क्षेत्रेऽत्र पुर्ययोध्यायामिक्ष्वाकुकुलविश्रुतः । (ग्रंथाग्र ७०००) राजा दशरथो जज्ञे, विवेकरथसारथिः ॥१॥ तस्याभवन्महादेवी, कौशल्या कुशलाशया । द्वितीया तु सुमित्राख्या, तृतीया केकयी पुनः

॥२॥ तुर्या वसुप्रभाभिख्या, तासां पुत्रा इमे क्रमात् । पद्मनामाष्टमः शीरी, रामभद्रापराह्वयः ॥ ३ ॥ नारायणाभिधः शार्ङ्गी, लक्ष्मणापरनामकः । तृतीयो भरताभिख्यः, शत्रुघ्नश्च तुरीयकः ॥४॥ –इतश्च मिथिलापुर्यां, जनकोऽभून्महीपतिः । विदेहेति प्रिया तस्य, सीतानाम्नी च तत्सुता ॥५॥ वज्रावर्त्तार्णवावर्त्तचापारोपात् पणीकृताम् । गत्वाऽथोद्यौवनां तत्र, पद्मस्तामुदवाहयत् ॥६॥ समं रामादिभिः पुत्रै, राजा दशरथस्ततः । जिनधर्मरतः प्राज्यं, साम्राज्यं सुचिरं व्यधात् ॥७॥ –कौशल्यायै जिनस्नात्र, सौविदे-नान्यदाऽऽदितः । पश्चाचापरदेवीभ्यश्चेटीभिः प्राहिणोन्नृपः ॥८॥ तारुण्याचेटिकाः शीघ्रं, गत्वा ताः पूर्वमेव हि । देवीनामार्पयंस्तात्रपाथस्ताश्च ववंदिरे ॥९॥ सौविदे त्वतिवृद्धत्वात्, मंदवन्मंदगामिनि । अनाप्तस्नात्रपानीया, कौशल्या त्वपमानिता ॥ १० ॥ उद्बद्धुं यावदारेभे, स्वं तत्रैत्य नृपोऽप्यथ । मृत्योर्निवार्य तां प्रोचे, त्वयेदं प्रकृतं कथम् ? ॥११॥ ततः सोचेऽपमानं तमथागात्तत्र सौविदः । किमागास्त्वं विलंबेन, राज्ञाऽसावित्यपृच्छयत ? ॥१२॥ कंचुक्यपि जजल्पात्र, वार्द्धकयमपराध्यति । सर्व्वकार्याक्षमं स्वामिन्!, किं न पश्यतु मे वपुः ॥१३॥ इति श्रुत्वा नृपो दध्याविति यावदियं जरा। सर्वतः शाकिनीवेदं, न गात्रं ग्रसतेतराम् ॥१४॥ व्याधिव्याधास्त्वमी यावन्न व्यथंते वपुर्मृगम् । यावच्च करणग्रामो, नाध्यासीत क्षयास्पदम् ॥१५॥ तावन्नो यतितुं युक्तं, प्रेत्यकार्याय सत्वरम् । ध्यायन्निति नृपोऽथागात्, स्वस्थानं सुसमाहितः ॥१६॥ सत्यभूतिश्चतुर्ज्ञानी, पुरोद्याने तदाऽऽययौ । राजा सपुत्रस्तत्रागान्नत्वाऽश्रौपीदिदं यथा ॥१७॥ "दुष्प्रापं प्राप्य यः पुस्त्वं, धर्म्मं धत्ते न यत्नतः । चिंतारत्नं हि कष्टाप्तं, पातयत्येव सोऽम्बुधौ ॥१८॥" संविग्नोऽथ गृहं गत्वा, राजामात्यान् समादिशत् । राज्ये स्थापयितुं यावद्, रामं पुत्रं प्रमोदभाक् ॥१९॥ कैकयी नृपतिं तावत्, प्राप्यं वरमयाचत । राजाऽप्युवाच याचस्व, विना व्रतनिषेधनम् ॥२०॥ साऽवोचद् देहि राज्यं हि, भरताय ततो

नृपः। आनाय्य भरतं राज्ये, संस्थापयितुमादिशत् ॥२१॥ सोऽपि नत्वा पितुः पादान्, रुदन्नूचे त्वया सह। ताताहं प्रव्रजिष्यामि, राज्यं रामाय देहि तत् ॥२२॥ व्रताय यदि नो योग्यस्ततोऽहं सीरिशार्ङ्गिणोः। सेविष्ये भक्तितः पादांस्त्वत्पादानिव सर्वदा ॥२३॥ अथोचे नृपतिं रामो, भरतोऽत्र स्थिते मयि। राज्यं ग्रहीष्यते नैव, वनवासाय यामि तत् ॥२४॥ इत्यनुज्ञाप्य राजानं, कौशल्यां च प्रणत्य सः। वज्रावर्त्तधनुर्बिभ्रन्निर्ययौ राजमंदिरात् ॥२५॥ सौमित्रिरथ निर्यांतं, वीक्ष्य रामं व्यचिंतयत्। उत्थाप्य भरतं राज्यादग्रजं स्थापयामि किम्? ॥२६॥ न युक्तमथवा ह्येतत्तातादेशविबंधकम्। ततोऽहमनु यास्यामि, पद्मं सर्वत्र भृंगवत्॥२७॥ चिंतयित्वेति सौमित्रिरर्णवावर्त्तचापभृत्। पृष्ठोत्तंसिततूणीरो, निर्ययौ पद्मपृष्ठतः ॥२८॥ वियोगभीता सीताऽपि, नत्वा श्वश्रूं पतिव्रता। ज्योत्स्नेवानु विधुं शीघ्रं, प्रतस्थे साऽनु राघवम् ॥ २९ ॥ राजाऽथ भरतं राज्ये, स्थापयित्वा तपोऽग्रहीत्। सत्यभूतिगुरोः पार्श्वे, क्रमेण शिवमाप च ॥३०॥–सौमित्रिजानकीयुक्तः, पद्मो गच्छन् क्रमादथ। प्राप मालवदेशांतर्दशांगपुरसन्निधौ ॥३१॥ धात्रीपुत्रीमथ श्रांतां, विश्रामयितुमध्वनि। निषसाद वटस्याधो, यक्षेश इव राघवः ॥३२॥ तं देशमभितो वीक्ष्य, सीरी शार्ङ्गिणमब्रवीत्। अधुनैवोद्वसो जज्ञे, देशोऽयं कस्यचिद्भिया ॥३३॥ अशुष्ककुल्या आरामा, इक्षुवाटाश्च सेक्षवः। खलानि च ससस्यानि, समीक्ष्यंतेऽत्र भो यतः ॥३४॥ अत्रांतरे नरं कंचित्, दृष्ट्वाऽपृच्छद्रघूद्वहः। किमुच्चचाल देशोऽयं, प्रस्थितोऽसि क्व वा भवान्? ॥३५॥ सोऽथाख्यत् श्रीविशालायां, विशालायां नरेश्वरः। अस्ति सिंहोदरो नाम, सिंहाभो वैरिदंतिनाम् ॥३६॥ तस्यास्ति प्रतिबद्धोऽस्मिन्, देशे सामंतकाग्रणीः। वज्रायुध इति ख्यातो, वज्रकर्णापराभिधः ॥३७॥ आखेटकेऽन्यदा सोऽगान्मृगाद्यांस्तत्र खेटयन्। प्रीतिवर्द्धननामानं, वीक्षांचक्रे महामुनिम् ॥३८॥ अमुष्मिन् भीषणेऽरण्ये, प्रेतराजगृहोपमः। त्वं तिष्ठसि किमत्रेति, तं पप्रच्छ महीपतिः

॥३९॥ यत्यूचे स्वहितायाथ, भूयोऽभाषिष्ट भूपतिः। खाद्यादिवर्जिते तेऽत्र, किं नामात्महितं भवेत्? ॥४०॥ योग्योऽयमिति मत्वर्षिर्द्धर्म्ममात्महितं जगौ। तमाकर्ण्य नृपो धर्म्ममग्रहीद्गृहमेधिनाम् ॥४१॥ मुक्त्वा देवं हि सर्व्वज्ञं, गुरून् साधूंश्च नापरम्। प्रणंस्यामीति जग्राहाभिग्रहं च महामनाः ॥४२॥ ततस्तं मुनिमानम्य, स्वपुरेऽगात् स पार्थिवः। विशुद्धं धर्ममातन्वन्, मनस्येवमचिंतयत् ॥४३॥ न नमस्यो मया ह्यन्य, इति तावदभिग्रहः। सिंहोदरस्तु मे द्वेषी, भविष्यत्यनमस्यतः ॥ ४४ ॥ एवं चेतसि संचिंत्य, स्वांगुलीये मणीमयम्। श्रीसुव्रतार्हतो बिंबं, धीश्रेष्ठः स न्यवीविशत् ॥४५॥ वज्रायुधो नमश्चक्रे, यदा सिंहोदराय सः। तदा तदंगुलीयस्थं, पुरः कृत्वाऽनमज्जिनम् ॥४६॥ वृत्तांतं तमथो ज्ञात्वा, कोऽपि तस्यान्यदा खलः। सिंहोदराय तत्सर्वमाचख्यौ विप्रतारणम् ॥४७॥ ततोऽसौ कुपितः सिंहोदरो हक्कितसिंहवत्। तत्कोपं वज्रकर्णाय, कोऽप्येतद्रागचीकथत् ॥४८॥ भोः कथं मयि तत्कोपस्त्वयाऽज्ञायीति स स्फुटम्। वज्रायुधेन पृष्टः सन्, स पुमानित्यभाषत ॥४९॥ श्राद्धः समुद्रदत्तोऽस्ति, पुरे कुंडपुरे वणिक्। तज्जाया यमुनाऽभिख्या, विद्युदंगोऽस्मि तत्सुतः ॥५०॥ अन्यदा पण्यमादाय, प्रभूतं प्रययावहम्। उज्जयिन्यां वणिज्याय, वणिजां धर्म्म एव हि ॥५१॥ तत्र कामलतां नाम, कामपत्नीमिवापराम्। वेश्यां ददर्श सद्यश्च, मन्मथोन्माथितोऽभवम् ॥५२॥ रात्रिमेकां वसामीति, तया विहितसंगमः। षण्मासानवतस्थेऽहं, तत्संगविरहासहः ॥५३॥ यदार्जि विपुलं द्रव्यं, मत्पित्रा जन्मतोऽपि हि। तत्त्वनाशि मया सर्वं, मत्तेभेनेव काननम् ॥५४॥ सिंहोदरमहादेव्याः, श्रीधराया हि कुंडले। यादृशी तादृशी देहि, मामित्यूचेऽन्यदा तु सा ॥५५॥ तावन्मात्रो न मेऽर्थोऽस्ति, तत् ते एव हराम्यहम्। ध्यात्वेति निशि खात्रेण, प्रविष्टो नृपवेश्मनि ॥५६॥ तदा सिंहोदरं क्रोधात्, निःश्वसंतं महाहिवत्। पृच्छंती श्रीधरादेवीत्येवमाकर्णिता मया ॥५७॥ निद्रामुद्रादरिद्राब्जलोचनः प्राणितेश्वर! दानवारिरि-

वेदानीं, निद्रां न लभसे कथम् ?॥५८॥ सोऽप्यूचे देवि ! तावन्मे, कुतो निद्रासमागमः ? । प्रणामविमुखो यावद्वज्रकर्णो न हन्यते ॥५९॥ प्रातस्तु निग्रहीष्येऽमुं,समित्रं हि ततो मम । निद्रैष्यति कृते पुत्र्या, उद्वाहे तत्पितुर्यथा ॥६०॥ एतच्छ्रुत्वा ततोऽत्राहं,त्यक्त्वा कुंडलचौरिकाम् । साधर्म्मिक इति प्रीत्या, तव शंसितुमागमम् ॥६१॥ ततो वज्रायुधः पुंभिः, पुरं तृणकणादिभिः । अपूरयदथापश्यत्,परानीकरजोऽम्बरे ॥६२॥ अथ सिंहोदरोऽरौत्सीत्, तत्पुरं प्रबलैर्बलैः । तुरंगमखुरोत्खातरजोभिश्छादयन्नभः ॥६३॥ दूतेनावीवदत् सोऽथ, क्रुद्धो वज्रायुधं यथा । प्रणाममायया ऽवंचि, भवताऽहमियच्चिरम् ॥६४॥ इदानीं तु विना तेनांगुलीयेनैत्य मां नम । अन्यथा सकुटुंबं त्वां, नेष्यामि यमसद्मनि ॥६५॥ वज्रकर्णस्ततः प्रोचे, दूतं मेऽभिग्रहो ह्ययम् । यद्विना जिनसाधुभ्यां, नमस्यो नापरो मया ॥६६॥ न पौरुषमदो मेऽत्र, किंतु धर्म्मैकलुब्धता । तत्प्रणामादृते लातु, सर्वस्वमपि ते प्रभुः ॥६७॥ धर्म्मद्वारं स मे दत्तां, धर्म्मं पालयितुं यथा । गच्छाम्यन्यत्र कुत्रापि, स्वस्ति भूयात्तव प्रभोः ॥६८॥ इत्युक्ते वज्रकर्णेन, दूत एत्य शशंस तत् । सिंहोदरनृनाथाय, सोऽथ मेने न किंचन ॥६९॥ ततश्च सर्वतो रुद्ध्वा, पुरमेष स्थितो बहिः । देशं च लुंटयन्नस्ति, तद्भयादयमुद्वसः ॥७०॥ अहं च भीतचेताः सन्नष्टोऽस्मि राजविड्वरे । गृहाण्यत्राद्य दग्धानि, तन्ममापि कुटीरकम् ॥७१॥ शून्येभ्य इभ्यसद्मभ्यः, सद्मोपकरणान्यहम् । सधर्म्मिण्या समानेतुं, प्रहितो यामि तत्कृते ॥७२॥ एवमुक्ते ततस्तस्मै, पुंसे दाशरथिर्ददौ । मणिहेममयं सूत्रं, वदान्यो दीनवत्सलः ॥७३॥ तं विसृज्याथ सीराङ्को, दशांगपुरमीयिवान् । चंद्रप्रभं बहिश्चैत्ये, नत्वा तत्रैव तस्थिवान् ॥७४॥ रामं प्रणत्य सौमित्रिरवादीद्वदतांवरः । स्वामिन्नादिश येनाहं, भोजनं वां समानये ॥७५॥ कौशल्यानंदनोऽप्याख्यद्युक्तं भोक्तुं न सांप्रतम् । रुद्धे वज्रायुधे मध्ये, ज्ञाते चास्मादृशां ततः ॥७६॥ यस्य चित्ते जिनो देवो, गुरवश्च सुसाधवः । तत्त्वं जिनोदितं चैव, तस्य कः स्यात्समो

नरः ? ॥७७॥ विशेषेण नृपस्यास्य, द्वादशव्रतधारिणः । वज्रकर्णस्य किं ब्रूमो, घोराभिग्रहशालिनः ?॥७८॥ अथोचे लक्ष्मणो नत्वा, देवादेशं प्रयच्छ मे । येन सिंहोदरं बद्ध्वाऽऽनयामि भवदंतिके॥७९॥ ततो हृष्टेन पद्मेनानुशिष्टः प्रहितो ययौ। लक्ष्मणोऽवंतिभूपालं, जजल्पेति च सुष्ठुवाक् ॥८०॥ त्वामूचे भरतो राजा, राजराजीनतक्रमः। किं न वज्रायुधस्यास्य, प्रसीदसि महात्मनः ? ॥८१॥ प्रत्यूचेऽवंतिराजोऽपि, भृत्यानां भरतोऽपि राट्। नतानामेव कुरुते,प्रसत्तिं ह्यन्यथा नतु ॥८२॥ अयं तु वज्रकर्णो मे,सामंतः कपटाशयः। नमस्यति न मां तेन, प्रसीदाम्यस्य भोः कथम्? ॥८३॥ भूयोऽपि शार्ङ्गभृत् प्रोचे, नासावविनयी त्वयि। किं त्वस्यान्यनमस्कारकरणे नियमोऽर्गला ॥८४॥ मा कुप्य वज्रकर्णाय, मान्यं भरतशासनम्। आसमुद्रांतमेदिन्या, भरतो ह्यनुशासिता ॥८५॥ क्रुद्धोऽवंतिनृपो ब्रूते, कोऽयं भरतभूपतिः। यो वज्रकर्णगृह्यः सन्, वातूलो मां वदत्यदः ॥ ८६ ॥ आध्माततामताम्राक्षो, मदाविष्ट इव द्विपः। अमित्रध्वांतमित्रोऽथ, सौमित्रिरिदमब्रवीत् ॥८७॥ भरतं किं न जानासि, भरतस्थोऽपि भूभुजाम्। अरेरे कूपमंडूक!, ज्ञापयाम्येष मंक्षु तम् ॥८८॥ तदुत्तिष्ठ युधे सर्वात्मना संवर्मितोभव। न भवस्यसि गोधेव, मद्भुजाशनिताडितः ॥८९॥ तच्छ्रुत्वाऽवंतिराजोऽपि, सानीकोऽनीकलालसः। सौमित्रिं हंतुमुपस्थौ, मृगारातिं मृगार्भवत् ॥९०॥ लक्ष्मणोऽपि गजस्तंभं, भुजस्तंभेन हेलया। उत्पाट्य ताडयामास, द्विपो द्विप इवांतकः ॥९१॥ अथानिल इवोत्पत्यावंतिराजं गजस्थितम्। बबंध बस्तवत् कंठे, तद्वस्त्रेणैव शार्ङ्गभृत् ॥९२॥ साश्चर्यं पश्यतां तेषां, वीराणां राघवानुजः। दुष्टर्पभमिवाकृष्य, तं निन्ये रामसन्निधौ ॥९३॥ वीक्ष्य सिंहोदरं रामो, बंधनाद् द्रागमोचयत्। सोऽपि राममुपालक्ष्य, नत्वा चेति व्यजिज्ञपत् ॥९४॥ त्वद्गृह्यो वज्रकर्णोऽयं, न चाज्ञायि मया प्रभो!। तत् क्षमस्व ममाज्ञानदोषं यत्कृत्यमादिश ॥९५॥ वज्रकर्णेन संधेहीत्यादिशत् तं रघूद्वहः। अवंतीशोऽपि तां वाचं, तथेति प्रत्यपद्यत ॥९६॥

(प्रवज्रकर्णोऽपि तत्रागाल्लक्ष्मणाग्रजशासनात् । न ज्ञातस्त्वमिहायातो, मया रघुकुलोद्वह ! ॥ अथवा किमिदं देव !, मत्परीक्षाकृते कृतम् ॥९७॥ कृतं नः प्राणितेनापि, यूयं छलपरा यदि । क्षमस्वाज्ञानदोषं मे, यत्कर्त्तव्यं तदादिश ॥९८॥ भूत्यै कोपः शिखामात्रकृत्ये शिष्ये गुरोरिव । संधेहि वज्रकर्णेनेत्यादिशत्तं रघूद्वहः ॥९९॥ सिंहोदरोऽपि तां वाचं, तथेति प्रत्यपद्यत।) वज्रकर्णोऽपि तत्रागाल्लक्ष्मणाग्रजशासनात् । विनयेन पुरोभूयेत्येवमूचे कृतांजलिः ॥१००॥ मत्स्वामिनममुं मुंच, शाधि चैनं तथा प्रभो !। सदैव सहते मेऽन्याप्रणामाभिग्रहं यथा ॥१०१॥ रामाज्ञयाऽथ तन्मेनेऽवंतीजनपदाधिपः । रामानुजेन मुक्तः सन्, वज्रकर्णं च सस्वजे ॥१०२॥ ततश्च परया प्रीत्या, रघुपुंगवसाक्षिकम् । वज्रायुधाय राज्यार्द्धमदत्तावंतिपार्थिवः ॥१०३॥ श्रीधराकुंडले ते च, याचित्वाऽवंतिनायिकाम् । (ग्रं० ७४००) प्रददे विद्युदंगाय, वज्रकर्णः स मोदभाक् ॥१०४॥ ततः सप्रणयं सिंहोदरवज्रायुधौ नृपौ । विसृष्टौ रामचंद्रेण, जग्मतुः स्वस्वपत्तनम् ॥१०५॥ अथाग्रे यान् क्रमात् प्राप, विजयाख्यं पुरं बलः । तस्मिंश्च बहिरुद्याने, वटस्याधोऽवसन्निशि ॥१०६॥ —इतश्च नगरे तत्राभून्महीभृन्महीधरः । इंद्राणीनाम तद्भार्या, वनमाला च तत्सुता ॥१०७॥ सा च बाल्येऽपि सौमित्रेराकर्ण्य गुणसंपदम् । तमेव हि पतीयंती, नान्यं वरमियेष सा ॥१०८॥ तदा दशरथं श्रुत्वा, निष्क्रांतं रामलक्ष्मणौ । गतौ च वनवासाय, विषण्णोऽथ महीधरः ॥१०९॥ ददौ चंद्रपुरेशाय, वृषभक्ष्मापजन्मने । नाम्ना सुरेंद्रभूपाय, सुरूपाय निजां सुताम् ॥११०॥ युग्मं । तच्छ्रुत्वा वनमालाऽपि, मरणे कृतनिश्चया । तस्यां निश्येकिका दैवात्तस्मिन्नुद्यान आययौ ॥१११॥ तमायांती वटं प्रैक्षि, मंक्षु राजानुजेन सा । सुप्तराघववैदेहीयामिकेन प्रजाग्रतः ॥११२॥ क्षणाच्च पश्यतस्तस्य, साऽऽरोहत्तं वटद्रुमम् । विधास्यति किमेषेति, लक्ष्मणोऽप्यारुरोह तम् ॥११३॥ ततः सा प्रांजलिर्भूत्वा, प्रोचे हे वनदेवताः ! । चत्वारो लोकपालाश्च, सर्वे शृणुत मद्वचः

॥११४॥ जन्मन्यस्मिन्न मे तावदभूद्भर्त्ता स लक्ष्मणः। भूयाज्जन्मांतरे तर्हि, तत्र भक्तिर्ममास्ति चेत् ॥११५॥ एवमुक्त्वोत्तरीयेण, कंठपाशं विधाय सा। बद्ध्वा च वटशाखायामारेभे स्वं विमोचितुम् ॥११६॥ मा कार्षीः साहसं भद्रे !, लक्ष्मणोऽहमिति ब्रुवन्। शस्त्र्या सोऽपास्य तत्पाशं, तं गृहीत्वोत्ततार च ॥११७॥ प्रबुद्धयोः प्रभाते तु, पद्मवत् पद्मसीतयोः। सोऽशंसद्वनमालायास्तं वृत्तांतमशेषतः ॥११८॥ इतस्तदानीमिंद्राणी, महीधरसधर्म्मिणी। वनमालामपश्यंती, पूच्चकारोच्चकैः स्वरम् ॥ ११९ ॥ अथान्वेष्टुं निजां पुत्रीं, निर्जगाम महीधरः। इतस्ततः परिभ्राम्यंस्तत्रस्थां तां ददर्श च ॥१२०॥ अरे रे हिंस्र हिंस्रैतान्, वनमालामलिम्लुचान्। एवं वदन् दधावे स, तान्निहंतुं ससेनकः ॥१२१॥ अथ रामानुजः क्रुद्धस्त्रिवलीभीमभालकः। धनुष्यारोपयामास, संजिनीं धन्विनां वरः ॥१२२॥ आकर्णांतं तदाकृष्य, ज्यानादं च ततान सः। शात्रवाखर्वगर्वं च, सिंहनादसमानकम् ॥ १२३ ॥ चुक्षुभुस्तत्रसुः पेतुस्तद्धनुर्ध्वनिनाऽरयः। ततो राजा पुरःस्थाय, स्वयं सौमित्रिमैक्षत ॥१२४॥ उपलक्ष्य च तं प्रोचे, ज्यामुत्तारय धन्वनः। सौमित्रे ! मत्सुतापुण्यैः, प्रेरितस्त्वमिहागमः ॥१२५॥ अथो उत्तारयामास, मौर्वीं चापाद् बलानुजः। महीधरमहीनाथमानमद्विश्वमानितः ॥१२६॥ ततः सुस्थितचित्तः सन्, महीधरमहीधरः। रामचंद्रं नमश्चक्रेऽवतीर्य स्यन्दनोत्तमात् ॥१२७॥ अवोचच्च तव भ्रात्रेऽमुष्मै शार्ङ्गभृते मया। स्वयं जातानुरागेयं, प्राकल्प्यत पुराऽपि हि ॥१२८॥ अधुना तूचितो योगः, स्वर्णमण्योरिवैतयोः। मद्भाग्यैरेन संजज्ञे, संबंधोऽयं त्वया सह ॥१२९॥ इत्युक्त्वा स्वगृहे नीत्वा, रामसौमित्रिमैथिलीः। भक्त्या शार्ङ्गभृतोऽदत्त, वनमालां महीधरः ॥१३०॥ ततस्तस्योपरोधेन, तत्रैव कतिचिद्दिनान्। काकुत्स्थः सुस्थितस्तस्थौ, स्वकीय इव वेश्मनि ॥१३१॥ महीधरमथापृच्छ्य, गंतुं रामे समुद्यते। आपृच्छद्वनमालां तां, गंतुकामो बलानुजः ॥१३२॥ साऽप्युवाच प्रियतमात्मनैव सह मां नय। त्वद्वियोगच्छलं लब्ध्वा,

नेष्यत्येष रथांतकः ॥१३३॥ प्रत्यजल्पन् मुकुंदोऽपि, बंधोः शुश्रूषको ह्यहम्। शुश्रूषाविघ्नकृन्मा भूः, सहायांती कृशोदरि! ॥१३४॥ प्रापय्य वांछितं स्थानं, ज्यायांसं भ्रातरं प्रिये!। भूयोऽपि त्वां समेष्यामि, वास्तव्या हृदये त्वसि ॥१३५॥ अत्रार्थे शपथं यं यं, सौमित्रिः कुरुतेतराम्। महांतमपि सा तं तमनादृत्यैव धीगती ॥१३६॥ भूयोऽपि यदि नायामि, तदहं रात्रिभोजिनाम्। गृह्णेऽहसेति शपथं, कारयामास लक्ष्मणम् ॥१३७॥ ततश्च सीतासौमित्रियुक्तः सत्यश्रवाग्रणीः। कौशल्यानंदनोऽचालीदलंकर्म्मीणदोर्बलः ॥१३८॥ क्रमेण पुरतो गच्छन्, दंडकारण्यमासदत्। विधाय तत्र चावासं, तस्थौ गिरिगुहागृहे ॥१३९॥ –इतश्च लवणांभोधौ, रक्षोद्वीपोऽस्ति पूर्वरा। सर्वस्वर्णमयी लंका, भूचराणामगोचरा ॥१४०॥ तत्र रत्नश्रवःपुत्रो, दशास्यः कैकशीभवः। दोष्मंतौ तस्य बंधू स्तः, कुंभकर्णविभीषणौ ॥१४१॥ जित्वाऽसौ वरुणेंद्रादीन्, खेचरानपि दुर्जयान्। करोत्यकंटकं राज्यमष्टमः प्रतिकेशवः ॥१४२॥ पातालंलंकां लंकेशोऽन्यदाऽऽगात्तत्र खेचरम्। हत्वा चंद्रोदरं तस्य, राज्यं स्वीयां च सोदरीम् ॥१४३॥ नाम्ना चंद्रणखां प्रीतः, खचराय खरौजसे। अदात् खराय त्रिशरो, दूषणज्यायसे ततः ॥१४४॥ सिद्ध्यर्थं सूर्यहासासेः, खरचंद्रणखासुतः। शंबूको दंडकारण्यमागात् सुंदाग्रजोऽन्यदा॥१४५॥ सोऽथ क्रौंचरवातीरे, स्थित्वाऽतर्वंशगह्वरे। अधोमुखश्च न्यग्रोधशाखोद्बद्धपदद्वयम् ॥१४६॥ विद्यां जपितुमारेभे, सूर्यहासासिसाधिकाम्। सप्ताहाग्रद्वादशाब्द्या, या सिद्धिमुपगच्छति ॥ १४७ ॥ एवं साधयतस्तस्य, वल्गुलीस्थानसंस्पृशः। वर्षाणि द्वादशातीयुश्चत्वारो वासरास्तथा ॥१४८॥ अथागात् सूर्यहासासिस्तं दृष्ट्वा लक्ष्मणोऽग्रहीत्। भ्रमंस्तत्रागतस्तेनाच्छिदद्वंशीं स कौतुकात् ॥१४९॥ त्वक्सारगह्वरांतःस्थं, कृत्तं वीक्ष्याथ मस्तकम्। विषण्णात्मा ततो गत्वा, रामस्याग्रे शशंस तत् ॥१५०॥ सूर्यहासो ह्ययं खङ्गः, साधकोऽस्य हतस्त्वया। रामः साहात्र संभाव्यः, कश्चिदुत्तरसाधकः ॥१५१॥ अत्रांतरे

तु पौलस्त्यस्वसा चंद्रणखाह्वया । खरजायाऽऽययौ तत्राद्राक्षीच्च निहतं सुतम् ॥१५२॥ क्वासि हा वत्स ! शंबूक, शंबुकेति रुरोद सा । अपश्यत् केशवस्यांह्रिपद्धतिं च मनोहराम् ॥१५३॥ सुतो मे निहतोऽनेन, यस्येयं पदपद्धतिः । ततस्तस्यांह्रिपद्धत्या, क्रुद्धा चंद्रणखाऽऽययौ ॥१५४॥ यावत्कियदगात्तावत्, स सीताविष्णुमग्रतः । जगन्नेत्राभिरामं सा, रामचंद्रं निरैक्षत ॥१५५॥ रामं विलोक्य सा सद्यः, कामावेशवशाऽभवत् । कामावेशोऽङ्गनानां हि, महाशोकेऽपि कोऽप्यहो ॥१५६॥ स्वं रूपं साधु कृत्वाऽथ, रंतुं रामं ययाचसौ । हसन्नूचे सभार्योऽहमभार्यं भज शार्ङ्गिणम् ॥१५७॥ तयाऽयाचि तथैवैत्य, मत्याहेति बलानुजः । गता त्वमार्यमार्यैव, तत्कृतं वार्त्तयाऽनया ॥१५८॥ प्रार्थनाभंगतः सूनुवधाच्च कुपिताऽधिकम् । गत्वाऽशंसत् खरादीनां, तत्कृतं सा सुतक्षयम् ॥१५९॥ विद्याधरसहस्रैस्ते, चतुर्दशभिरावृताः । ततोऽभ्येयुरुपद्रोतुं, रामं सिंहमिवैणकाः ॥१६०॥ शीरिणं शार्ङ्गभृन्नत्वा, युद्धायायाचत स्वयम् । जययात्रासु शूरा हि, प्रकृत्यैव सदोद्यताः ॥१६१॥ वत्स ! गच्छ जयाय त्वं, भवेत्ते यदि संकटम् । तदा क्ष्वेडां ममाहुत्यै, कुर्या इत्याह तं बलः ॥१६२॥ पद्माज्ञां प्रतिपद्याथ, गत्वा शार्ङ्गी धनुःसखा । प्रावर्त्तत निहंतुं तान्, सौपर्णेय इवोरगान् ॥१६३॥ तद्युद्धे वर्द्धमानेऽथ, स्वपतेः पार्ष्णिवृद्धये । गत्वाऽतिसत्वरं साऽऽख्यादित्येवं दशकंधरम् ॥१६४॥ आयातौ दंडकारण्ये, मानुषौ पद्मलक्ष्मणौ । अनात्मज्ञावनैपातां, यासेयं ते यमालये ॥१६५॥ श्रुत्वा स्वसृपतिस्तेऽथ, सानुजः सवलोऽप्यगात् । सांप्रतं युध्यमानोऽस्ति, तत्र शार्ङ्गभृता सह ॥१६६॥ कनिष्ठबंधुवीर्येण, स्ववीर्येण च गर्वितः । विलसन् सीतया सार्द्धं, परतोऽस्ति स्थितो नलः ॥१६७॥ सीता तु रूपलावण्यश्रिया सीमेव योषिताम् । भ्रातः ! स्त्रीरत्नमेतत्तद्, ग्रहीतुं युज्यते तव ॥१६८॥ ततः पुष्पकमारुह्योपरामं रावणो ययौ । बिभ्यत्तस्थौ च दूरेऽस्माद्, व्याघ्रो हव्याशनादिव॥१६९॥ ततोऽवलोकनीं विद्यामादिदेश दशाननः ।

शीघ्रं विधेहि साहाय्यं, मैथिलिं हरतो मम ॥१७०॥ साऽऽख्यादादीयते सर्प्पराजमौलेर्म्मणिः सुखम्। नतु रामसमीपस्था, मैथिली त्रिदशैरपि ॥१७१॥ किंतूपायो ह्यसावत्र, गच्छेद्येनैष शार्ङ्गिणम्। तस्यैव सिंहनादेन, संकेतोऽस्त्यनयोरयम् ॥१७२॥ एवं कुर्व्विति तेनोक्ता, सा गत्वा परतस्ततः। रामावरजवत् साक्षात्सिंहनादं विनिर्म्ममे ॥१७३॥ तं श्रुत्वा जानकीं तत्र, मुक्त्वाऽऽगान् मंक्षु सीरभृत्। सीतामारोप्य यानेऽथ, रुदंतीं रावणोऽहरत्॥१७४॥ हा नाथ! राम हा शार्ङ्गिन्!, भ्रातर्भामंडलश्च हा। ह्रियेहठादनेनाहं, यथा श्येनेन वर्त्तिका ॥१७५॥ रुदतीमेवमाकर्ण्य, जानकीं रत्नजट्यथ। दध्यौ रामस्य पत्न्येषा, स्वसा भामंडलस्य च ॥१७६॥ अब्धेरुपरि शब्दोऽयं, रावणेन हृता ततः। अधावतासिमाकृष्य, राक्षसेश्वरमाक्षिपन् ॥१७७॥ खेचरस्याथ तस्याशु, विद्यां लंकेश्वरोऽहरत्। निकृत्तपक्षपक्षीव, सोऽपविद्योऽपतद्भुवि ॥१७८॥ रावणोऽगात्ततो लंकां, सीतां चोपवनेऽमुचत्। मंदोदर्या समं देव्या, सोऽथ स्माहेति मैथिलीम् ॥१७९॥ दासस्तेऽयं जनः सर्वो, मच्छुद्धांतमलंकुरु। त्वं जानकि! जनं चैनं, प्रीणासि न दृशापि किम्? ॥१८०॥ सीता त्ववाङ्मुखीभूयेत्यवोचत दशाननम्। कीनाशदृष्ट्या दृष्टोऽसि,हरन् मां सीरिगेहिनीम् ॥१८१॥ ततो दशास्यः स्वस्थानेऽगमन् मुक्त्वा तु यामिकान्। तां प्रलोभयितुं तत्र,विजयामादिदेश च ॥१८२॥ –इतश्च राममायांतं, वीक्ष्य रामाऽनुजोऽब्रवीत्। आर्यमार्य! विमुच्यैकां, किमागास्त्वमिहाहवे? ॥१८३॥ रामः प्रोवाच वत्साहमागां त्वत्सिंहनादतः। सोऽप्युवाच नहि भ्रातः!, सिंहनादो मया कृतः ॥१८४॥ सत्यमार्यामुपादातुमपनीतोऽसि केनचित्। सिंहनादस्य करणे, शंके स्तोकं न कारणम् ॥१८५॥ तद्गच्छ गच्छ मंक्ष्वेव, त्रातुमार्यां सहोदर!। हत्वाऽरीनहमप्येष, आगच्छन्नस्मि पृष्ठतः ॥१८६॥ एवमुक्तो ययौ रामः, स्वस्थानं तत्र मैथिलीम्। अपश्यन् प्रययौ मूर्च्छां, क्षणात् प्रापच्च चेतनाम् ॥१८७॥ मैथिलीमथ सोऽन्वेष्टुमाटाटच्यामितस्ततः। इतस्त्रिशिरसं रामानुजोऽहिंसीत् खरा-

तुजम् ॥१८८॥-तदागत्य ससैन्योऽपि, खेचरः स्माह शार्ङ्गिणम्। विराधस्तत्र भृत्योऽहमेतेषां त्वद्द्विषां द्विषन् ॥१८९॥ किंच-हत्वा पाताललंकेशं, तातं चंद्रोदरं मम। सप्तांगराज्यसहितां, तां पुरीं खरराड् ललौ ॥१९०॥ गुर्व्वी च नष्टा मे माता, विराधं नाम मां मुतम्। अन्यत्रासूत तस्याश्च, कश्चिन्मुनिरिदं जगौ ॥१९१॥ यदा जनार्दनो हंता, खरादीन् ससुतं तदा। स्थापयिता पितृराज्ये, इत्यागां त्वां निषेवितुम् ॥ १९२ ॥ लक्ष्मणोऽप्याह मत्स्वामी, सेव्यस्तेऽपि रघूद्वहः। पाताललंकाराज्ये तु, न्यस्तोऽस्यद्यैव भो मया ॥१९३॥ विरोधिनं विराधं स्वं, तं दृष्ट्वा माधवांतिके। रुष्टोऽढौकिष्ट युद्धाय, सौमित्रिं तर्जयन् खरः ॥१९४॥ चिरं युद्ध्वा च पद्(गो)विंदस्तस्य चिच्छेद मस्तकम्। प्रहरन् दूषणोऽप्याशु,जघ्ने शार्ङ्गभृता युधि ॥१९५॥ ततः समं विराधेन, माधवोऽभ्येत्य सीरिणे। वियोगार्त्ताय वृत्तांतं, विराधाख्यस्तमाख्यत ॥१९६॥ ततः पाताललंकायां, पद्मः पद्मानुजेरितः। ययौ तत्र विराधं च, पित्र्ये राज्ये न्यवीविशत् ॥१९७॥-किष्किंधायामथाहूतः, सुग्रीवेणागमद्बली। निहंतुं विटसुग्रीवं, तारादेवीरिरंसुकम् ॥१९८॥ सुग्रीवेण समं तत्र, युध्यमानमथो बली। निहत्य विटसुग्रीवं, सुग्रीवायार्पयत् प्रियाम् ॥१९९॥ सीताशुद्धिकृते भ्राम्यन्, सुग्रीवोऽथ सुयोधयुक्। तं रत्नजटिनं वीक्ष्य, रामपार्श्वे समानयत् ॥२००॥ रामं प्रणम्य सोऽप्यूचे, सती सीता दुरात्मना। जह्रे नक्तंचरेशेन, विद्या च मम कुप्यतः ॥२०१॥ समायाद् रामकार्याय, विराधोऽथ ससैनिकः। भामंडलोऽपि तत्रागाचतुरंगचमूवृतः ॥२०२॥ जांबवद्हनुमन्नीलनलादीनमितौजसः। सुग्रीवोऽपि स्वसामंतान्, समंतादप्यजूहवत् ॥२०३॥ तेषु खेचरनाथेषु, समायातेषु सर्वतः। (ग्रं० ७१००) हरीशो हरिसौदर्यमानम्यैवं व्यजिज्ञपत् ॥२०४॥ अवष्टंभैकशीलेंद्रः, श्रीशैलो ह्येष पात्रनिः। सीतोदंतकृते लंकामांजनेयो विसृज्यताम् ॥२०५॥ तेनाप्याज्ञापितो दत्वा, स्वमभिज्ञानमूर्मिकाम्। व्योमाध्वना क्षणेनापि, लंकायां मारुतिर्ययौ ॥२०६॥

तत्रोद्यानवरेऽशोकतरोर्मूले स ऐक्षत । ध्यायंतीं मैथिलीं राम, राम इत्यक्षरद्वयम् ॥२०७। सोऽथ शाखातिरोभूतः, सीतोत्संगेऽगु-
लीयकम् । अपातयत् तदालोक्याहृष्यद्रामभिवाथ मा ॥२०८॥ तदैव त्रिजटाऽभ्येत्य,शशंस दशमौलये। इयत्कालं विषण्णाऽऽसीत्,
सहर्षा त्वद्य जानकी ॥२०९॥ मन्ये विस्मृतपद्मेयं, रिरंसुरधुना मयि। गत्वा तद् बोध्यतां तूर्णमूचे मंदोदरीं स तु ॥२१०॥
ततश्च पत्युरादेशात्, कुलीनाऽपि हि तत्क्षणम् । व्रजित्वा देवरमणोद्याने शीतामुवाच च ॥२११॥ सीते! त्वमेव धन्याऽसि, यां
सिसेविषते भृशम् । भूर्भुवःस्वस्त्रयपतिः, पतिर्मे रूपतः स्मरः ॥२१२॥ किं पत्या ते हतास्त्रेण, क्ष्माचरेण तपस्विना । अद्यापि प्राप्यते
विद्याधरेशश्चेद् दशाननः ! ॥२१३॥ उपेत्यभजनीयं तं, त्वद्भजं भज रावणम् । अहमन्याश्च ते देव्यस्त्वदाज्ञां सुभ्रु! बिभ्रतु ॥२१४॥
सीताऽप्युवाच हे पापे!, भर्तृदौत्यविधायिनी । द्रष्टुमप्युचिता नासि, किमु संभाषितुं हले! ॥२१५॥ रामस्यांते तु मां विद्धि, शा-
र्ङ्गिणं त्विह चागतम् । खराद्यानिव हंतुं द्राक्, पतिं ते ससहोदरम् ॥२१६॥ उत्तिष्ठोत्तिष्ठ पापिष्ठे!, त्यज चक्षुष्पथं मम । जानक्या
तर्जिता चैषा, सरोषा प्रययौ द्रुतम् ॥२१७॥ अथोत्तीर्याञ्जनापुत्रो, नत्वा सीतामुदंजलिः । ऊचे विजयते देवि!, स्वामी रामः
सशार्ङ्गभृत् ॥२१८॥ त्वत्प्रवृत्त्यै समादिष्टः, स्वामिनाऽहमिहागमम् । मयि तत्र गते नाथ, इहैष्यति रिपूच्छिदे ॥२१९॥ पतिदूतं
हनूमंतं, तं ज्ञात्वा जनकात्मजा। सानंदा साऽप्यथाशीर्भिरनघाभिरनंदयत् ॥२२०॥ पावनेरुपरोधेन, कांतोदांतमुदाऽपि च। एको-
नविंशतिदिनस्यांते साऽकृत पारणम् ॥ २२१ ॥ –तदैव देवरमणोद्यानं भंक्तुं प्रचक्रमे। हनूमान् मत्तदंतीव, बलालोकनकौतुकात्
॥२२२॥ भज्यमानं तदुद्यानं, सयामिकमनीशवत् । प्रेक्ष्यैत्य रावणाय द्रागारक्षा आचचक्षिरे ॥२२३॥ आदिष्टोऽथ दशास्येन, स-
क्रुधा शत्रुजित्सुतः । तद्बंधायामुचत् पाशान्, पाशैः स्वं सोऽप्यबंधयत् ॥२२४॥ राज्ञोऽग्रे तेन निन्येऽथ, दलंस्तन्मौलिमंघ्रिणा ।

उत्पपात तडिद्दंड, इवोद्दोर्दंड आनिलिः ॥२२५॥ मार्यतां गृह्यतां चैप, इति ब्रुवति रावणे। तत्पुरीं सर्वतोऽभांक्षीद्धनूमान् पाददर्दरैः ॥२२६॥ क्रीडां विधायेति समीरसूनुरागम्य रामं च प्रणम्य चोचैः। शशंस तत्सर्व्वमखर्वगर्वद्विषन्नृपानेकपपंचवक्त्रः॥२२७॥ ततो रामः ससैन्योऽपि, व्योम्नि लंकापुरीं व्रजन्। समुद्रसेतू भूपालौ, बद्ध्वा वेलंधरे पुरे॥२२८॥ सुवेलाद्रौ सुवेलं च, हंसद्वीपे ततोऽगमत्। जित्वा हंसरथं तत्र, स्कंधावारं न्यवीविशत्॥२२९॥ –तदा रावणमागत्य, प्रणत्योचे, विभीषणः। कनिष्ठस्यापि मे भ्रातरद्यैकं क्रियतां वचः॥२३०॥ स्वं कलत्रं समादातुं,काकुत्थोऽयमुपस्थितः। आतिथ्यमिदमेवास्मै,तत्तद्दारार्प्पणं कुरु॥२३१॥ अथोचे रावणो रोपात्, त्वया कापुरुषोचितम्। ईदृशं ब्रुवता रे रे, दूषितं रक्षसां कुलम्॥२३२॥ विभीषणो बभाषेऽथ, दूरे तौ शीरिशार्ङ्गिणौ। तत्पत्तिर्हनुमानेको, दृष्टो देवेन किं नहि?॥२३३॥ अस्मद्द्वेषी द्विषत्पोषी, ज्ञातो भीरुश्च याहि रे। इत्युक्तो रावणेनागाद्रामसैन्ये विभीषणः॥२३४॥ लंकाराज्यं तदा तस्मै, प्रत्यपद्यत सीरिणा। संगतिर्महद्भिः सार्द्धं, न मुधा स्यात् कदाचन॥२३५॥ बहिर्निर्गत्य लंकाया, लंकाधिपचमूरथ। योद्धुं प्रववृते सार्द्धं, रामचंद्रस्य सेनया॥२३६॥ रामभ्रूसंज्ञयाज्ञप्ताः, श्रीशैलप्रमुखास्ततः। द्विषत्सैन्यमगाहंत, कासारं कासरा इव॥२३७॥ क्षयार्त्ताविव तौ कोपाटोपलोहितलोचनौ। न द्रष्टुमप्यशक्येतां, विशंतौ रामसैनिकैः॥२३८॥ रुपोत्पाट्याथ सुग्रीवः, शिलामेकां गरीयसीम्। मुमोच कुंभकर्णाय, सोऽपि तां गदयाऽपिपत्॥२३९॥ ततस्तं गदयाऽऽहत्य, कपीशं रावणानुजः। क्षिप्रं निक्षिप्य कक्षायां, लंकां प्रत्यचलत्ततः॥२४०॥ रावणिः श्रावणांभोद, इव गर्जन्नथोच्चकैः। प्लवंगान् प्लावयामास, निशातशरवर्षणैः॥२४१॥ डुढौके रक्तया शत्रून्,दशाऽपि हि दहन्निव। रामोऽथ कुंभकर्णाय, मेघनादाय शार्ङ्गभृत्॥२४२॥ रोषांध्यात् कुंभकर्णेनोत्क्षिप्तदोर्दंडपाशतः। आगादुत्पत्य सुग्रीवो, विहगः पंजरादिव॥२४३॥ दशाननानुजः क्रुद्धो,

रामेण युयुधे ततः। जनार्दनेन सार्द्धं तु, रावणी रणकोविदः ॥२४४॥ शस्त्राशस्त्रि चिरं कृत्वा, रक्षोभ्यां सह राघवौ। पातयित्वाऽग्रहीपातां, व्यक्तं नक्तंचरौ तकौ ॥२४५॥ पंचास्य इव संक्रुद्धो, दशास्यः समरांगणे। प्रविवेशाथ सावेशस्त्रासयन्नखिलान् कपीन् ॥२४६॥ तत्संमुखोऽचलद्रामचंद्र आस्फालयन् धनुः। दूरादभ्यागमत्तुल्योऽसुहृदां सुहृदामपि ॥२४७॥ कृतं स्वयं रणेनार्येत्युक्त्वा कृत्वा द्रुणारवम्। बाणप्रयाणकल्याणजयातोद्यरवोपमम् ॥२४८॥ सौमित्रिरभ्यमित्रीणो, रात्रिंचरपतेरभूत्। ततस्तौ संप्रजह्राते, अन्योऽन्यं जयकांक्षिणौ ॥२४९॥ चिरं युद्ध्वाऽखिलैः शस्त्रैर्जयार्थी यातुधानराट्। जघानामोघया शक्त्या, ततो वक्षसि केशवम् ॥२५०॥ तया भिन्नोऽपतत् पृथ्व्यां, तत्क्षणाद्रामसोदरः। सद्यस्तथैव रामोऽपि,ताडितः शोकशंकुना॥२५१॥ मरिष्यत्यद्य सौमित्रिस्तद्विना च तदग्रजः। तत्किं मे संगरेणेति, दशास्योऽगात् पुरीं ततः ॥२५२॥ विद्यया ते कपीशाद्याः, कृत्वा प्राकारसप्तकम्। काकुत्स्थौ वेष्टयित्वा त्वभूवन्नारक्षिका निशि ॥२५३॥ —इतश्च जानकीबंधुभामंडलमहाभुजम्। विद्याधरनरः कोऽपि, समभ्येत्येदमब्रवीत् ॥२५४॥ साकेताद् द्वादशस्वस्ति, योजनेषु पुरं वरम्। कौतुकमंगलं तत्र, चास्ति द्रोणधनो नृपः ॥२५५॥ कैकयीसोदरस्तस्य, विशल्याख्याऽस्ति कन्यका। तस्याः स्नात्रजलस्पर्शे,शल्यं निर्याति तत्क्षणात् ॥२५६॥ सौमित्रिरानिशांताच्चेत् ,तस्याः स्नानांभसोक्ष्यते। निःशल्यः संस्तदा जीवत्यन्यथा तु न जीवति ॥२५७॥ गत्वा भामंडलोऽप्याशु, सीरिणे तद्व्यजिज्ञपत्। तदर्थमादिशत् पद्मस्तमेव सह पावनिम् ॥२५८॥ ईयतुस्तौ विमानेनायोध्यां मानसरंहसा। प्रासादांके समैक्षेतां, शयानं भरतं नृपम् ॥२५९॥ तौ तस्याथ प्रबोधाय, गीतं चक्रतुरंबरे। उत्थाप्यंते हि राजानो, राजकार्येऽप्युपायतः ॥२६०॥ बुद्ध्वाऽथ भरतेनापि, कार्यं पृष्टोऽग्रतोऽनमत्। ततस्तं विष्णुवृत्तांतं, ततो जानकिरूचिवान् ॥२६१॥ सेत्स्यत्येतन्मया तत्र,गतेनेति बलानुजः। तद्विमानस्थितो गत्वा, तत्पुरे तेन

मातुलः ।।२६२।। विशल्यास्नानपानीयमर्थितोऽथ निवेद्य तम् । सोऽथाख्यद्यदियं बाल्ये, ज्ञानिना कथिता यथा ।।२६३।। हनिष्यति दशास्यं यस्तस्य पत्नी भविष्यति । उद्वाह्य स्त्रीसहस्रेण, सहितां तां ददाविति ।।२६४।। भामंडलोऽपि साकेते, मुक्त्वा भरतमुत्सुकः। समागात् स्वपरीवारं, विशल्यासहितस्ततः ।।२६५।। ज्वलद्दीपविमानस्थौ,भीतैरर्कोदयभ्रमात् । क्षणं व्यैक्षि स्वकैः सोऽधाद्विशल्या-मुपमाधवम् ।।२६६।। तया च पाणिना स्पृष्टात्तत्क्षणादपि केशवात् । निर्गत्य काप्यगाच्छक्तिः, तस्करीव परालयात् ।। २६७ ।। तत्स्नानपयसाऽन्येऽपि, बलादेशादथोक्षिताः । निःशल्या अभवन् दत्तालोचना इव साधवः ।।२६८।। ततस्ते कुंभकर्णाद्या, वैराग्यैक-भृतो भटाः । सर्वे संगपरित्यागाद्, बभूवुः स्वार्थसाधवः ।।२६९।। कन्यासहस्रसंयुक्तां, विशल्यां रामशासनात् । तदैव रावणा-रातिरुपायंस्त प्रमोदभाक् ।।२७०।। ज्ञात्वैतद्रावणो गत्वा, शांतिचैत्ये कृतोत्सवे । असाधयन्महाविद्यामाह्वया बहुरूपिणीम् ।।२७१।। संनह्य सर्वसन्नाह्या, युधेऽचालीद् दशाननः । शकुनैर्वार्यमाणोऽपि,दुर्निमित्तैश्च दुर्म्मदः ।।२७२।। कृत्वा बहूनि रूपाणि, डुढौके लक्ष्मणं प्रति । जघान रावणान् सोऽपि, चिंतितोपनतैः शरैः ।।२७३।। जनार्दनस्य तैर्बाणैर्विधुरो रक्षसां पतिः । स तस्मै चिक्षिपे चक्रं, युगांततपनोपमम् ।।२७४।। कृत्वा प्रदक्षिणां तत्तु, सौमित्रेर्दक्षिणे करे । अवतस्थे सहस्रांशुरिवोदयधराधरे ।।२७५।। ततस्तेनैव चक्रेण, शीर्षं लंकापुरीपतेः । पद्मलावं लुलावाशु,पद्मदृक् पद्मसोदरः ।।२७६।। दुर्गविद्याभुजभ्रातृबलैर्दृप्तोऽपि रावणः । कृत्वा कुलक्षयं श्वभ्रे, परस्त्रीव्यसनादगात् ।।२७७।। रामेण समुपादायि, सीता सच्छीलशालिनी । तदैव लंकाराज्ये चाभ्यपिच्यत विभीषणः।।२७८।। ततश्च रामसौमित्री, त्रिखंडभरतेश्वरौ । विभीषणगिरा तत्र, तस्थतुर्वत्सराणि षट् ।।२७९।। श्रुत्वाऽथ नारदमुखाद्, दुःखं मात्रोर्वि-योगजम् । अयोध्यामेत्य तौ राज्यं, सुचिरं चक्रतुर्युतौ ।।२८०।। प्रबंधा रावणादीनां, प्राग्जन्मपूर्वजादिकाः । रामादीनां च विज्ञेयाः,

श्रीपद्मचरितात् पुनः ॥२८१॥ प्रस्तुतं रामचंद्रस्य, वात्सल्येनेह तेन हि। तद्वृत्तं लेशतोऽदर्शि, त्यासक्तानां च दूषणम् ॥२८२॥ साधर्म्मिकाणामिति वत्सलत्वं,सुश्रावका! रामकृतं निशम्य। सम्यक्त्वनैर्म्मल्यकृते कुरुध्वं, भक्त्या तदेतन्निजशक्तितुल्यम् ॥२८३॥ साधर्म्मिकवात्सल्ये रामचंद्रकथा ॥ सांप्रतं द्रव्यवात्सल्यमुपसंहरन् भाववात्सल्यमुपदिशन्नाह—

**साहम्मियाण वच्छल्लं, एयं अण्णं वियाहियं। धम्मट्ठाणेसु सीयंतं, सव्वभावेण चोयए ॥२०८॥**

साधर्म्मिकाणां वात्सल्यमिति द्रव्यवात्सल्यमेतदनंतरोक्तं तथा अन्यदिति भाववात्सल्यं व्याख्यातमागमे एतदिति, किं तदित्याह—धर्म्मस्थानेषु—पूजानुष्ठानादिकृत्येषु सीदंतं—प्रमाद्यंतं श्रावकमिति प्रक्रमाद्गम्यं, सर्वभावेन—सर्वोद्यमेन नोदयेत्—सारणादिभिः शिक्षयेदिति ॥ ता एवाह—

**सारणा वारणा चेव, चोयणा पडिचोयणा। सावएणावि दायव्वा, सावयाणं हियट्ठया ॥२०९॥**

विस्मृतसद्धर्म्मकृत्यस्य ज्ञापनं सारणा १ तथा कुसंसर्गादिकृत्यस्य निषेधनं वारणा २ एतयोश्च सततं क्रियमाणयोरपि कस्यचित्प्रमादबहुलस्य नियमस्खलितादौ युक्तं किमीदृक्कुलोत्पन्नस्य तवेत्थं प्रवर्त्तितुमित्यादिवाक्यैः सोपालम्भं प्रेरणं नोदना३ तथा तत्रैव च असकृत् स्खलितादौ धिग् ते जन्म जीवितमित्यादिनिष्ठुरवाक्यैः गाढतरप्रेरणा प्रतिनोदना४, उक्तं च—पम्हुट्ठे सारणा वुत्ता, अणायारस्स वारणा। चुक्काणं चोयणा होइ, निट्ठुरं पडिचोयणा ॥१॥, इति, एताश्च सुश्रावकेणापि दातव्याः, न केवलं साधुनैवेत्यपिशब्दार्थः, केषामित्याह—श्रावकाणां हितार्थाय—उभयलोकसुखाप्रमादाय, श्रावकाणामित्यत्र बहुवचनं दुष्पमादोषेण प्रमादप्राचुर्यख्यापनार्थमिति ॥ यस्त्वप्रीतिभयात्साधर्म्मिकमुपेक्षते तं प्रतीदमाह—

रूसउ वा परो मा वा, विसं वा परियत्तउ। भासियव्वा हिया भासा, सपक्खगुणकारिया ॥२१०॥

सारणादौ क्रियमाणे कश्चिद्रुष्यतु वा-रोषं विदधातु परः-आत्मव्यतिरिक्तः, कश्चिच्च सहिष्णुतया तत्त्वान्वेपितया वा मा रौपीत्, कस्यचिद्गुरुकर्म्मणः सारणादिकं विषमिवोद्वेगकृत् भूत्वा परावर्त्तेत, तथाऽप्यनुग्रहबुद्ध्या भाषितव्या हिता-तिक्ताद्यौषधपानवत् सद्यो मिथ्या (ग्रं० । ८०००) त्वगदसूदनात् परिणामसुंदरा भाषा-सारणादिलक्षणा, किंविशिष्टा ?-स्वकपक्षगुणकारिका-साधुश्राद्धादिवर्गस्य पथ्याहाराभ्यवहारवत् प्रमादपरिहारेण कायस्योपचयादिगुणविधात्रीति ॥ यतः प्रमादवतां गरीयसामपि गरीयस्तरोऽनर्थः, तथा चाह—

पमायमइरामत्तो, सुयसायरपारओ। अणंतं णंतकायंमि, कालं सोऽविय संवसे ॥२११॥

प्रमादमदिरामत्तः-निद्राविकथादिप्रमादमद्येन मत्तः-ज्ञानाद्याचारविराधकत्वेन विशिष्टचैतन्यविकलः श्रुतसागरपारगः-संपूर्णद्वादशांगधरः सोऽपि च, किं पुनरबहुश्रुतः ?, अनंतकाये-साधारणवनस्पतिरूपेऽनंतं कालं-अनंतोत्सर्प्पिण्यवसर्प्पिणीलक्षणं संवसेत्, यदाह-"चउदसपुव्वी आहारगा य मणनाणि वीयरागा य। हुंति पमायपरवसा तयणंतरमेव चउगइय ॥१॥"त्ति, यतश्चैवमतोऽसौ श्रावको वक्तव्यः, कथमित्याह—

कल्लं पोसहसालाए, नवि दिट्ठो जिणालए। साहूणं पायमूलंमि, केण कज्जेण साहि मे ? ॥२१२॥

कण्ठ्यः॥ ततः किमित्याह—

तओ य कहिए कज्जे, जइ पमायवसं गओ। वत्तव्वो सो जहाजोग्गं, धम्मियं चोयणं इमं ॥२१३॥

सुगमं, नवरं 'धम्मियं'ति धर्म्मादनपेता धर्म्या सोम! महात्मन्नित्यादिश्रुत्याह्लादकृत्संबोधनरूपा तया सैव धार्म्मिका ताम् ॥ तामेव प्रेरणां षट्सूत्र्याऽऽह—

दुल्लहो माणुसो जम्मो, धम्मो सव्वण्णुदेसिओ। साहुसाहम्मियाणं च, सामग्गी पुण दुल्लहा ॥२१४॥
चलं जीयं धणं धन्नं, बंधुमित्तसमागमो। खणेण ढुक्कए वाही, ता पमाओ न जुत्तओ ॥२१५॥
न तं चोरा विलुंपंति, न तं अग्गी विणासए। न तं जूएवि हारिज्जा, जं धम्मंमि पमत्तओ ॥२१६॥
किण्हसप्पं करग्गेणं, घट्टए घुंटए विसं। निहाणं सो पमुत्तूणं, कायखंडं तु गिण्हए ॥२१७॥
ता सोम! तं वियाणंतो, मग्गं सव्वन्नुदेसियं। पमायं जं न मिल्हेसि, तं सोइहिसि भयन्नवे ॥२१८॥
एवंविहाहिं वग्गूहिं, चोएयव्वो य सावओ। भाववच्छल्लयं एयं, कायव्वं च दिणे दिणे ॥२१९॥

अत्र च प्रयोगैर्व्याख्या, तथाहि—जीवोऽयमेकदा मानुष्यं जन्म संप्राप्य पुनस्तदेव दुःखेन प्राप्नोतीति प्रतिज्ञा १ अकृतधर्म्मत्वे सति बह्वंतरायांतरितत्वादिति हेतुः २ यद्यद् बहुभिरंतरायैरंतरितं तत्तद् दुःखेन प्राप्यते, ब्रह्मदत्तचक्रवर्त्तिमित्रस्य लब्धवरस्य ब्राह्मणस्य एकदा चक्रवर्तिगृहे कृतभोजनस्य सकलभरतक्षेत्रवास्तव्यराजादिलोकगृहभोजनपर्यवसाने पुनश्चक्रवर्त्तिगृहे चोल्लकापरनामभोजनवारकवत् १ चाणक्यवरदत्तपाशकविपरीतपातवत् २ भरतक्षेत्रगतसर्वधान्यमध्यप्रक्षिप्तसर्षपप्रस्थकस्य जरत्स्थविरया पुनर्मीलकवत् ३ राज्याकांक्षिकुमारस्याष्टाधिकस्तंभशतसत्कप्रत्येकाष्टोत्तरशताश्रिनिरंतरद्यूतजयवत् ४ देशांतरगते महाश्रेष्ठिनि

तत्पुत्रनानादेशीयवणिग्हस्तविक्रीतप्रभूतरत्नसमाहारवत् ५ महाराज्यप्राप्तिहेतुचंद्रस्वप्नदर्शनाकांक्षिसुप्तकार्पटिकपुनस्तादृशस्वप्नलाभवत् ६ मंत्रिदौहित्रराजसुतसुरेंद्रदत्ताष्टचक्रारकपरिवर्त्तातरितराधावामलोचनवेधवत् ७ आर्द्रचर्मोपमगाढसेवालावनद्धमहाह्रदे राकानिशीथसमयप्रबलपवनोद्धूतैकच्छिद्रविनिर्गतकच्छपग्रीवोपलब्धनिशानाथतत्क्षणसंवलितसेवालपटलपर्यस्तितपुनस्तच्छिद्रलाभवत् ८ अपारपारपारावारांतर्वर्त्तिपूर्वापरांतविक्षिप्तयुगसमिलास्वयंछिद्रानुप्रवेशवत् ९ अनंतपरमाणुसंघातघटितमहाप्रमाणस्तंभनिष्पादनवच्चेति दृष्टांताः १०, ३। अनेकजात्यंतरप्राप्तिलक्षणबह्वंतरायांतरितं च मानुषं जन्मेत्युपनयः ४। तस्माद् दुर्लभं मानुष्यं जन्मेति निगमनं ५। तथा मनुष्यत्वलाभेऽपि दुर्गतिप्रसृतजंतुधरणाद् धर्म्मः सर्वज्ञदेशितो जीवस्य श्रोतुमपि दुर्लभ इति प्रतिज्ञा १। आलस्यादिबह्वंतरायांतरितत्वादिति हेतुः २। तथा चागमः "आलस्स १ मोह२ ऽवण्णा३ थंभा ४ कोहा ५ पमाय६ किवणत्ता ७। भय८ सोगा९ अन्नाणा१० वक्खेव ११ कुतूहला१२ रमणा१३ ॥१॥ एएहि कारणेहिं लद्धूण सुदुल्लहंपि माणुस्सं। न लहइ सुइं हियकरिं संसारुत्तारणिं जीवो ॥२॥"त्ति, अत्रापि दृष्टांतास्त एव३ उपनियनिगमने अपि प्राग्वदायोज्ये ५। तथा मनुष्यत्वजिनधर्म्मप्राप्तावपि साधुसाधर्म्मिकाणां पुनः सामग्री अतीव दुर्लभेति प्रतिज्ञा१ दुष्षमादोषेण धार्म्मिकजनानां स्वल्पत्वादिति हेतुः २ उक्तं च—"दूरे ता चारित्ती तहाविहा लिंगिणो न सव्वत्थ। संपइ सम्मद्दिट्ठीवि दुल्लहो सुत्तनिद्दिट्ठो ॥१॥"त्ति, दृष्टांतादित्रयं पूर्ववदिति श्लोकार्थः ॥ ततश्च यावदिति सामग्री समग्राऽप्यस्ति तावद्धर्म एव यत्नो विधेयः, यतः—चलं—क्षणविनश्वरं जीवितं—आयुर्बह्वपायाधीनत्वात्, यथा—"शस्त्रं व्याधिर्विषं च ज्वलनजलभयव्यालवेतालशोकाः, शीतोष्णक्षुत्पिपासागलविवरमरुन्मूत्रविष्ठानिरोधाः। नानाक्षुद्रोपघाताः प्रचुरभुजि रुजः श्रांतिगात्राभिघाताः, वैधान्येतानि सद्यश्चिरमपि घटितं जीवितं संहरंति ॥१॥"

तथा धनं—गण्यादिपण्यं चतुर्विधं, धान्यं तु शाल्यादिशस्यमनेकविधं, उपलक्षणमेतत् क्षेत्रादिवस्तुजातस्य, तदपि चलमेव, बहुभिः रुपघातितत्वात्, यथा—“दायादाः स्पृहयंति तस्करगणा मुष्णंति भूमीभुजो, गृह्णंति च्छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात्। अंभः प्लावयति क्षितौ विनिहितं यक्षा हरंते हठाद्, दुर्वृत्तास्तनया नयंति निधनं धिग्बह्वधीनं धनं ॥१॥” तथा बंधु इत्यादि, बंधवो—ज्ञातयो मित्राणि—सुहृदस्तेषां च समागमोऽपि कर्मपरतंत्रत्वात् चल एव ‘एगत्थ रुक्खे व कुडुंबवासे, कालं कियंतंपि खगव्व बंधू। ठाऊण गच्छंति चउग्गईसुं, चउदिसासुं व सकम्मबद्धा ॥१॥” तथा क्षणेन ढौकते व्याधिः, शरीरस्येति गम्यते, प्रायो दुष्षमायाः मसातबहुलत्वान्मनुष्याणां अतस्तच्चलमेव, यथा “सूलजलोयरजरकाससासखसदुट्ठकुट्ठमाईहिं। खज्जइ खणेण देहं कट्ठं व घुणेहिं खज्जंतं ॥१॥” एवमवगम्य ता इति तस्मात्कारणाद्विवेकिनां प्रमादो—धर्म्मानादरलक्षणो न युक्तो—नोचितः, कर्त्तुमिति ॥ अपि च—कण्ठ्या, नवरं ‘जं धम्मंमि पमत्तत’त्ति जीवो हि धर्म्मे प्रमत्तः सन् देवगत्यादिलाभविनाशेन यन् मनुष्यत्वप्राप्तिहारणरूपं मूलच्छेदमप्यात्मनः करोति न तच्चौरादयः सुष्ठु दुष्टा अपि कुर्व्वंतीति, यदार्षं—“माणुसत्तं भवे मूलं, लाभो देवगई भवे। मूलच्छेएण जीवाणं, नरगतिरिक्खत्तणं धुवं ॥१॥”ति, एवमुच्यमानोऽपि यः प्रमादं न मुंचेत् स किं करोतीत्याह—सुगमः, निगमयितुमाह—ता इति तस्माद्धेतोः हे सौम्य! श्रद्धासुंदराशय त्वं विजानन्नपि मार्गं, मोक्षस्येति शेषः, सम्यग्ज्ञानादित्रिकरूपं सर्वज्ञदेशितं मनुष्यत्वादिसामग्रीसुदुर्लभतासमन्वितं प्रमादं यन्न मुंचसि तच्छोचिष्यसि भवार्णवे, गत इति शेषः, यदागमः—“इय दुल्लहलंभं माणुसत्तणं पाविऊण जो जीवो। न कुणइ पारत्तहियं सो सोयइ संकमणकाले ॥१॥ जह वारिमज्झछूढोव्व गयवरो मच्छउव्व गलगहिओ। वग्गुरपडिओ व मिओ संवट्टइओ जह व पक्खी ॥२॥ सो सोयइ मच्चुजरासमुच्छओ तुरियनिद्दपक्खित्तो। तायारम-

विंदंतो कम्मभरपणुल्लिओ जीवो ॥३॥ तं तह दुल्लहलंभं विज्जुलयाचंचलं च माणुस्सं । लद्धूण जो पमायइ सो काउरिसो न सप्पुरिसो ॥३॥"त्ति ॥ भाववात्सल्यमुपसंजिहीर्षुराह—पाठसिद्धः ॥ भोजनद्वार एव कृत्यांतरमाह—

नेव दारं पिहावेई, भुंजमाणो सुसावओ । अणुकंपा जिणिंदेहिं, सड्ढाणं न निवारिया ॥२२०॥

सुगमः । एनमेवार्थं सविशेषं भावयन्नाह—

सव्वेहिंवि जिणेहिं दुज्जयजियरागदोसमोहेहिं । अणुकंपादाणं सड्ढयाण न कहिंचि पडिसिद्धं ॥२२१॥

गतार्थः, नवरं 'न कहिंचि पडिसिद्धं'ति न कस्मिंश्चिदंगोपांगादिसूत्रे प्रतिषिद्धं, प्रत्युत देशनाद्वारेण राजप्रश्नीयोपांगे केशिगणभृतोपवर्णितं, तथा च तत्सूत्रं—"मा णं तुमं पएसी ! पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासि, जहा वणसंडेइ वा जाव खलवाडेइ वा, तए णं पएसी राया केसिं कुमारसमणं एवं वयासी—नो खलु भंते ! अहं पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जामि जहा वणसंडे इवा जाव खलवाडेइ वा, अहं सेयवियापामोक्खाणं सत्तगामसहस्साणं चत्तारि भागे करिस्सामि, एगं भागं बलवाहणस्स दलयिस्सामि, एगं भागं कुट्ठागारे छुभिस्सामि, एगं भागं अंतेउरे दलयिस्सामि, एगेणं भागेणं महइमहालियं कूडागारसालं करिस्सामि, तत्थ णं बहूहिं पुरिसेहिं दिन्नभयमिच्चवेयणेहिं विउलं असणपाणखाइमसाइमं उवक्खडावित्ता बहूणं समणमाहणभिक्खुयाणं पंथियपहियाणं परिभाएमाणे २ बहूहिं सीलव्वयपच्चक्खाणपोसहोववएसेहि य जावविहरिस्सामित्तिकट्टु जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगएत्ति" ॥ कर्तव्यशेषमाह—

पेससुण्हाइवग्गस्स, काउं भोयणचिंतणं । भुंजए जं च साहूणं, दिन्नं असणमाईयं ॥२२२॥

कण्ठ्यः, अत्रैव विधिशेषमाह—

अणंतकायं बहुबीजवत्थुं, तुच्छोसहिं चेव विवज्जिऊणं ।
विगईण दव्वाण य काउ संखं, भुंजेइ तत्तो समयाविरुद्धं ॥२२३॥

अनंतानां—अपर्यंतानां साधारणजंतूनां कायो—देहोऽनंतकायः कंदादिवनस्पतिविशेषः,तत्र—सव्वा य कंदजाई सूरणकंदो य वज्जकंदो य । अल्लहलिद्दा य तहा अल्लं तह अल्लकच्चूरो ॥१॥ सत्तावरी विराली कुमारि तह थोहरी गलोई य । ल्हसणं वंसकरेल्ला गज्जर तह लूणओ लोढा ॥२॥ गिरिकन्न किसलपत्ता खरिंसुया थेग अल्लमुत्था य । तह लूणरुक्खछल्ली खिल्लहडो तह अमयवल्ली ॥३॥ मूला तह भूमिरुहा विरुहा तह ढक्कवत्थुलो पढमो । सूरयवल्लो य तहा पल्लंको कोमलंबिलिया ॥४॥ आलू तह पिंडालू एमाइ अणंतकाइयं सव्वं । नाऊण विवज्जिज्जा लक्खणजुत्तीहिं समयाओ ॥५॥ गूढसिरसंधिपव्वं समभंगमहीरगं च छिन्नरुहं । साहारणं सरीरं विन्नेयं बुद्धिमंतेहिं ॥६॥ तथा बहुबीजवस्तु—पंपोटरिंगणादि द्रव्यं, उपलक्षणत्वाच्छेषाभक्ष्यद्रव्याणां परिग्रहः, तानि चामूनि—पंचुंबरि चउ-विगईअणाय (ग्रं०। ८१००) फलकुसुमहिमविस करे य । मट्टी राईभोयण घोलवडा रिंगणा चेव ॥१॥ पंपोटकायवाइंवाइंगणविल्लपिं-चुयाइं च । बावीसं दव्वाइं अभक्खणीयाणि सड्ढाणं ॥२॥ तथा तुच्छाः—असारा औषध्यः कोमलमुद्गादिशिंब्यः, ता अपि अतृप्ति-हेतुत्वाद् बहुसावद्यत्वाच्च विवर्ज्याः, तथा विकृतीनां पारिशेष्यन्यायाद्भक्ष्याणां दुग्धादीनां दिनगतप्रत्याख्यानांतःसंक्षिप्तानां तथा द्रव्याणां—सचित्तादीनां संख्यां कृत्वा स्वनियमितवस्तूपयोगरूपां ततो भुंक्ते, कथमित्याह—'समयाविरुद्ध'मिति समये—सिद्धांते

यज्जंतुमिश्रफलपुष्पपत्रसंसक्तसंधानादिकं विरुद्धं दूषितं, तत्परित्यागेनाविरुद्धं यथा भवति तथाऽभ्यवहरतीति ॥ द्वारं। सुसंप्रदायादिति सद्विधेयः, प्रस्ताव एषोऽभिहितस्तृतीयः। मध्याह्नकृत्यानुगतो गृहस्थधर्मप्रथायां दिनकृत्यवृत्तौ ॥१॥ मध्याह्नसमयाधीनव्यवहारशुद्धिभोजनविधिवर्णनस्तृतीयः प्रस्तावः ॥

—: समाप्त :—

## प्रस्तावत्रिकलक्षणोऽयं प्रथमो विभागः।

—: इति :—

श्रीतपोगच्छनायकश्रीमद्देवेन्द्रसूरिवरविरचितायाः स्वोपज्ञविवरणसमलङ्कृतायाः

श्रीश्राद्धदिनकृत्यविवृत्याः प्रथमोभागः समाप्तः ।

॥ ॐ ॥

અમદાવાદ-આપડાની પોળ-નિવાસી

શેઠ મોહનલાલ છોટાલાલ તરફથી

તેમના ધર્મપત્ની

માણેકબાઇએ

નવપદજીની ઓળી

જ્ઞાન પંચમી, મૌન એકાદશી, વીશ-સ્થાનક અને રોહિણીના તપ કરેલા

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિ નિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે વિક્રમ સં. ૧૯૯૫